हविर्धानान्निःसर्पन्तम् अध्वर्युं प्रस्तोता दक्षिणेन हस्तेन अन्वारभेत। तमुद्गातोद्गातारं प्रतिहर्ता, तं ब्रह्मा, ब्रह्माणं यजमान इत्येवं संसर्पन्त एव गच्छेयुः । तदुक्तम्—पञ्चर्त्विजः संरब्धाः सर्पन्तीत्येतानाह । दोषवचनात् व्यवच्छेदाज्जुगुप्सेरन् (द्रा० श्रौ० ३. ३. १३-१४) इति अध्वर्युणा हुते गत्यानुपूर्व्येणोदकमालभ्य सव्येन पाणिना वेकुरा नामासि 5 सूर्यो मा (तां० ब्रा० १.३.१-२) इति च प्रवृत्तहोमौ कुर्युः । ऋचं साम (सा० ३६९) इति स्वाहान्तेन तृतीयं होममधिकमुद्गाता कुर्यात् । असंजातविरोध्यवस्थायां दक्षिणेन हस्तेनान्वारम्भात् तद्विच्छेदस्य चायुक्तत्वात् अर्थप्राप्तोऽत्र सव्येन होमः । आपस्तम्बेन तु होमानन्तर-मन्वारम्भ उक्तः । तस्मिन् पक्षे दक्षिणेनैव पाणिना होमं कृत्वा 10 जपेयुः । ब्रह्माहं गायत्रीमिति पर्यूह (ला० श्रौ० १.११.१५) इत्यन्तम् ॥

[प्रस्तोत्रादीनां सर्वस्तोत्रार्थमासनोपवेशननियम उपगाननियमश्च]

ततोऽध्वर्युमनुसर्पन्तः सव्येन पाणिना दक्षिणा पृथक् तृणानि निरस्येयुर्योऽद्य सौम्य (तां० ब्रा० १.३.३) इति । तेनैव पाणिना अप उपस्पृश्य चात्वालदेशं प्राप्य अध्वर्यावुपविष्टे तस्मात् 15 प्रत्यग्यो म आत्मा (तां० ब्रा० १.३.३-४) इति उपविशेयुः । प्रस्तोता प्रत्यङ्मुखः, उद्गाता उदङ्मुखः तस्य पश्चिमेन गत्वा दक्षिणदेश-मवान्तरादिशं पश्यन् प्रतिहर्ता सव्याधरानुपस्थान् कृत्वा द्यावापृथिव्योः 18

---

2. My K. संसर्पेयुः, L सर्पन्तः for संसर्पन्त एव गच्छेयुः

4. LV² °च्छेदा, V¹ °च्छेदो for °च्छेदात्

5. T. वेकुराणामसि सूर्य for वेकुरा......सूर्यो; KMy B वेकूरा for वेकुरा

6. KMyB जुहुयुः for कुर्युः

8. KMyB Om. तद्

10. LV¹⁻² My हुत्वा for कृत्वा

13. LV¹⁻² °सर्पन्तं for °सर्पन्तः ; अध्वर्युम्......See ला० श्रौ० १.११.१६-२९

17. V¹ before तस्य adds उद्गाता and L उद्गातोदङ्मुखः

संधिमीक्षमाणाः समानि मुखानि धारयन्तः एवं सर्वस्तोत्रेष्वासीरन्। अध्वर्युवर्गव्यतिरिक्ताः चतुरवराध्या उपगातारः प्रस्तोतृप्रतिहर्त्रन्तरयोरुपविश्य प्रस्तावादि भक्त्यन्तरालानि मन्द्रस्वरेण हो इत्येतेनाक्षरेण छादयन्त उपगायेयुः। ओमिति यजमानः। निधनात्
5 पूर्वं नोपगानम्। विच्छेदाभावात्। एवं सर्वस्तोत्रेषु॥

[बहिष्पवमानस्तोत्रगानविधौ प्रस्तावविभक्तयः स्वरनियमाश्च]

अध्वर्युणा दीयमानं प्रस्तरं प्रस्तोता प्रतिगृह्य ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्त्वा उद्गात्रे प्रयच्छेत्। स प्रस्तरेण दाक्षिणां जङ्घाम् उपहत्याग्नेस्तेजसा(तां० ब्रा० १.३.५) इति स्तोमं युञ्ज्यात्। अन्नं करि-
10 ष्यामि(तां० ब्रा० १.३.६)इति जपेत्। चत्वालोदपात्रे तूष्णीमवेक्षेरन्। सामासि प्रतिमा भाहीत्यादित्यं तूष्णीं वा। बहिष्पवमानस्य पुष्कलो गायत्री सोम इत्यृष्यादयः इमे वै लोका गायत्रम् (तां० ब्रा० ७.१.१) इति गायत्रविधिब्राह्मणम्। स तु वै यज्ञेन यजेत(तां० ब्रा० ६.८.१) इति बहिष्पवमानस्य ब्राह्मणम्। मनो हिंकार (जै० उ० ब्रा० १.११.१.३)
15 इति भक्त्युपासनविधिब्राह्मणम्। धूर्गानस्य प्रजापतिरकामयत (ष० विं० ब्रा० २.१.१) ता वा एता (ष० विं० ब्रा० २.२.१) इति षड्विंशब्राह्मणम्। रेतस्या गायत्री त्रिष्टुब्जगत्यनुष्टुप् पङ्क्तिर्द्वे गायत्र्यौ रथन्तरवर्णेति धुराश्छन्दांसि। प्रजापतिरग्निरिन्द्रः सूर्यः
19 प्रजापतिः सोम इति देवताः। अन्नमनसी प्राणापानौ चक्षुषी श्रोत्रे

---

2. K My चत्वारः for चतुरवराध्याः
3. V² °न्तरालादि L °न्तारा तानि for °न्तरालानि
4. L आच्छादयन्तः for छादयन्तः
7. अध्वर्युणा, See ला० श्रौ० १.१२.१-६
11. B पाहि, V² My भासि for भाहि
13. LV² गायत्रं, MyK गायत्रस्य for गायत्र°; V¹⁻² LT, विधायक° for विधि°
15. KMy Om. विधि°
18. LV¹⁻² Om. धुराः
19. TV¹⁻²L Om. अन्नमनसी……समानोदानाविति

वाक् समानोदानाविति सर्वं पृथिव्यन्तरिक्षं द्यौः सर्वं दिश इति ध्यानानि। प्रस्तावस्य प्राणो देवता। आदित्य उद्गथिस्य। अन्नं प्रतिहारस्येत्युषस्तिब्राह्मणे दर्शितम्। तत् सर्वं स्तुतिष्वनुसंधेयम्। विनर्दिसाम्नो वृणेऽपशव्यम् (जै० उ० ब्रा० १.१६.३.८) इत्यग्नेरित्यनुवाकोक्तं च। तत्र स्वधापितृभ्यः इत्यादिष्वपि वाक्येषु आगायानि 5 इति पदमनुषञ्जनीयम्।

अथ सकृद्धिंकृत्य बहिष्पवमानेन स्तुवीरन्। सर्वत्र हिंकारकाले शुनां समुपवेशनं कुर्युः। उपास्मै गायता नर (सा० ६५१-९) इत्याद्यासु नवसु ऋक्षु प्रत्यृचं गायत्रं गेयम्। बहिष्पवमानं प्रकृत्येमे वै लोका गायत्रम् (तां० ब्रा० ७. १. १) इत्यादिना गायत्रस्वरूपवर्णनात्। 10 गीतिविकारो गायत्रस्य धुरः स्तोत्रीयानुरूपयोर् (ला० श्रौ० सू० ७. १२.१-२) इति बहिष्पवमानस्यर्चोऽधिकृत्य वचनाच्च। तस्य सर्वत्राद्यः पाद ओंकारान्तः प्रस्तावः। आद्यपात् प्रस्ताव ओंकारान्त (आ० ब्रा० १.१.१६) इति श्रुतेः। गायत्रस्य पदेन प्रस्तावः सर्वत्र। अष्टाक्षरेणेति धानंजय्य (ला० श्रौ० सू० ७. १०. १५-६) इति 15 वचनाच्च। सर्वेषां स्तोत्रसाम्नामोमित्युक्त्वोद्गातोद्गीथमाददीतेति पूर्वमेव प्रतिपादितम्। परमेष्ठी देवी गायत्री परमात्मेत्योंकारस्य ऋष्यादयः। क्रुष्टादिस्वराणां क्रुष्टः प्राजापत्य इत्युक्ता देवताः। रेतस्यां पवमानायेन्दवा इत्येवं त्रिरुद्गृह्णीयादिति धूर्गानाख्यो विशेष उक्तः। अभिदेवाँ३इयेत्यादि धियो यो नः प्रचोदयादित्यादिवद्गेयं गायत्रेषु प्रस्तावादूर्ध्व- 20 मार्चिकं गानं मनसा कुर्वन्नोंकारेणार्चिकस्वरेण वाचा गायेदुद्गाता। तथा च ब्राह्मणम्—अनिरुक्तं गेयमेतद्वै गायत्रस्य क्रूरं यन्निरुक्तम् (तां० ब्रा० ७. १. ८) इति। सूत्रं च—शेषमुद्गाता मनसा तु स्वभक्ति- 23

---

1. KT B दिवं for द्यौः; My Om. द्यौः
3. उषस्तिब्राह्मणे See छा० उ० १.११.४-६
7. सकृद् See ला० श्रौ० सू० १.१२.७
16. KMy Om. स्तोत्र°
18. L रेतस्यायां for रेतस्यां

मोंकारं तथा स्वरं वाचा (ला० श्रौ० सू० ७. १०. २०) इति। हिम् आ
इति हिंकारमुद्गाता रेतस्यायां न ब्रूयात्। अहिंकृता प्रथमा रेतस्ये-
(ला० श्रौ० १. १२. ८)ति वचनात्। सादिति निधनं त्रयो ब्रूयुः।
उद्गातैव वा। तथा निदानप्रकरणे सूत्रम्—गायत्रे तु विकल्पः।
5 सर्वे चोद्गाता वेति। गायत्र-प्रकरणे च सर्वे वा निधनं न्यायादिति
रेतस्याया ऊर्ध्वं हिंकारमप्युद्गाता वाचा ब्रूयात्। ऊर्ध्वं रेतस्याया
द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयाद्(ला० श्रौ० सू० ७. ११. ३) इति वच-
नात्। मनसा तु प्रतिहर्ता। हिंकारो वै गायत्रस्य प्रतिहारः। स मनसा
ध्येयः (तां० ब्रा० ७. १. ४-५) इति श्रुतेः। द्वितीयायामशिश्रादेयु-
10 र्वन्दे वायेत्यक्षरव्यत्ययः। आर्चिकगाने विशेषः। तत्सवितुर्गायत्रवद्
गेयम्। सामिति निधनम्। तृतीयायां शांजानायेत्यादिरार्चि-
कगाने विशेषः। तथा स्वरमोंकारं ब्रुवाणः षाध इत्येतन्निरुक्तं
गायेत्। सुवरिति निधनम्। चतुर्थ्यामृच एवाक्षराणीत्यष्टाक्षरः।
प्रस्तावार्थं तत्सवितुर्वरेणयोमितिवद्यविद्युतातियारुचोमिति विकर्षेण
15 प्रस्तावः। पारिष्टोभान्तायेत्यादिरार्चिकगाने विशेषः। सोमाः शुक्रा
इत्येतदार्चिकं वाचा गायेत्। इडेति निधनम्। पञ्चम्यामावाजं
वाज्यक्रमीदित्यादिरार्चिकगाने विशेषः। तस्या द्वितीयं पादं नुषा
18 इति च निरुक्तं ब्रूयात्। वाक् इति निधनम्। षष्ठ्यामृधक्सोम-

---

3. L सर्वे V² तयोः for त्रयो
5. V²LKMy चेति for वेति ; V²LKMy वो° for चो°
6. V¹ अथ for वाचा
9. V¹ आशि°, T. अधि for अशि° ; T. after द्वितीयायाम् ins. आथर्वणौ
10. My. K यदेति for येति
12. V¹ एवं निरुक्तं for एतन्निरुक्तं
13. My BK ऋचि for ऋचः ; My BKA Om. एवाक्षराणीति
14. V¹⁻²L Om. इति after रुचोम्
15. My K प(My पा)रिष्टोभाय for पारिष्टोभान्ताय
17. T आर्चिके for आर्चिक ; KMyB आर्चिके for आर्चिकगाने ; L वारं, V² पारं for पादं

सुवस्तयोमिति विकर्षेण प्रस्तावः। संजग्मानो इत्यादिरार्चिके विशेषः। आकार एव निधनम्। अतः परासु धूर्गानाभावात् तत्सवितुर्गायत्राभावान्न विशेषः। उत्तमा रथन्तरवर्णा। तस्यामास्तां गावो इति चतुर्भिरक्षरैश्चतुःकर्षणं कृत्वा न धेनावा इति पुनः कर्षणं कुर्यात् इत्यार्चिकगाने विशेषः। तत्तु मानसम्। वाचिके तु भाशब्देन 5
चतुष्कर्षणं कृत्वा शेषं तथा स्वरेण ओंकारेण गायेत्। हिम्मित्याविसृष्टं हिंकारं ब्रूयात्। रथन्तरवर्णोत्तमा आविसृष्टहिंकरा (ला० श्रौ० १.१२.१०) इति वचनात्। एवं त्रिवृता बहिष्पवमानेन स्तुत्वा अन्नमकरम् (तां० ब्रा० १. ३. ७) इत्युद्गाता जपेत्। प्रस्तरे न्यस्तहस्तं यजमानं श्येनोऽसि (तां० १. ३. ८) इति वाचयेत्। उद्गातार उपह्वयध्वम् इत्युक्तवन्तं 10
यजमानमुपहूत इत्युपह्वयेरन्। ईक्षकान् सहकारिणश्च प्रेक्षमाण उद्गाता संवर्चसा (तां० १. ३. ९) इति जपेत्। आदित्यं पश्यन् नमो गन्धर्वायेति धेहीं-(तां० १. ३.१०)त्यन्तं जपेत्। प्रस्तरात् तृणमादायोभयतः परिच्छिद्य मध्यभागं चात्वले यदि स्तुतमिति प्रास्येत् तत्रैव समुद्रं व (ला० श्रौ० २. १. ७) इत्युदपात्रं निनयेत्। बहिर्वेद्युदङ्मुख- 15
स्त्रीणि पदानि पञ्च सप्त नव वोत्क्रम्य दक्षिणपार्श्वेनावृत्य अग्नीध्रीयस्य पश्चादुपविश्य बहिष्पवमानस्यर्चामुपरिष्टाज्जपं कुर्युः। मन्द्रं प्रातःसवने स्तुवीरन्। उत्तरोत्तरमुत्तरयोः सवनयोः एतस्यां वेलायां भुञ्जीरन्। राजानं भक्षयित्वा तदहर्ग्राम्यमन्नं नाश्नीयादिति श्रुत्यन्तर-
वचनात्॥ 20

---

1. MyB शंजग्मानो for संजग्मानो; My BKA Om. आदिः
4. V² Om. न धेनावा…चतुष्कर्षणं
5. V¹ KAMy BT सः for तत्; KAMy Om. मानसम्
8. स्तुत्वा…See ला० श्रौ० १.१२.१२-१६
14. तत्रैव…See ला० श्रौ० २.१.७-९
16. KMyB Om. पञ्च; LKMyBV² Om. वा; LV¹⁻²T °पार्श्वे for पार्श्वेन
17. KMy Om. ऋचाम्; मन्द्रं…See ला० श्रौ० २.२.६-८
19. My Om. श्रुत्यन्तर°

## [ धिष्ण्याद्युपस्थानम् ]

अथ सवनीयवपायां हुतायां धिष्ण्योपस्थानं कुर्युः । सम्राडसी- (तां० ब्रा० १. ४. २)त्याहवनीयमुपस्थायोदङ्मुखा गत्वा तुथोऽसी- त्यास्तावमुपतिष्ठेरन् । नभोऽसीति चात्वालम् । असंमृष्टोऽसि (तां० ब्रा०
5 १. ४. ३)इति शामित्रम् । विभुरसि(तां० ब्रा० १. ४. ४)इत्याग्नी- ध्रीयम् । तमुत्तरेण सर्वदा गच्छेयुः । उत्तरयोः सवनयोः पृष्ठ- होमार्थं गमनं हविर्धानगमनं चाग्नीध्रीयस्य दक्षिणतः । सदसः पूर्वस्मिन् द्वारे प्रत्यङ्मुखाः स्थित्वा वह्निरसि (तां० ब्रा० १. ४. ५) इति होतुर्धिष्ण्यमुपतिष्ठेरन् । श्वात्रोऽसि(तां० ब्रा० १. ४. ६) इति मैत्रा-
10 वरुणस्य उदङ्मुखा भूत्वा तुथोऽसीति ब्राह्मणाच्छंसिनः । उशिगसीति पोतुः । अन्धारिरसीति नेष्टुः । अवस्युरसि(तां० ब्रा० १. ४. ७) इति अच्छावाकस्य । द्वार्येव स्थित्वा शुन्ध्युरसि(तां० ब्रा० १. ४. ८) इति मार्जालीयम् । ऋतधाम (तां० ब्रा० १. ४. ९) इत्यौदुम्बरीम् । समुद्र (तां० ब्रा० १. ४. १०) इति ब्रह्मसदनम् । उत्तरेण सदो गत्वा
15 अन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिर् (तां० ब्रा० १.४.११) इति पुराणगार्ह- पत्यम् । अज (तां० ब्रा० १. ४. १२) इति पुराणाहवनीयम् । सगरा (तां० ब्रा० १.४.१३) इति दक्षिणाग्नेरायतनम् । कव्य (तां० ब्रा० १.४.१४) इति दक्षिणवेद्यन्तम् । तत्रैव तिष्ठन्तः सर्वानाहवनीयादीन् वीक्षमाणाः पातमा (तां० ब्रा० १. ४. १५) इति समस्तोपस्थानं कुर्युः ॥

20 ## [ सद उपवेशनोपह्वानभक्षणानि ]

सदसोऽपरया द्वारा द्वारबाहुद्वयम् ऋतस्य द्वारौ स्थ इति पाणिभ्यां
22 युगपत् संमृज्य मा मा संताप्तम् (तां० ब्रा० १. ५. १)इति सदः प्रविश्य

2. V¹⁻²L Om. अथ ; सम्राड्···See ला० श्रौ० सू० २.२.१२-२६
5. MyBK Om. शामित्रम्···अग्नीध्रीयम्
6. V¹ सदो for सर्वदा
7. KMyB होमार्थ for °होमार्थं ; My BK Om. हविर्धानगमनं
17. K दक्षिणा, V¹⁻²T MyB दक्षिणं for दक्षिण°
21. V¹⁻²CT Om. द्वार° before बाहु°; सदसो···See ला० श्रौ० सू० २.३.९-१२

औदुम्बरीं दक्षिणेन गत्वा तस्या उत्तरतो गत्वा नमः सखिभ्य (तां० ब्रा० १.५.२) इत्युपविशेयुः। प्रस्तोतारं पूर्वेण प्रतिहर्ता गच्छेत्। उद्गातारः परस्परमुपह्वयेरन्। प्रस्तोतरुपह्वयस्व प्रतिहर्तरुपह्वयस्वेति चोद्गाता ब्रूयात्। उपहूत इतीतरौ ब्रूयाताम्। एवं प्रस्तोता प्रतिहर्ता चेतरावनुज्ञानं कुर्याताम्। यजमानेनोद्गातार उपह्वयध्वमित्युक्ताः 5 उपहूत इत्युपह्वयेरन्। उद्गातौदुम्बरीमुच्चाग्रैः कुशैः परिवेष्ट्य प्रदक्षिणम् ऊर्ध्वदशेन क्षौमादिना परिवेष्टयेत्। चमस आहृते प्रस्तोता तमुभाभ्यां हस्ताभ्यां प्रतिगृह्य दक्षिण ऊरौ निधाय दक्षिणेन पाणिना पिधायासीत। इडोपहवे प्राप्ते तत्समाप्तेरिडापात्रसदृशमुभाभ्यां हस्ताभ्यां स्वमुखसमीपे सोममस्पृशन्धारयेत्। वषट्कारनिमित्त- 10 भक्षणादूर्ध्वं समाख्याभक्षणकाले सर्वत्रोद्गातॄणां भक्षणम्। यजमानः सवनमुखीयभक्षणकाले अग्निर्मे होता स मोपह्वयतामित्युपांशु जपित्वा होतरुपह्वयस्वेत्युच्चैर्ब्रूयात्। एवमुत्तरैरपि मन्त्रैर्यथालिङ्गमुपहवमिच्छेत्। उपहूत इति सर्वैरुपहवे दत्ते स्वं चमसमुद्गातारः परस्परमुपहूय भक्षयेयुः। तत्र प्रथममुद्गाता दक्षिणमनु बाहुं दण्डं कृत्वा श्येन 15 (तां० ब्रा० १. ५. ३) इत्यवेक्ष्य इन्दविन्द्रपीतस्येन्द्रियावतो गायत्रच्छन्दस (तां० ब्रा० १. ५. ४) इत्यादिना द्विरल्पं भक्षयेत्। ऊर्ध्वः सप्त ऋषीन्- (तां० ब्रा० १. ५. ५) इति चक्षुषी नासिके श्रोत्रे चाभिमृशेत्। सोम रारन्धि(तां० ब्रा० १. ५. ६) इति हृदयम्। सोम गीर्भिर् (तां० ब्रा० १. 19

---

7. T. वेष्टयेत्, CV² परिवेष्टयेत् for परिवेष्टयेत्; चमसे···See ला० श्रौ० सू० २.५.१-१०

9. BMyKI आस्ते for आसीत; KB तस्यासमाप्ति इडा, My तस्या समाप्त इडा for तत्समाप्तेरिडा

10. CV² °निमित्तं for निमित्त°

12. T पीत्वा, C. मुक्त्वा त्वा for जपित्वा

14. MyKB Om. उपहूतः···पीतस्येन्द्रियावतो (L. 16); T Om. उपहूत··· उद्गातारः; V¹ स्वचमसभक्षणकाले, CV² स्वं चमसमकाले for स्वं चमसं

16. L. अवेक्ष्येरन्, V²C अवेक्षेरन् for अवेक्ष्य; KBMy after छन्दसः ins. सर्वं

18. V¹ Om. °क्षुषी···तं चम (p. 32 L. 2)

५. ७) इति नाभिम् । एवं प्रस्तोता । ततः प्रतिहर्ता । स च तं चमसम् अभिमृश्य आप्यायस्व (तां० ब्रा० १.५.८) इत्याप्याययेत् । सर्वे वा भक्षयितारः । प्रतिहर्तृभक्षणादूर्ध्वमाप्याययेयुः । उद्गातृचमसं प्रस्तोतृप्रतिहर्तृव्यतिरिक्ता न भक्षयेयुः । उद्गाता प्रथम (ला० श्रौ० २. ५. ४) इत्यस्मिन् सूत्रे उद्गातेति पाठादेव प्राथम्ये सिद्धे प्रथम इति गुरुन्यासकरणात् वषट्कर्तुः प्रथमभक्ष इत्यादिशास्त्रप्राप्तेः प्रतिषेधात् उद्गातृचमसं नान्यो भक्षयेदिति शाखान्तरवचनाच्च । नात्राचमनादि कार्यम् । न सोमेनोच्छिष्टा भवन्ति (भा० श्रौ० सू० ५.६.३) इति श्रुतेः । सवनेषु च द्वितीयाश्चमसा नाराशंसाः । पूर्वयोः सवनयोस्तृतीयौ च तेषां पूर्ववत् प्रतिग्रहभक्षणादि । श्येन इत्यवेक्षणं निवर्तते । अवमैस्ते पितृभिर्भक्षितस्य (तां० ब्रा० १.५.९) इत्यादिना प्रातःसवने नाराशसं भक्षयेयुः । नाराशंसे चक्षुराद्यभिमर्शनत्रयं कार्यं वा न वा ॥

[आज्यस्तोमेषु स्तोम-कुशा-पर्याय-विष्टावाः]

अथाज्यनामानि चत्वारि स्तोत्राणि । त आजिमायन् । यदाजिमायंस्तदाज्यानामाज्यत्वम् (तां० ब्रा० ७. २. १) इति श्रुतेः । चत्वारि सन्ति षड्देवत्यानि (तां० ब्रा० ७. २. ३) इति च । तानि च क्रमाद् अग्न आ नोमित्रावरुणायाहीन्द्राग्नी (सा० ६६०–७१) इत्येतेषु चतुर्षु तृचेषु कर्तव्यानि उत्तरापाठक्रमात् । ब्राह्मणे च सोऽग्निरग्र उदजयत् । अथ मित्रावरुणौ । अथेन्द्रः । अथ सैषेद्राग्नी (तां० ब्रा० ७.२.२) इति देवतानुक्रमात् । एतेषां च तत्तद्देवतालिङ्गात् । एषु च गायत्रमेव साम बहिष्पवमानं प्रकृत्य गायत्रविधानात् । आज्येषु सामान्तरानु-

1. C °हर्तासि for °हर्ता । स
2. KV¹ T MyBC Om. च ;
5. KMyB. प्राधान्येन for प्राथम्ये
8. LV¹V². आचमनं for आचमनादि ; T. after आचमनादि ins. चमसादि
9. सवनेषु ········ला० श्रौ० सू० २. ५. १३-१६
18. V¹ Om. ब्राह्मणे ········देवतानुक्रमात् (L. 20)
19. LV² Om. अथ मित्रावरुणौ । अथेन्द्रः ; CTK. Om. सा

पदेशात्। सर्वाणि स्वाराण्याज्यानि (तां० ब्रा० ७. २. ५) इति लिङ्गात्। सूत्रकारेण च जगतीगायत्र्यौ त्रिष्टुबनुष्टुभाविति पृथगाज्यप्रथमासु गायत्रीगीतिविकारभूतस्य धूर्गानातिदेशात्। आज्यानां पुष्कलो गायत्रीत्यृषिच्छन्दसी। अग्निर्मित्रावरुणाविन्द्र इन्द्राग्नीति क्रमेण देवताः। प्रजापतिर्देवेभ्य आत्मानम् (तां० ब्रा० ७.२.१) इति विधायक- 5
ब्राह्मणम्। यस्य वा एता बहिष्पवमाने विगीयान्तराज्येषु संगायन्ति (ष० विं० ब्रा० २. ३. १२) इति धूर्विधायकब्राह्मणम्। मनो हिंकार इति भक्त्युपासनम्। पञ्चदशस्तोमान्याज्यानि। तथा च त्रिसंस्थस्य ज्योतिष्टोमस्य स्तोमविधिब्राह्मणम्– त्रिवृद् बहिष्पवमानम्। पञ्चदशान्याज्यानि। पञ्चदशो माध्यंदिनः पवमानः। सप्तदशानि 10
पृष्ठानि। सप्तदश आर्भवः। एकविंशोऽग्निष्टोमः सोक्थ्यः। पञ्चदशी रात्रिः। त्रिवृत्संधिः (तां० ब्रा० २०. १. १) इति। पञ्चदशस्तोमावृत्त्या संपाद्य तृचस्य पञ्चदशत्वविधानात्। यदाज्यैः पुनरभ्यावर्तं स्तुवन्ति(तां० ब्रा० ७. २. ६) इति श्रुतेः। आवृत्तिश्च पञ्चभ्यो हिंकरोति(तां० ब्रा० २. ४. १)इत्याद्यया पञ्चपङ्क्चिन्या विष्टुत्या कुशा- 15
विधानेन विधेया। आद्याभिः विष्टुतिभिः स्तोमविधानमनादेशे ताः पथ्याः सर्वाभिप्रायाश्च (ला० श्रौ० सू० ६. २. २) इति वचनात्। तत्र प्रथमस्याज्यस्य ऋगूजपे कृते प्रस्तोताध्वर्युदत्ते तृणे प्रतिगृह्य ब्रह्मन्निति 18

---

2. जगती⋯⋯See ला० श्रौ० सू० ७. १३. १०
4. C Om. इति क्रमेण
5. $LV^{1-2}$ Om. आत्मानम्
7. KTBMy Om. °विधायक
9. C. Ins. रिति after विधि
10. $V^2$ Om. °नि पृष्ठानि⋯⋯पञ्चदशत्व (L. 13)
11. $V^2$ My सोक्थः, B सोर्थः, for सोक्थ्यः
17. $V^{1-2}$C पथ्याभिः for पथ्याः ; My BK विधानात् for वचनात् ; TB °प्रायश्चित्त for °प्रायाश्चेति
18. प्रथमस्य⋯⋯See ला० श्रौ० सू० २.५.१८

प्रस्तरवदुद्गात्रे दद्यात्। अत्र अभिरूपा करोतीत्यादिषु तृणदानाभावेऽपि न मन्त्रं जह्यात्। उद्गाता प्रस्तरवत्तृणाभ्यां जङ्घासुपहृत्य दीक्षायै वर्णेने- त्याद्यपानाये(तां० ब्रा० १.५.१०)त्यन्तेन स्तोमं युञ्ज्यात्। औदुम्बर्याश्रयः सर्वाणि स्तोत्राणि उद्गाता गायेत्। पर्यायादिषु हिंकुर्युः। पर्यायादिषु हिंकारं
5 स्तुवीरन् (ला०श्रौ० सू० २.६.१०)इति आवृत्तिस्तोत्राण्यधिकृत्य वचनात्। स्तोष्यमाणानां मध्ये कुशास्तरणार्थं वस्त्रमुदक्समासमुपरिदशमास्तीर्य प्रस्तोता प्रस्तावान्तेषु कुशा विदध्यात्। सर्वस्तोमानां त्रयः पर्यायाः। प्रति- पर्यायं त्रयो विष्टावाः। तदुक्तम्—प्रथमस्य पर्यायस्य प्रथमा तृचभागा। तस्यास्त्रिर्वचनम्। मध्यमावापस्थानम्। उत्तमा परिचरा। परिचरा तृच-
10 भागावापस्थानम् इति मध्यम आवापस्थानम्। परिचरा तृचभागे- त्युत्तम एते विष्टावा (ला. श्रौ. ६.५.१-६) इति। तत्र प्रथमस्य पर्यायस्य प्रथमं विष्टावं प्रथमया स्तोत्रीययोदगग्राभिः प्राक्संस्थाभिः कुशाभि- र्विदध्यात्। तस्य पश्चान्मध्यदेशे प्रागग्राभिः कुशाभिरुदक्- संस्थाभिः मध्यमया स्तोत्रीयया द्वितीयं विष्टावम्। तस्य पश्चादु-
15 ग्राभिः प्रत्यक्संस्थाभिरुत्तमया स्तोत्रीयया तृतीयं विष्टावम् इत्येकः पर्यायः। एवमुत्तरौ पर्यायौ। पर्यायान् विष्टावांश्च परस्पर- संसृष्टान् कुर्यात्। तत्र प्रथमायां स्तोत्रीयायां दत्रिवृतातियारुचोमिति-
18 वद्धूर्गानम्। निहोतासा इति निरुक्तं गायेत्। इतरासु चतुर्दशसु

---

1. V[1] प्रस्तरम्, My प्रस्तोता for प्रस्तरवत्
4. MyB A. सर्वस्तोत्रे च, K सर्वास्तोत्रे च, V[1-2] CT सर्वाः स्तोत्र for सर्वाणि स्तोत्राणि; MyBAK Om. उद्गाता
6. स्तोष्यमाणानां.........See ला० श्रौ० २.६.४-६
9. V[2] LC. Om one परिचरा
10. T. Om मध्यमः; C आवापस्थानमुत्तमा परिचरात्तृचभागावापस्थानमिति for मध्यमः
11. T. तस्य for तत्र
17. V[1] इति च for इतिवद्; L. इति धूर्गानवद्गानम् for इतिवद् धूर्गानम्
18. CV[2] Om. °वद्; LV[1-2] Om. गायेत्; LV[1-2] च for चतुर्दशसु

तत्सवितुरिति गायत्र्यां न विशेषः । उत्तमां प्रस्तुत्य शंसिष्यन्तं प्रत्येषेति ब्रूयात् ॥

[ यजमानवाचनादि सवनमुखीयवद्भक्षणान्तम् ]

स्तुतस्य स्तुतमसी(तां० ब्रा० १. ६. ३)ति प्रस्तरवत्तृणे आलब्धवन्तं यजमानमुद्गाता वाचयेत् । बहिष्पवमानान्तवदुपहवः । ऋग्- 5
जपं कृत्वा यथोक्तं नाराशंसभक्षणं कुर्युः । प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत् । प्रथमं तृतीयसवन (ला० श्रौ० २. ५. १७) इति वचनात् । इतःप्रभृतीनां प्रातःसवनीयानां चमसगणानां नाप्यायनम् । द्वितीयेऽप्याज्य ऋग्जपः । आ नो मित्रावरुणेति ।
अभिते मधुनापयोमितिवत्प्रथमाभ्यासः । शेषं सर्वं प्रथमाज्यवत् । 10
सवनमुखीयवद्भक्षणम् । तृतीये स नः पवस्व शंगवोमितिवत्प्रथमाभ्यासः । सादा इति निरुक्तं गायेत् । शेषं समानम् ।
सवनमुखीयवद्भक्षणम् । चतुर्थे हिन्वानोहेतृभिर्हिनोमितिवत्प्रथमाभ्यासः ।
गाइभिर्नभोवरेणियां धिया इति च निरुक्तम् । न त्वाज्येषु निधनविकारः । न तूर्ध्वं बहिष्पवमानात्स्युरि(ला.श्रौ. ७. १३. ८)ति वचनात् । 15
इतरत्सर्वं समानम् । सवनमुखीयवद्भक्षणम् ॥

[ माध्यन्दिनाय प्रसर्पणमृत्विजाम् ]

सवनसंस्थासु सर्पतेति प्रशास्त्रोक्तेऽपरया द्वारा यथैतन्निष्क्रम्याग्नीध्रीयस्य पश्चाद् बहिर्वेदि मूत्रादि कुर्युः । मूत्रं कृत्वा यावदाचमनं वाग्यमनम् । एतन्मृगतीर्थम् । तेन शम्यापरासात् 20

---

1. CV[1-2] उत्तमायां for उत्तमां ; LV[2] संशिष्यन्तं for शंसिष्यन्तं ; V[1] Om. शंसिष्यन्तं ;

2. V[1] एषोत्तमेति for प्रत्येषेति

4. स्तुतस्य.........See ला० श्रौ० सू० २.६.१२

16. सवन ........See ला० श्रौ० सू० २.६.१३-१७

18. V[1-2] प्रशास्त्रोक्तेत्यपरया for प्रशास्त्रोक्तेऽपरया

19. MyKBT after मूत्रादि ins, अपेक्षितकृत्यानि

20. LV[1-2] Om. तेन

परं न गच्छेयुः । ततः परं जिगमिषुराप्नानेन गच्छेत् संतिष्ठते प्रातःसवनम् ॥

इति प्रातःसवनम् ॥

## माध्यंदिनं सवनम्

[ लोकद्वारसामगानादि माध्यन्दिनपवमानसर्पणान्तम् ]

5 अथ माध्यंदिने सवने राज्ञोपावहरणात् पूर्वं यजमानः पश्चादग्नीध्रीयस्योदङ्मुख उपविश्य लोकद्वारमिति रौद्रं साम त्रिर्गायेत् । पुष्कलो द्विपदा गायत्री रुद्रः । नमो वायव इति स्वाहेति तत्रैव हुत्वा अप जहि परिघमित्युक्त्वोत्तिष्ठेत् । पूर्ववद्धिष्ण्योपस्थानं कृत्वोत्तरत औदुम्बर्याः पूर्ववदुपविष्टेषूद्गातृषु यजमानोपहवान्ते कृते प्रस्तोता 10 होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य हविर्धानं गच्छेत् । अयमेव पृष्ठहोमगमने मार्गः । विसंस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य तु संचरतस्तद्यथेति वचनात् । पूर्व-13 वद्धविर्धानप्रवेशनादि प्राक्सर्पणात् प्रवणवर्जं यथासंभवं कुर्यात् ।

---

5. V[1] माध्यंदिनसवनस्य L. माध्यंदिनसवन° for माध्यंदिने सवने ; LV[2] C रजोप for राज्ञोप ; V[1] and L on the margin उपाकरणात् for उपावहरणात् ; V[1] पूर्वे for पूर्वं

6. LV[2] रौद्रस्य for रौद्रं साम ; LV[1-2] Cm. त्रिः

7. LCV[1-2] Om. गायत्री ; LCV[1-2] रुद्राः for रुद्रः ; V[2] Om. स्वाहेति तत्रैव ; LV[1] च for तत्रैव; C Om. तत्रैव

8. KMyB उत्तरे for उत्तरतः

9. C °हवे for हवान्ते

10. LV[2] होतुर्धिष्ण्यं for होतृ ; C after द्वारा ins. अन्तरा

11. V[2] अन्तरा for अन्तरेण ;

12. T. धिष्ण्ये, BMy K धिष्ण्य for धिष्ण्यं ; LV[1] च for तु ; V[1]. Om. तु ; T. चमसं चरतः for तु संचरतः ; LV[1-2] TC, यथेतमिति for यथेति

13. TKMyB. प्रवर° for प्रवण°

तथोद्गातृप्रतिहर्त्रोः सर्पणार्थं प्रस्तोतृमार्गेण गमनम्। सर्वे बहिष्पवमानवत् सर्पन्तोऽध्वर्युमार्गेण गत्वा सदसि तद्वदेवोपविशेयुः। अत्र कश्चिदाह— माध्यंदिने यस्यैव हविर्धानगमनं तस्य प्रस्तोतुरेवान्वारम्भाद्युपवेशनान्तम्। नेतरयोः। एवं तृतीयसवने प्रतिहर्तुरेवेति। तदयुक्तम्। एतत्सर्वं कुर्यादुत्तरयोः सवनयोरि (ला० श्रौ० १. १२. १८) ति सर्व- 5 ग्रहणात्। तद्धि यस्यैव हविर्धानगमनं तस्यैव सर्पणं माविज्ञायेति। उपग्रन्थकारश्च उभयोर्वा सर्पणयोः प्रतिहर्ता विच्छिद्येत। विभवांत्रिवत्तत्र सकृत्कृतं प्रायश्चित्तमिति माध्यंदिनेऽपि सवने प्रतिहर्तुः सर्पणमनुवदति। न हि प्रातःसवनतृतीयसवनस्थयोर्विच्छेदयोः सह प्रायश्चित्तविकारो युक्तः। पूर्वस्य माध्यंदिने एव सवने प्रायश्चित्तकरणात्। आप- 10 स्तम्बश्च विशेषेणाह— बहिष्पवमानवन्माध्यंदिनं पवमानं सर्पन्ति (आप० श्रौ० १३. २. ७) इति॥

## [ माध्यन्दिनपवमानस्तोत्रम् ]

सदस्युपविष्टा माध्यंदिनस्य पवमानस्यर्चो जपेयुः। उच्चा- पुना-प्रगाथं प्रतुद्रेति। प्राणो गायत्री। व्यानो बृहती। अपानस्त्रिष्टुप्। 15 इति श्रुतेः। तासां दिविसद्भूम्याददं इति प्राणानादत्तेति लिङ्ग- दर्शनात् ऋक्समाम्नायाच्चैते माध्यंदिनपवमानस्य तृचा इत्यवसीयते। 17

---

1. T. अथ for तथा ; BMyK. अतोद्गतुः प्रतिहर्तुश्च for तथोद्गातृप्ररिहर्त्रोः ; V¹⁻². सर्व for सर्वे

3. LV¹⁻². Om. एव ; MyBK. ins एव after तस्य ; KBMy. Om. एव after प्रस्तोतुः

6. V¹⁻². °गमने for °गमनं ; C. माविज्ञायि इति, V¹. माविज्ञायत इति, V². माधिज्ञापि इति, A ममाविज्ञावि, KMy. ममाविज्ञाय, B. ममाविज्ञा [ ], L. आविज्ञापि इति for माविज्ञायेति

11. V¹⁻² सर्पति for सर्पन्ति

12. L. V¹⁻². Om. इति

17. LV¹⁻². Om. °दर्शनात् ; LV¹⁻² तृचाद्य (L. द्य) वसीयते for तृचा इत्यवसीयते

बहिष्पवमानवत् प्रस्तरग्रहणादानस्तोमयोगजपाः । अग्निर्युनक्त्वित्यस्य स्थाने वायुर्युनक्तु मनसेति ब्रूयात् । एवता वाव एतद्वै यज्ञस्य प्रजापतिरकामयतेति विधायकब्राह्मणम् । त्रयीविद्या हिंकार (Cp. जै० उ० ब्रा० ५. ५. १२) इति भक्त्युपासनविधिब्राह्मणम् । द्वे गायत्र्यां
5 सामनी (ष. विं. ब्रा. १. ३. १२) इति । यद् गायत्र्यां गायत्रेण स्तुवन्ती (तां० ब्रा० ७. ३. ७)ति च श्रुतेः । उच्चातृचे प्रथमं साम गायत्रम् । गायत्रेण स्तुत्वा निधनवता स्तुवन्ती(तां० ब्रा० ७.३.११)ति । स एतदामहीयवमपश्यदिति च । तत्स्थाने द्वितीयमामहीयवम् । तस्याग्नी रौरवं प्राबृहत । (तां०ब्रा० ७.५.७) अथेन्द्रो यौधाजयम् (तां०ब्रा० ७.५.१२)
10 इति द्वे बृहत्यां सामनी (ष० विं० ब्रा० १.३.४) इति च श्रुतेः । पुनः प्रगाथे रौरवयौधाजये । अथ वायुरौशनं प्राबृहते(तां ब्रा. ७. ५. १६)ति एकं त्रिष्टुभि सामे(ष. विं. ब्रा. १. ३. ५)ति श्रुतेः । प्रतुद्रवतृचमौशनम् । तेषां पुष्कलामहीयुरग्निरिन्द्र उशनेत्यृषयः । सोमो देवता । पञ्चानां साम्नां क्रमेण स्वारणिधनवदैडपदनिधनपदानुस्वारत्वात् ।
15 प्रजापतिरिन्द्रोऽग्निरग्निः सोम इति क्रमेण निधनदेवताः । अथातः सामान्तानामि(नि. सू. १. १२. १)ति निदानोक्तं निधनार्षेयमप्यनुसंधेयम् । साम्ने साम्ने हिंकुर्युः । आमहीयवस्य पर्व प्रस्तावः । उपग्रन्थोक्तं प्रतिहारभागं प्रतिहर्ता सर्वत्र ब्रूयात् । प्रस्तावप्रतिहारव्यतिरिक्तमुद्गाता । सर्वे निधनं ब्रूयुः । स्तौष इत्यस्य निधनम् ।
20 एवमुत्तरयोर्गानम् । रौरवेऽप्येवमिडेति निधनम् । यौधाजये पादः प्रस्तावः । षासीत्यादि हिषीस्वरं द्व्यक्षरनिधनम् । आमहीयवत्
22 शेषम् । औशनेऽपि सर्वमामहीयवत् । अन्त्योऽनुस्वारो निधनम् ॥

---

3. KMyB. त्रैविद्या for त्रयीविद्या
4. T. after इति ins. साम्नां TV[2] समा
6 BMyK V[1-2]T. Om. च
8. V[1]. निधनवत् for तत् ; V[2] KMyBAC. Om. तत्
10. V[1] पुनानः for पुनः
17. V[1-2] पर्वः for पर्व

[ सवनमुखीयभक्षणादि दक्षिणाप्रतिग्रहनाराशंसभक्षणान्तम् ]

एवं पञ्चदशेन माध्यंदिनपवमानेन स्तुत्वा अन्नमकरामिति नमो गन्धर्वायेति जपान्तं पूर्ववत् कर्तव्यम् । वृषकोऽसि त्रिष्टुप्-छन्दा इति वाचने विशेषः । ऋग्जपं कुर्युः । यजमानः सवनमुखीये वाङ्मे होतेत्यादिभिर्यथालिङ्गमुपहवमिच्छेत् । उद्गातारः प्रातःसवनवत् 5 सवनमुखीयं भक्षयेयुः । गायत्रच्छन्दस इत्यस्य स्थाने त्रिष्टुप्-छन्दसेति विशेषः । सं ते पयांसीति त्रिष्टुभाप्यायने कृते दक्षिणां प्रतिगृह्णीयुः ससुब्रह्मण्याः । भक्षणादिष्वेव सुब्रह्मण्यस्य निवृत्तिः । न प्रतिग्रहे । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । वरुणो वो नयतु देव्यो दक्षिणा रुद्राय 10 गास्ताभिरमृतत्वमशीय । वयो दात्रे भूयात् । मयो मह्यं प्रति-ग्रहीत्रे । क इमाः कस्मा अदात् ? कामः कामायादात् । कामो दाता कामः प्रतिग्रहीता । कामः समुद्रमाविशत् । कामेन वः प्रतिगृह्णामि । कामैतास्ता इति गवां प्रतिग्रहे मन्त्रप्रयोगं कुर्युः । तदभावे हिरण्यपक्षेऽपि गोमन्त्रेणैव प्रतिग्रहः । तत्कार्यापन्नत्वात् । 15 और्वैस्ते पितृभिरित्यादिना भक्षयामीत्यन्तेन नाराशंसस्य भक्षणम् । पूर्ववदाप्यायनम् ॥ 17

---

4. V[1-2] C. छन्दसा, T. छन्दांसि for छन्दा ; V[1-2] T. वचने for वाचने ; C. Om. वाचने ; C. शेषः for विशेषः ; LV[1-2] °मुखे for °मुखीये

5. T. वभंवे, V[2] वाचे, V[1] ष्वा [ ] for वाङ्मे

7. V[1]. Om. कृते

8. V[1-2]. सुब्रह्मण्याः for ससुब्रह्मण्याः ; My भक्षणादिशेषः for भक्षणादिष्वेव

9. My प्रतिग्रहस्तु for न प्रतिग्रहे ; V[1-2]L Om. सवितुः ··· प्रतिगृह्णामि

14. LV[1-2] TC. कामै तास्त for कामैतास्ता ; V[1-2]C. गां, L. गो° for गवां

15. LCV[1-2]. Om. अपि ; MyBKT. Om. तद्

[ पृष्ठहोमः ]

प्रस्तोता होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्याग्नीध्रीयस्य दक्षिणतो गत्वा आहवनीये स्रुवेण पृष्ठहोमं कुर्यात् । रथन्तरं पिबतु सोम्यमिति स्वाहान्तेन स्वाहेति चाहुतिद्वयम् ।
5 ततो यथैतं प्रत्यावृज्य स्वस्थाने उपविशेत् ॥

[ पृष्ठस्तोत्राणि ]

अनन्तरं पृष्ठनामानि चत्वारि स्तोत्राणि । अथ यदेव तत ऊर्ध्वं तानि पृष्ठानि । बार्हतान्येकगायत्रीकाणि ( ष० विं० ब्रा० १. ३. ७-८ ) इति श्रुतेः । अत्र यद्यपि ब्राह्मणे बृहद्रथंतरयोर्द्वयोरपि
10 प्रथमपृष्ठत्वेन विधानं तथापि सामर्थ्यात् तयोर्विकल्पः । तत्र रथन्तराश्रयः प्रयोगः प्रथममुच्यते । कस्माद्रथन्तरं पूर्वं योगमानश (ता. ब्रा. ७. ६. ९) इति श्रुतेः । ब्राह्मणस्य प्रथमप्रयोगे रथन्तरस्यैव वक्तव्यत्वात् ऋक्समाम्नाये रथन्तरस्तोत्रीयस्यैव प्रथमाम्नानाच्च बृहदाश्रयः परस्ताद्वक्ष्यते । रथन्तरस्तवनार्थमभित्वाशूरप्रगाथस्य
15 पुरस्ताज्जपं कुर्युः । प्रथमा बृहती । ककुभावुत्तरे । वसिष्ठ इन्द्रः प्रजापतिरकामयत । स तूष्णीम् (ता. ब्रा. ७. ६. १) इति ब्राह्मणम् । अभिमन्थति स हिंकारः इत्युद्गीथोपासनं ब्राह्मणम् । प्राक्स्तोमयोगाद् ऐरं वै बृहादित्यादि अयं रथन्तरमि(ता. ब्रा. ७. ६. १७)त्यन्तमुद्गाता मनसा ध्यायेत् । यस्ते गोष्विति द्रविणवन्न एधीत्यन्तं
20 चतुर्णां पृष्ठानां तृणप्रतिग्रहादि कुशाविधानान्तमाज्यवत् सप्तदशत्वात् दशसप्ता विष्टुतिः । रथन्तरे प्रथमाया अष्टाक्षरः प्रस्तावः ।
22 उत्तरयोर्द्व्यक्षरः । प्रस्तूयमान उद्गाता चक्षुषी निमील्य प्रस्तावानन्तरं

---

3. A. अग्निध्रीये for आहवनीये

9. BMyTK तत्र for अत्र

11. LV[1-2]C. प्रथमोच्यते for प्रथममुच्यते ; V[1-2]CL trans. रथन्तरं after पूर्वं

14. BMyTK after °श्रयः adds : तु

16. My after इति adds : विधायक, TKB आदि

17. LV[1-2] C. Om. स हिंकारः ; LV[1-2]C भवत्युपासनं for उद्गीथोपासनं

पृथिवीं हस्ताभ्यामालभ्योद्गीथम् ओं वागित्यादिकं क्षिप्रं ब्रूयात्। तत्र प्रतिहारात् प्राक् चतुरक्षरं शिष्ट्वा ततः पूर्वेष्वक्षरेषु व्यञ्जनानि लोपयित्वा भकारादीन् स्वरान् कुर्यात्। आर्चिकं मनसा युगपत् गायेत्। प्रतिहारात् पूर्वभाविनि चतुरक्षरे चक्षुषी उन्मीलयेत्। ऊत्तमपादादौ पञ्चाक्षरः प्रतिहारः। उत्तमां प्रस्तुत्येत्याद्यृक्जपान्तमाज्य- 5
वत्। उद्गाता यजमानं गोदानं चोदयेच्च। नाराशंसस्य पूर्व-वत् भक्षणम्। इतःप्रभृति माध्यंदिनीयानां चमसानां नाप्यायनम्। तस्मात् पृष्ठानां स्तोत्रं वामदेव्येनानुष्टुवन्तीति ॥

द्वितीयं पृष्ठं वामदेव्यम्। तस्य कया न इति तृचं जपेयुः। मित्रावरुणौ गायत्रीन्द्रः। आपो वा ऋत्वियमित्यादि 10
ब्राह्मणमुपमन्त्रयते स हिंकार इति भक्त्युपासनम्। प्राक्स्तोम-योगात् गावो अश्वा अजावयो व्रीहयो यवा(ला०श्रौ० २.१०.१) इत्युद्गाता मनसा ध्यायेत्। आद्यपादेन प्रस्तावः। हाइति निधनम्। स्तोमयोगः कुशाविधानम् उत्तमां प्रस्तुत्येत्यादि च गोदानवर्जं पूर्ववत्। रथन्तराय नौधसं प्रतिप्रयुञ्जन्ति इति ॥ 15

तृतीयं पृष्ठं तस्य तं वो दस्मम् इति प्रगाथं जपेयुः। नोधाः काक्षीवन्तो बृहतीन्द्रः। इमौ वै लोकौ सहास्ताम् (तां. ब्रा. ७.१०.१) इति ब्राह्मणम्। त्रयीविद्या हिंकार इति भक्त्युपासनम्। यजमानस्य ऋतुफलं सिध्यत्वित्युद्गायन्नुपासीत। यजमानश्च ब्रह्मसाम्नि यः कामो 19

1. LCV[1-2] इमं for ओं
6. LV[1]. Om. च
10. LV[1-2]. C. °वरुणो for °वरुणौ
15. MyBK. प्रयुञ्जते for प्रयुञ्जन्ति
17. LV[1-2]. C. Om. बृहती
18. LV[4]C. Om. हिंकार इति
19. KBMy. सिद्धयर्थत्वादुद्गायन्, T. सिद्धत्वादुद्गायन् CV[1-2] सिद्धयत्वोद्गायन् for सिद्धयत्वित्युद्गायन्

यजमानस्य स्यात् स सिद्धयत्विति ध्यायन् उपासीत । तथेतर उद्गायन्नि(ला० श्रौ० २. १०. २-३)ति वचनात् । ब्राह्मणाच्छंसिनानुशंसनीयत्वादिदं ब्रह्मसामेत्युच्यते । नौधसं सामोपधावामि । तं वोदस्मर्चमुपधावामि । नौधसमृषिमुपधावामि । इन्द्रदेवतामुपधावामि । 5 बृहतीच्छन्द उपधावामि । सप्तदश९ स्तोममुपधावामि । उदीचीं दिशमुपधावामि । आत्मानमुपधावामि । एवमुपसरणान्युद्गाता ध्यायन् स्तुवीत । तथा च रहस्यब्राह्मणम् – अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत । इत्यादि । तत्र यद्यपि उपसरणानां काममात्रस्य च स्तोत्रमात्रसाधारण्येन ध्यानं श्रुतं तथापि सूत्रनिदानाभ्यां पृष्ठाना- 10 मेव ब्रह्मसाम्नि क्रतुफलस्यैव ध्यानमिति निर्णयः । आद्यपादेन प्रस्तावः । अन्त्यं पर्व निधनम् । तृणप्रतिग्रहादि पूर्ववत् । तरोभिर्व इति ॥

कालेयं चतुर्थं पृष्ठम् । कलिर्बृहतीन्द्रः । देवाश्च वा असुराश्चे(ष. विं. ब्रा. २. ३. १)ति ब्राह्मणम् । पर्व प्रस्तावः । इडेति 15 डेति वा निधनम् । तृणप्रतिग्रहादि वामदेव्यवत् । सर्पतेति प्रशस्त्रोक्ते प्रातःसवनवन्निष्क्रमणम् ॥

॥ इति माध्यंदिनं सवनम् ॥

---

## सायं सवनम्

### रथन्तरपृष्ठोऽग्निष्टोमः

20 [ लोकद्वारादिसामगानप्रभृति शुक्रधारानुमन्त्रणान्तम् ]

अथ तृतीयसवनस्योपकरणात् पूर्वं यजमान उत्तरवेद्यग्नेः पश्चादुदङ्मुख उपविश्य लोकद्वारमित्यादित्यं वैश्वदेवं च साम त्रिर्गायेत् । पुष्कलो हि द्विपदा गायत्री । प्रथमस्यादित्यः । द्वितीयस्य विश्वेदेवाः । 24 नम आदित्येभ्यश्चेति तत्रैव जुहुयात् । स्वाहेति च । अपहत-

3. MyK. Om °सनीयत्वा सप्तदश९ (L. 5)
6. CV[1-2]. ins. इति before उद्गाता
8. V[1]L. कालमात्रस्य for काममात्रस्य ; V[1]. Om. च
9. MyBK. स्तोम° for स्तोत्र° ; V[1]C. °मात्रं for मात्र°

परिधिमित्युक्त्वोत्तिष्ठेत् । पूर्ववद्धिष्ण्यानुपस्थाय औदुम्बर्या उत्तरत उद्गातृषूपविष्टेषु यजमानोपहवान्ते कृते हुत आदित्यग्रहे प्रतिहर्ता हविर्धानं प्रस्तोतृवद् गच्छेत् । विष्णोः शिर इति रराट्यामालभ्येष ऊर्ज इति प्रविश्य तत्रावस्थितयोः कुम्भयोः पूर्वस्मिन् वसवस्त्वेत्यादिभिर्द्रोणकलशवत्संमार्जनं कृत्वा तस्योपरि पवित्रन्त इति दशापवित्रं वितनुयात्। प्रशुक्रे(ला०श्रौ० १.१०.२१)ति धारामनुमन्त्रयेत् ॥ 5

## [ आर्भवपवमानस्तोत्रम् ]

अथ सर्वे माध्यंदिनवदन्वारम्भादि कृत्वा सदस्युपविश्यार्भवस्य पवमानस्यर्चौ जपेयुः । स्वादिष्ठयेति तृचं पवस्वेन्द्रमच्छेति एकर्चौ पुरोजितीति अभिप्रियाणीति तृचद्वयं चेति । तत्र स्वादिष्ठया-तृचे प्रथमं गायत्रम्। आत्मा वै यज्ञस्य पवमानो मुखं गायत्री प्राणो गायत्रम्। यद्गायत्र्यां गायत्रेण स्तुवन्ति(तां०ब्रा० ७.३.७)इत्यस्य ब्राह्मणस्य गायत्रं पुरस्ताद् भवति । स्वारमन्तत इत्यस्य चोत्तरपवमानद्वयसाधारणत्वात् षड्विंशे चार्भवपवमानमधिकृत्य द्वे गायत्र्यां सामनी(ष०विं०ब्रा० १.३.१२) इति वचनात् । सावित्री गेयं यत्रागीतम् (दे०अ०ब्रा० ३. २३) इति श्रुतेश्च । अत एवापवति ज्योतिष्टोमे कल्पः अन्तरेण गायत्रसंहिते गायत्रीसामान्यावपेत् इति । द्वितीयं संहितम् । तासु संहिताम्(ता०ब्रा० ८.४.८) इति श्रुतेः । गायत्रेण स्तुत्वा निधनवता स्तुवन्ती(तां. ब्रा. ७. ३. ११)ति च । पवस्वेन्द्रमच्छेत्येकर्चयोः सफपौष्कले । पुरोजीतीति तृचे श्यावाश्वान्धीगवे । अभिप्रितृचे कावमन्त्यमित्येवं सप्तदश आर्भवः । साध्या वै नाम देवा आसन्नि(तां०ब्रा० ८. ४.)त्यनुवाकयोः सफादीनां चर्चा प्रमाणं स्पष्टम्। तत्र यद्यपि सफपौष्कले तृचयोरधीयेते तथाप्यार्भवस्य सप्तदशस्तोमत्वात् अतिरिक्तानां 23

3. $CV^2$. रराटया, $V^1$. रराडया for रराट्याम्

6. BTK My. °मन्त्रयेत for °मन्त्रयेत्

9. $V^1$ तृचं द्वयं, $V^2$ तृचद्वयं for तृचं ; $V^1$ एकर्चे for एकर्चौ

22. $LV^2$ CT after सफादीनां add : तदीयानां

स्तोत्रीयाणां ह्रासे कार्ये द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणे(ला.श्रौ. ६.२.२६)ति
सूत्रवचनात् ककुबुष्णिहोरेकर्चत्वम् । तृचाध्ययनं तु चतुर्विंशादिषूप-
योक्ष्यते। गायत्रादीनां पुष्कलः प्रजापतिर्वसिष्ठः पुष्कलः श्यावाश्वोऽन्धीगुः
कविरित्यृषयः । गायत्रीककुबुष्णिगनुष्टुब्जगत्य इति छन्दांसि ।
5 पवमानस्य सोमो देवता । माध्यंदिनवच्छेषम् । सूर्यो
युनक्तु वाचे(तां. ब्रा. १. ५. १४)ति स्तोमयोगे विशेषः। कावे पर्व
प्रस्तावः । इतरेषु पादः। सफश्यावाश्वयोः हाइकारो निधनम्।
आन्धीगवे त्नवे अपश्वानं श्नथिष्टनेत्यन्तर्निधनम्। उत्तरयोरेवमन्तर्णिधन-
मूहनीयम्। कावेऽन्त्यस्वरो निधनम्॥

10 [ भक्षणम् ]

स्वरोऽसि गयोऽसी(ला०श्रौ० २.१.५)ति यजमानवाचनम्।
यजमानः पूर्ववत् सवनमुखीये प्राणो मे होतेत्यादिरुपहवमिच्छेत् ।
सवनमुखीयभक्षणे जगच्छन्दस इति विशेषः । आप्यायस्वेति
गायत्री जगती संपत्तये द्विरुक्त्वाप्याययेयुः । सन्नेषु नाराशंसेषु
15 हविर्धानमपरया द्वारा प्रपद्य पुरोडाशादेकैकं पिण्डमादाय स्वस्य
चमसस्याधस्तादत्र पितर(ला०श्रौ० २.१०.४) इति आवृषायध्वमित्यन्तेन
17 दद्युः। भक्षणार्थमाह्रियमाणं नाराशंसम् अमी मदन्ते(ला०श्रौ० २.१०.५)ति

---

2. V[1-2] LC. तृचानां for तृचाध्ययनं
3. V[1]. °योज्यते for °योक्ष्यते ; V[1]. गायत्राणां, V[2]. गायत्रीनां for गायत्रादीनां
4. T. कुत्सः प्रजापतिः for कविः
8. V[2]. Om. आन्धीगवे ··· कावे ; MyBK. before उत्तरयोः ins. डेति निधनम्
13. KMyB. °मुख° for °मुखीय° ; T. च्छन्दसेत्यादि for च्छन्दस इति ; A. शेषः for विशेषः
15. खण्डम् for पिण्डम्
16. V[1-2] CT. वृषा° for आवृषा°
17. V[1-2]CE. भक्षार्थम् My. वीक्षणार्थम् for भक्षणार्थम् ; My. Om. नाराशंसम् ··· प्रवेक्षेत ; K. Om. नाराशंसम् ··· प्राणइति ; (p. 88. L. 2) ; V[1]. मदन्तपिरइषतेत्यन्तेन, A मदन्तेपिषतेत्यन्तेन for मदन्तेति षतेत्यन्तेन

षतेत्यन्तेन प्रतिमन्त्रयेरन् । काव्यैस्ते पितृभिर्भक्षितस्येत्यादिना तस्य भक्षणम् । सौम्यं चरुमाहृतमुद्गातावेक्षेत । आयुर्मे प्राण(तां०ब्रा० १. ५. १७) इति दध्मसीत्यन्तेन तस्मिन्नङ्गुलीमवधाय येनाह्वाजिमि(तां०ब्रा० १.५.१९)ति दधात्वित्यन्तेनाक्षिणी विमृजीत । एवमितरौ । प्रतिहर्ता पश्चात्तमुत्तरेण हृतं चरुं द्रव्येप्सू रोगवान्वाहतेन वाससा प्रच्छाद्य दक्षिणार्धं सदसो गत्वा भुञ्जीत ॥ 5

[ अग्निष्टोमादि कुशासंलोभनान्तम् ]

अथाग्निष्टोमस्तोत्रस्य यज्ञायज्ञीयस्य यज्ञायज्ञा वो अग्नय इति प्रगाथं जपेयुः । अग्निर्वैश्वानरः ककुबुत्तरा बृहत्यग्निः । देवा वै ब्रह्म व्यभजन्त(तां. ब्रा. ७. १०. १०) इति ब्राह्मणम् । लोमहिंकार इति भक्त्युपासनम् । एकविंशस्तोमः । सप्तसप्तिन्या विष्टुत्या कुशाविधानम् । उद्गातारः प्रावृतशिरस्काः स्तुवीरन् । पादः प्रस्तावः । उत्तरयोर्द्व्यक्षरः । वा इति निधनम् । तस्य वरुणो देवता । प्रथमायां स्तोत्रीयायां तिसृष्वभ्यासेषु हिंमा इति हिंकारकाले पत्नीमुद्गातावेक्षेत । सा च प्रथमद्वितीययोः स्तोत्रीययोः निधनकाले पन्नेजिनीभिरद्भिर्दक्षिणमूरुमभिषिञ्चेत । तृतीयेऽभ्यासे प्रस्तुते सर्वं तदुदकमूरौ निनयेत् । तृणप्रतिग्रहादि सर्वमाज्यवत् । यज्ञायज्ञीयमाशंसन् होतापोहिष्ठ इति यदा ब्रूयात् तदा प्रावरणमपनयन्तो होतारमन्वालभेरन् । सवनमुखीयवद्भक्षणम् । नाप्यायनम् । ऋतस्य त्वे(तां. 10 15 19

1. V[1]. after अन्तेन adds : मन्त्रेण ; LV[1] C. मन्त्रयेत V[1]. अनुमन्त्रयेरन् for प्रतिमन्त्रयेरन्
3. LV[1-2] TC. अङ्गुली for अङ्गुलीम्
4. LV[1-2]C विमाजीत for विमृजीत
5. MyBK. पुत्रेप्सुः for द्रव्येप्सुः; T. रोगार्तः for रोगवान्, KBMy. रोगोपहतः for रोगवान्वाहतेन
14. LV[2]. Om. °मुद्गता ··· अवभृथ (p. 47 L. 7)
15. My. पत्नी for सा ;
16. LV[1-2] CT. तृतीया° for तृतीये°
19. MyBK. °मुखवद् for °मुखीयवद्

ब्रा. १. ६. ५)ति प्रतिष्ठामित्यन्तेन स्तोमं विमुञ्चेयुः । दक्षिणैः पाणिभिः कुशाः संलोभयेयुः ॥

[ यजमानवाचनादि दधिभक्षणान्तम् ]

अथ यजमानमुद्गाता वाचयेत् । तन्तवे मा ज्योतिषा यज्ञशर्मन्ननु
5 मा तनुहि ज्योतिषे (ला०श्रौ० २.११.३)ति यथाज्येष्ठं पुत्रान् । तन्तवे मा ज्योतिषा पुत्रा अनु मा तनुत ज्योतिषेति अजातेषु पुत्रेषु । हारियोजने हुते सोमे ही(तां०ब्रा० १.६.६)त्यपरया द्वारा निष्क्रम्य सुभूरसी-(तां०ब्रा० १.६.७)त्यादित्यमुपतिष्ठेरन् । अस्तमितश्चेत् गार्हपत्यम् (ला०श्रौ० २.११.८)। अग्नीध्रीयेऽपां पुष्पमि(ला०श्रौ० २.११.९)ति
10 स्वाहेति च द्वे आहुती जुहुयुः उद्गातृपूर्वाः । अथोद्गाता द्रोणकलशस्थानां धनानामेकदेशमादाय समुपहूतां भक्षयाम इति ब्रूयात् (ला०श्रौ० २. ११.१०)। एवं प्रस्तोतृप्रतिहर्तारौ तत उन्नेतरुपह्वयस्वेति उपहवमिष्ट्वा हारियोजनस्य त(ला०श्रौ० २.११.१२)इति द्विरुपाघ्राय आहवनीयस्य पश्चादन्तःपरिधि निर्वपेयुः । अनुप्रहृतेषु परिधिषु भस्मान्ते अप
15 उपस्पृश्य अष्टावष्टौ शकलान्याहवनीयेऽनुप्रहरेयुः देवकृतस्येत्यादिभिरिकारान्तैः । अत्रेकरान्तैरिति वचनं मन्त्रान्तज्ञापनार्थम् । न तु स्वाहान्तामन्त्रान्तहोमेषु इत्यस्यापवादार्थम् । चात्वालदेशेऽद्भिः पूर्णेषु चमसेषु प्रास्तृतहरिततृणेषु स्वं चमसं पर्युपविश्य अप्सु धौतस्येत्यव-
19 मृश्य जपेयुः । मधुमन्तमि(लाश्रौ २. ११. १८)ति पाणीनुपजिघ्रेरन् ।

---

7. V[1]. after हि ins. अनु इन्द्रियेणेत्यन्तम्

12. V[1]C. after इति ins. उन्नेतरि

13. B. after इति ins. तद्

14. T. भस्मान्तेषु for भस्मान्ते

15. V[1]KK. Om. अनु ; BTK एतत्प्रभृतिभिः, B. इत्येतत्प्रभृतिभिः for इत्यादिभिः ; C. आकारान्तैः for इकारान्तैः

16. BV[1]. ननु for न तु

18. V[1]. प्रास्तानि, T. प्रास्त, BCK. प्रास्तर for प्रास्तृत

शमद्वय(ला० श्रौ० २. ११. १९) इति उदञ्चं चमसं निनयेयुः। कामेत्यध्यात्ममावर्तयेरन्। ऊर्गि(तां. ब्रा. १. ६. १५)त्युरस्सु पाणीन् निदधीरन्। प्राण सोमे(तां. ब्रा. १. ६)ति मुख्यान् प्राणान् अभिमृशेरन्। आग्नीध्रीयं गत्वा दधिक्राव्ण(तां. ब्रा. १. ६. १७) इति ऋचोपहववर्जं दधि भक्षयेयुः॥ 5

[ अवभृथः ]

अवभृथकाले अध्वर्युः प्रेषितः प्रस्तोता सम्राडासन्दीमुत्तरेण गत्वा पश्चात्तिष्ठन् अहावोहावाः अग्निष्टपती(ग्रा. गे. १२. १२. ४६५.३) इत्यवभृथसाम गायेत्। पदाय पदाय स्तोभेत्। एविश्वमित्यादि निधनम्। मन्द्रस्वरान्तं कर्षन्तः सर्वे ऋत्विजस्त्रिर्ब्रूयुः। एवं मध्ये। 10
प्राप्य चावभृथदेशं समाप्तायामिष्टौ अवभृथनिचुम्पुणे(ला०श्रौ० २.१२.९)ति पाहीत्यन्तेन स्नात्वा शिरसि त्रिरभ्युक्षेयुः आदित्यम् उद्वयं तमस(ला०श्रौ० २. १२. १०) इत्यृचोपतिष्ठेरन्। अस्तमितश्चेदाहवनीयम्। तस्मिन् समिध आदध्युः। एधोस्येधिषीमहीति स्वाहान्तेन प्रथमाम्। समिदसि समेधिषीमहीति द्वितीयाम्। यदेन इति 15
मृज्मह (ला०श्रौ० २.१२.१२) इत्यन्तेन तृतीयाम्। अपो अद्ये(ला०श्रौ० २. १२. १३)ति वर्चसेत्यन्तेनाहवनीयमुपतिष्ठेरन्।

[ उदयनीयोदवसानीययोः उद्भार्गवोद्वंशीये सामनी ]

उदयनीयायां प्रधानयागकाले प्रस्तोता चोदस इत्युद्भार्गवं त्रिर्गायेत्। भृगुर्जगती सोमः। अनुबन्ध्यास्थानिकायामामिक्षायां 20
याज्जायाज्जेति स्वारं पयोनिधनम् आग्नीध्रीयेऽवस्थाय तृचे गायेत्। वायुरनुष्टुबिन्द्रः। उदवसानीयायां प्रधानयागकाले पूर्णाहुतौ वागायन्ति त्वेति उद्वंशीयं तृचे गायेत्। विश्वेदेवा अनुष्टुबिन्द्रः॥

इति रथन्तरपृष्ठोऽग्निष्टोमः॥ 24

---

2. पाणि for पाणीन्
9. V[1]. after स्तोभेत् ins. बृहस्पत्यष्टिरग्निः;
10. V[1]L. निधनानि for निधनम्
12. V[2]C स्वाहा, L[1]V स्माहि for पाहि
21. MyBK T. मघवान् for इन्द्रः ; K. Om. त्वेति ··· अग्निष्टोमः (L. 24)।
24. A. after अग्निष्टोमः adds : शिवायनमः। श्रीगुरवे नमः।

## बृहत्पृष्ठोऽग्निष्टोमः

### [ रथन्तरपृष्ठस्य भेदकानि बृहत्पृष्ठस्य प्रतिपदाज्यब्रह्मसामानि ]

अथ बृहत्पृष्ठोऽग्निष्टोमः । तत्र प्रतिपदाज्यानि ब्रह्मसामौष्णिहमित्येतानि रथन्तरपृष्ठाद् भिद्यन्ते । तथा च निदानम्—अथैतानि
5 बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपि इतरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसामौष्णिहमि(नि. सू. ६. ४. ११)ति बार्हतानि च प्रतिपदादिद्रव्याणि लोककामज्योतिष्टोमादिबृहत्पृष्ठेषु कल्पकारेण दर्शितानि। अथ यदि बृहत्पृष्ठोऽग्रियवती प्रतिपत् बार्हतान्याज्यानि बृहत्पृष्ठं श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहीति ॥

10 [ प्रतिपत् ]

तत्र पवस्व वाचोऽग्रिय इत्यस्याः प्रतिपदो बार्हतत्वं निदाने प्रतिपादितम् । ज्योतिष्टोमोऽग्निष्टोम उपवती प्रतिपदित्येषा रथन्तरपृष्ठेऽग्रियवती बृहत्पृष्ठेऽग्रियवद्वार्हतं रूपमुपवती रथन्तरेऽग्रियवती बृहती च भाल्लविनामि(नि० सू० ३. ३. १२)ति ॥

15 [ आज्यानि ]

उपास्मै-तृचे विहितानि धूर्गानानि पवस्व वाचो अग्रिय इत्यत्र कार्याणि । तृतीयायां षाधास्थाने ता इधा इति निरुक्तम् ।
18 अग्निं दूतं मित्रं वयमिन्द्रमिद्गा चतुर्ऋचमिन्द्रे अग्नेत्याज्यानि । बार्हतमेव

---

1. K. Om. बृहत्पृष्टो ··· अथ (L. 3) ; LCV² begin with : हरिॐ and B. with ॐ ; MyBV¹CT. Om. अग्निष्टोमः
3. T. बृहत्पृष्ठात् for रथन्तरपृष्ठात्
5. MyBK. विनिभक्तानि T. विकल्पानि भक्तानि for विभक्तानि
7. My. क्रम° for °काम°; BKMyN¹⁻² T. ज्योतिष्टोमादिषु for ज्योतिष्टोमादि
8. MyBK. अग्र्य, T. अग्र for अग्रिय,
12. V¹⁻²CTMyK. Om. ज्योतिष्टोमो ··· प्रतिपदिति ; CT. एषः for एषा
13. B. Om. बृहत्पृष्ठे ··· रथन्तरेऽग्रियवती

तद्रूपं निर्द्योतयतीति श्रुतेः । इन्द्रमिद्गा चतुर्ऋचेऽन्त्याया उद्धारः । चतुर्ऋचानामावर्तिष्वन्त्यामुद्धरेदि(ला० श्रौ० ६. ४. १०)ति वचनात् । तेषु रथन्तराज्यवत् धूर्गानानि । अनिरुक्तगाने प्रथम आज्ये निहोता-सास्थाने अस्य यज्ञस्येति निरुक्तम् । द्वितीये तु नास्ति विशेषः । तृतीये तु सादास्थाने अनु चतुर्थे गाइभिर्नभोवरेणियास्थाने सुवृक्ति-मैरयामहा इति धियास्थाने अवा । बृहत्पिबतु सोम्यम् इति पृष्ठहोमे विशेषः । यत् पृष्ठं स्यात्तदादिश्येति वचनात् । त्वा-मिद्धीति बृहत्पृष्ठं स्वासु त्वावर्तिनीति वचनात् । स्वयोनीनि सर्वत्रा-भिरूपतराण्यस्वयोनिभ्य इति च । तस्य भरद्वाज ऋषिः । उद्यन् हिंकार इत्यभिध्यानम् । यस्तेगोष्विति जपश्च । संमीलनाद्युद्गीथ-धर्मस्य गोदानस्य च निवृत्तिः । त्वांकाष्ठा इति स्तोभान्तः प्रति-हारः । एवमुत्तरयोः । षोडशस्तोत्रीयासु नाजाइग्यूषा इति पाठः । उत्तमायां नाजिग्यूषा इति । बृहतः स्तोत्रोत्तमायां ब्राह्मणो-क्तानां रोहाणामुत्तमं न कुर्यादित्याचार्याः (नि० सू० २. १०. १७) इत्यादिनिदानवचनात् ॥

---

1. MyBK. after इति add : च
3. BMyKV[1]. निहोतास्थाने for निहोतासास्थाने
4. L. Om. अस्य यज्ञस्येति ; V[1]. missing अस्य ··· वरेणियास्थाने
6. BKMy अपा for अवा ; My इति for बृहत् ; K. Om. बृहत्
7. T. ins. बृहत् after यत् ; T. Om. वचनात्
8. MyK. वचनम् for वचनात् ; BKMy. Om. स्वयोनीनि ; TV[1–2]LC स्वयो-नीति for स्वयोनीनि
9. V[1–2]LC. °योनिग्य् for °योनिभ्य
10. V[1-2] इत्यादिभिरभिध्यानम् LC. इत्यादिभिर्ध्यानम् for इत्यभिध्यानम् ; संमीलोन्मीलनयोश्च, KBV[2] संमीलनाश्च, B. संमीलनान्तं च, My संमीलना-देश्च for संमीलनादि°
12. KTMyB. षोडशसु for षोडश
13. KTMyB. °जाइग्यूषा for °जिग्यूषा
14. V[2] न रोहे कुर्यात्, KMy नराकुह्यात् B. न रुह्यात् T. नू रुह्यात् for न कुर्यात्

## [ ब्रह्मसाम ]

अभिप्रव इति श्यैतं ब्रह्मसाम। यद् बृहते श्यैतं प्रति-
प्रयुञ्जन्ती(तां० ब्रा० ७.१०.८)ति श्रुतेः । प्रजापतिर्बृहतीन्द्रः ।
श्यैतं सामोपधावामि । अभिप्रवर्चमुपधावामि । प्रजापतिमृषिमुपधावामि ।
5 इत्युपसरणे विशेषः । पौष्कलस्य स्थाने तस्यामेवर्चि श्रुध्यम् ।
तस्योदात्तगीतित्वेन बार्हतत्वादौष्णिहत्वाच्च । स्वयोनिश्रुध्यमाग्नेय-
मिति पवमाने न क्रियते । तस्य ऋषिः प्रजापतिरिति बृहत्पृष्ठे
विशेषः । रथन्तरपृष्ठवत् सर्वम् । ब्राह्मणस्य प्रथमे ज्योतिष्टोम-
प्रयोगे रथन्तरमेव पृष्ठम् । द्वितीये बृहत् । तृतीये रथन्तर-
10 मित्येवमजामित्वाय बृहद्रथन्तरयोर्व्यत्यास इत्याहुः । आर्षेयकल्पे न तु
त्रयो वर्णकल्पा इत्यादिना ब्राह्मणस्य सर्वदा रथन्तरमेव पृष्ठम् ।
क्षत्रियस्य तु बृहदेवेत्युक्तम् ॥

इति बृहत्पृष्ठोऽग्निष्टोमः ॥

---

## साग्निचित्यस्य विशेषः

15 ## [ चितिसामानि ]

अथ साग्निचित्यस्य विशेषः । प्रथमोपसदानन्तरसुब्रह्मण्यान्ते
महाग्निं चिन्वन्ति । तस्मिंश्चीयमाने प्रस्तोता पुच्छस्य पश्चिमेन गत्वा
दक्षिणस्य पक्षस्य पश्चात् प्राङ्मुखस्तिष्ठेत् । यत्रोपधानं कुर्वन्ति
ततः पश्चात् वा । पुष्करपलाश उपधीयमाने अध्वर्युप्रेषितो यजमानं
20 सत्यमिति व्याहृतिसाम त्रिर्गायेत् । हिरण्मये पुरुष उपधीयमाने

---

6. MyT. °गीतत्वेन for °गीतित्वेन ; MyBKT. Om. औष्णिहत्वात्
7. TKMyBV1-2C, Cm. न ; V1C. Om. बृहत्
8. MyBA. प्रथमं for प्रथमे ; K. Om. प्रथमे ··· ब्राह्मणस्य (L. 11)
16. V1. प्रथमम् for प्रथम
19. L. अध्वर्युः for आध्वर्यु°
20. LCV1-2. सत्याम् for सत्यम्

पुरुषा इति प्रथमायां चितौ स्वयमातृण्णायां भूरिति मध्यमायां
भुवरिति उत्तमायां सुवरिति व्याहृतिसामानि । प्रजापतिस्तेषामृषिः ।
ऋगभावाच्छन्दो नास्ति । सत्यं पुरुषा अग्निवायुसूर्या इति क्रमेण
देवताः । इष्टकाभिरग्निं चिनोतीत्यध्वर्युर्यजमानो वे(आ०श्रौ० १६.२१.७)ति
आपस्तम्बवचनात् । यदा यजमानः स्वयं चिनुते तदा पुष्कर- 5
पलाशे कर्तव्ये च्योहं मूर्द्धेत्याज्यदोहं त्रिर्यजमानं गापयेत् ।
हिरण्यये पुरुषे कास्मिन् कयान (आ० गा० २२४) इति पुरुष-
व्रतम् । प्रथमायां स्वयमातृण्णायां रथन्तरं तृचे । द्वितीयायां वाम-
देव्यम् । तृतीयायां बृहत् । नाजाइग्यूषा इत्येवात्र पाठः । बृहतः
स्तोत्रोत्तमायामित्यादिना निदाने स्तोत्रशब्देन प्रत्यवरोहस्य विधानात्। 10
रथन्तरादीनि त्रीणि । प्रतिष्ठासि मन्ये वाक्यानोहुवाइमन्य इति
लोकसामानि विकल्प्यन्ते । तेषां त्रिरभ्यासः । मण्डूकविकर्षणान्ते
कृतेऽग्नेर्दक्षिणतो गत्वा शिरसि प्रत्यङ्मुखस्तिष्ठन् अग्न आयूँषीति
तृचे गायत्रं निरुक्तं गायेत् । अग्न आयूंषि पवसोम् । आसुवोर्जमिषं
चानाइआरेबाधस्वदूं १२१२ हुं आइ । छुनो । अग्निर्ऋषिः । पवमानोम् । 15
पाञ्चजन्यः पुरोहाइताः तमीमहे महा १२१२ हुं आइगायो । आ ।
अग्नेपवस्व स्वपोम् । अस्मेवर्चस्सूवीरायां । दधद्रयिं मया १२१२ यि
हुं आपोषो । आ ३४५ । इति पुष्कलो गायत्र्यग्निः । प्रत्या- 18

---

1. MyBKT. after मध्यमायां add : स्वयमातृण्णायां
2. MyBA. भुव इति for भुवरिति ; LTCV[2]. सुवा इति for सुवरिति ; MyBAKTV[1-2]. °साम for °सामानि
5. CKMy. यजमानस्य for यजमानः ; LV[1-2]C. Om. यदा
6. MyBKT. Om. कर्तव्ये
7. LCT हिरण्मये for हिरण्यये
10. MyK शब्दे हिरण्यस्य, B. शब्दे रोहिण्यस्य, K. शब्देन प्रत्यवरोहिण्यस्य, V[1-2] शब्देन प्रत्यवरोहणस्य for शब्देन प्रत्यवरोहस्य
11. My कायमानो for कया नो
12. MyBK. Om. मण्डूकविकर्षं ; L. विकर्षान्ते for विकर्षणान्ते

गम्य दक्षिणे पक्षे उदङ्मुखस्तिष्ठन् रथन्तरं तृचे गायेत् । ततः पश्चात् प्रत्यङ्मुखो वा । पुच्छस्य पश्चिमेन गत्वा उत्तरे पक्षे दक्षिणामुखः पश्चात् प्राङ्मुखो वा बृहत्तृचे गायेत् । प्रत्यावृज्य पुच्छे यज्ञायज्ञीयं तृचे गायेत् यदि संवत्सरो दैक्षः सौत्यो वा ।
5 यथा तापश्चितगवामयनादिषु । अन्यत्र वासन्त इत्यृतुष्ठायज्ञायज्ञीयं त्रिः । प्रजापतिर्बृहत्यृतवः । दक्षिणस्य पक्षस्य पश्चाद्वामदेव्यं तृचे । प्रजापतेर्हृदयमुत्तरस्य । ऋषिर्देवते प्रजापतिः । आक्रमणेष्टकासमीपे श्यैतं तृचे गायेत् । रथचक्रचिदादिषु पक्षपुच्छाद्यभावे तत्प्रदेशे गानमिति विशेषः । समानमग्निष्टोमेन ॥

10 सोऽयं रथन्तरपृष्ठो बृहत्पृष्ठश्चाग्निष्टोमः सर्वक्रतूनां प्रकृति-ज्योतिष्टोमो वाच्यः । तथा च सूत्रे तथाविधस्याग्निष्टोमस्य तन्त्र-मनुक्रम्योक्तम्—एतं परिक्रमं सर्वक्रतुषु विद्यादेष ज्योति(ला०श्रौ० २. १२. १८)रिति । ब्राह्मणे च किं ज्योतिष्टोमस्य ज्योतिष्टोमत्व-मित्याहुरित्युपाक्षिप्य विराजऽ संस्तुतः संपद्यत(तां० ब्रा० ६. ३. ६)
15 इत्यादिना तस्यैव ज्योतिष्टोमत्वं दर्शितम् । उक्थ्यातिरात्रयोस्तु ज्योतिष्टोमत्वं तयोर्ज्योतिःशब्दवाच्यस्य अग्निष्टोमस्यान्तर्भावात् गौणम् । ततश्च यत् कार्यं ज्योतिष्टोमशब्दोपादानेन विधीयते यथा ज्योतिषां विश्वरूपाणां च गानम् । तानि नान्यत्र विश्वरूपाभ्यो न चान्यत्र विश्वरूपा ज्योतिष्टोमादि(ला०श्रौ० १.८.१५.१६)ति ।
20 यथा व धूर्गानं गीतिविकारो गायत्रस्य धुरं स्तोत्रीयानुरूपयो-

---

4. MyBT. Om. गायेत्

6. T. after त्रिः adds : गायेत् ; LC. दक्षिण for दक्षिणस्य ; $V^{1-2}$ after दक्षिणस्य add : अपि

7. L. उत्तरे तस्य for उत्तरस्य

10. $LCV^{1-2}$. प्रकृतिभूतः for प्रकृतिः

12. $CLV^{1}$. °क्रमेण for °क्रम्य

14. $CLV^{1-2}$. Om. इति after आहुः ; $V^{1}$ उपक्रम्य for उपक्षिप्य

16. $LV^{1-2}$ ज्योतिष्टोम° for ज्योतिः

ज्योतिष्टोमस्यैवाज्येषु च नान्यत्रेति। तद्यथोक्ते सर्वक्रतुप्रकृतिभूते ज्योतिष्टोम एव भवति। नोक्थ्यादिषु विकृतिष्विति सिद्धम्॥

[ उक्थ्यसंस्थो ज्योतिष्टोम ]

अथोक्थ्यः। देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्न-भिजेतुमि(तां०ब्रा० ८. ८. १)त्यादिना विहितः। तस्य सर्वमग्निष्टोम- 5 वत्। धूर्ज्योतिर्विश्वरूपाणां निवृत्तिः। अहिंकारविसृष्टहिंकाराः सर्वत्र प्रवर्तन्त एव। अहिंकृता प्रथमा रेतस्या हिंकृताः पराः। रथोत्तम-वर्णोत्तमा विसृष्टहिंकारेति रेतस्या रथन्तरवर्णयोर्विहितयोरेतं परि-क्रममित्यतिदेशात्। तथा च द्वादशाक्षराण्यभिष्टोभेदनुष्टुभमित्य-भिषेचनीये रथन्तरवर्णाया गुणविकारमुपपद्यते। अग्निष्टोमचमस- 10 भक्षणानन्तर एह्यूष्विति साकमश्वं वयमु त्वेति सौभरमधाहीन्द्रेति नार्मेधमित्येतान्युक्थस्तोत्राणि कुर्युः। एकविंशस्तोमः। ऋग्जपादि सर्वमाज्यवत्। कुशाविधानं चमसभक्षणं च यज्ञायज्ञीयवत्। प्रथमं साकमश्वस्य परस्ताज्जपादि चमसभक्षणान्तम्। साकमश्वो गायत्र्यग्निः। ततः सौभरस्य सौभरिः ककुबिन्द्रः। ततो नार्मे- 15 धस्य नृमेधाङ्गिरस ऋषिः। ककुप् प्रथमा। उष्णिक् द्वितीया। उपरिष्टाज्ज्योतिरनुष्टुप् तृतीया। इन्द्रो देवता। सर्वेषां पादेन प्रस्तावः। नार्मेधचमसभक्षणान्ते स्तोमविमोचनादि। उक्थविषयाणि तु विकल्पान्तराणि क्षुद्रकल्पे वक्ष्यन्ते॥

इत्युक्थसंस्थो ज्योतिष्टोमः॥ 20

---

6. V[1-2]. अहिकारा° for अहिंकार; L. °हिंकारौ ... प्रवर्तेते for °हिंकाराः ... प्रवर्तन्ते; CT °हिकारः, B °हिंकारस्य, KM'y. °हिंकारसर्वापवर्तन्ते for °हिंकाराः सर्वत्र प्रवर्तन्ते

10. MyBK. °वर्णायां for °वर्णायाः

18. MyBT उक्थ्य, A उक्थ्या, V[1]. उक्था for उक्थ

19. MyBKTA कल्पान्तराणि, V[1]L. विकल्पानीतराणि for विकल्पान्तराणि

## अतिरात्रसंस्थो ज्योतिष्टोमः

### [ सषोडशिकः पक्षः चमसभक्षणादि षोडशिग्रहग्रहणान्तम् ]

अथातिरात्रसंस्थो ज्योतिष्टोमो देवा वा उक्थान्यभिजित्य(तां० ब्रा० ९.१.१)त्यनुवाकद्वयेन विहितः । स चाषोडशिकः सषोडशिको
5 वेति पक्षद्वयम् । तथा च कल्पः क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिको यदि वा षोडशिमान् ॥ (आ०क० ७.१.१) इति । तत्र षोडशिकपक्षे यथोक्तं नार्मेधचमसभक्षणान्तं कृत्वा स्तोमविमोचनाद्यकृत्वा प्रशास्त्रोक्ताः पूर्ववन्निष्क्रम्य पातमग्नय इति समस्तोपस्थानं कुर्युः । एवमेव निष्क्रम्य पृथक् स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन् यान्यूर्ध्वमुक्थेभ्य
10 इति वचनात् । तत ऋतस्य द्वारौ स्थ इति यजमानोपवहवान्तं कुर्युः । द्वारबाहुसंमार्जनप्रभृत्येनत् सर्वं कुर्युः । यदा धिष्ण्यानुपतिष्ठेरन् (ला० श्रौ० २. ३. १६) इति वचनात् । अथोद्गाता सदसः पूर्वया द्वारा होतृमैत्रावरुणाधिष्ण्यावन्तरेण निष्क्रम्याग्निध्रीयं दक्षिणेन गत्वा पूर्वया द्वारा प्रविश्य यस्मादन्य इति षोडशीत्यन्तेन षोडशिग्रहमवे-
15 क्ष्य यथोक्तं प्रत्यावृज्य स्वासन उपविशेत् । विसंस्थिते सवन इत्येतद्धि सवनसंस्थाव्यतिरिक्तकालोपलक्षणम् । तमुत्तरेण संचारः । सर्वत्र दक्षिणेनोत्तरयोः सवनयोः यदा हविर्धानमाहवनीयं च पृष्ठहोमायेत्यत्र चाग्नीध्रीयस्य दक्षिणोत्तरगमने यावद्व्यवस्थोक्ता तत्र पृष्ठ्यायां उत्तरेषां धिष्ण्यानां प्राक् प्रत्यक् च गच्छद्भिर्व्यवायो
20 न कार्य इत्यत्र न तत् कार्यम् । ततोऽत्रापि हविर्धानगमने यथोक्त
21 एव मार्गो न्याय्यः । प्रातःसवनेऽप्येवमेव यजमानोपहवान्ते षोडशि-

---

3. MyBK °संस्था for °संस्थो
12. T. पूर्वद्वारायां होतुः for पुर्वया द्वारा होतृ°
15. My. स्वस्थानं प्रविशेत्, B. स्वस्थानमुपविशेत् for स्वासने उपविशेत् ; CTV² स्वासनम् for स्वासने
16. BMyKA Om. हि ; BMyK. विसंस्था° for संस्था°
17. BMyKA. Om. सवनयोः ; BMyKA. यथा for यदा
19. MyBKA. पृष्ठायाः, प्रष्ठायाः V¹. पृष्ठ्यायां for पृष्ठ्यायाः
20. MyBKA. Om. अत्र न तत् कार्यम् ; MyBKA तत् for ततः
21. V¹⁻²C न्यायः for न्याय्यः

ग्रहमवेक्षेत । उत्तरयोरपि सवनयोर्यदि षोडशिनं गृह्णीयुस्तदाप्येव-
मेव । प्रातःसवने वा प्रतिसवनं वा धाराग्रहाणामन्ते षोडशिनं
गृह्णीयादित्यध्वर्युणोक्तम् ।

## [ षोडशिसाम ]

षोडशिस्तवनकाले अश्वः कृष्णः पूर्वस्यां सदसो द्वारि 5
प्रत्यङ्मुखस्तिष्ठेत् । इन्द्र जुषस्व (द० रा० ५.२) इति गौरीवितं
षोडशिसामैकविंशम् । एकविंशे हि दाशरात्रे चतुर्थेऽहनि उत्पन्नं
षोडशिसाम । यथाह षोडशिनं प्रकृत्य निदानकारः— चतुर्थोत्पादं
वयं तत्र चास्य ब्राह्मणमधीमहे(नि० सू० २.१३.३) इति । ततश्च
ज्योतिष्टोमप्रकरणे वैकल्पिकतया अनाम्नातमपि चतुर्थे नित्यतयाम्नाय- 10
मानं षोडशिसाम सस्तोत्रीयं इहागमयितव्यमिति सिद्धम् । तस्य
ऋग्जपानन्तरमुपाकृतेन हिरण्येन स्तोमयोगः । गौरीवितः शाक्त्य
ऋषिः । स्वराडनुष्टुप् छन्दः । चतुस्त्रिंशदक्षरत्वात् । यथाह भगवान्
पिङ्गलनागः— द्वाभ्यां विराट्स्वराजौ ( ? ) इति न्यूनाधिका-
भ्याम् इत्यधिकृतम् । निदानकारश्च— द्वाविंशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः- 15

---

3. MyBKA. अध्वर्युभिः, TV². अध्वर्युः for अध्वर्युणा

7. MyBKA. एकविंशः for एकविंशे; MyBKATV². दाशरात्रिके for दाशरात्रे ; V²MyBKA. उत्पन्नः for उत्पन्नं

8. MyBKA. Om. षोडशिसाम । यथाह ; V¹⁻²CL. प्रस्तुत्य for प्रकृत्य

10. LV¹⁻²TA. वैकल्पितत्वात् for वैकल्पिकतया ; KB. Om. चतुर्थे ··· भगवान् (L.13)

11. LV¹⁻² AT. स्तोत्रीयं for सस्तोत्रीयं ;

12. MyA °कृते for कृतेन ; My TA. Om. हिरण्येन ; LV¹⁻² C. after गौरीवितः ins. ऋषिः

14. MyKA °नासः for °नागः ; MyKAB. एका°, V¹⁻²CL. ऊना° for न्यूना°

सप्तवर्गाः द्विशताक्षरासां परार्ध्या । तासां नामधेयानि—राट्-सम्राट् विराट् स्वराट् स्ववशिनी परमेष्ठान्तस्थेति प्रथमस्य (नि०सू० १.५) ॥

इन्द्रो देवता । इन्द्रश्च बृहच्चेति ब्राह्मणम् । अधो गच्छत्या-
5 दित्ये मन्द्रस्वरेण प्रथमं पर्यायं गायेयुः । अर्धास्तमिते लोहितवर्णे मध्यमेन स्वरेण द्वितीयम् । अस्तमिते तृतीयमुच्चैः । दैवात् मानुषाद्वा हेतोः कालान्तरापत्तौ सर्वमेवेदं स्तोत्रमहनि च्छन्नं गेयम् । रात्रावुच्चैः । पादेन प्रस्तावः । चकानश्वा इति प्रतिहारः । एवमुत्तरयोः स्वां स्वां भक्तिं ब्रुवन्तः स्वर्णं धारयेयुः । निधनसमये उद्गाता
10 धारयेत् । उत्तमां प्रस्तुत्य त्यजेत् । अश्वहिरण्ये उद्गाता प्रति-गृह्णीयात् । ऐन्द्रं सह इति भक्षयामीत्यन्तेन चमसभक्षणम् । ततः पूर्ववन्निष्क्रम्य समस्तोपस्थानादि यजमानोपहवान्तं कृत्वा रात्रिपर्यायैः स्तुवीरन् ॥

[ अषोडशिकःपक्षः—प्रथमःपर्यायः ]

15 अषोडशिकत्वपक्षे नाभिधचमसभक्षणानन्तरं निष्क्रमणादि यजमानोपहवान्तं कृत्वा रात्रिपर्यायैः स्तवनम् । तत्र पान्तमिति वैतहव्यम् । प्रव इन्द्राय मादनम् इति शाक्त्यम् । वयमुत्वेति
१८ काण्वम् । इन्द्राय मद्वन इति श्रौतकक्षम् । इति प्रथमः पर्यायः ॥

---

1. T. षड्विंशताक्षरा, V[1]. द्वाविंशत्यक्षराणां for द्विशताक्षरासां
2. KAB. वशिनी for स्ववशिनी ; AKMyB. परमेष्ठी for परमेष्ठा ; L. Om. प्रथमस्येति ; TC. पथ्यस्य, V[1-2]. पथ्यस्य for प्रथमस्य
5. My. Om. अर्धास्त°···प्रस्तावः (L. 8) ; KAB. Om. लोहितवर्णे
6. B. Om. तृतीयम् ; KB. Om. दैवात्···प्रस्तावः (L. 8)
7. C. कल्पान्तर° for कालान्तर
8. KB. Om. प्रतिहारः···ऐन्द्रं सह इति (L. 11)
13. T. Om. स्तुवीरन्···रात्रिपर्यायैः (L. 16)

[ मध्यमः पर्यायः ]

अयं त इन्द्रेति दैवोदासम् और्ध्वसद्मनं वा। आ तू न इन्द्र क्षुमन्तमित्याकूपारम् । अभि त्वा वृषभा सुत इत्यार्षभम् । इदं वसो सुतमन्ध इति गारम् । इति मध्यमः ॥

[ उत्तमः पर्यायः ] 5

इदं ह्यन्वोजस इति माधुच्छन्दसम् । आ त्वेता निषीदतेति दैवातिथम् । योगे योगे इति सौमेधम् । इन्द्र सुतेष्विति कौत्सम् । इत्युत्तमः ॥

[ पर्यायसाम्नामृषिच्छन्दोदैवतानि ]

तेषां वीतहव्यः शाकृत्यः कण्वः श्रुतकक्षः दिवोदासः 10 ऊर्ध्वसद्मा आकूपाराङ्गिरस ऋषभः गरः मधुच्छन्दा दैवातिथिः सुमेधाः कुत्स इति क्रमादृषयः । प्रथमस्य साम्नः प्रथमानुष्टुबुत्तरे गायत्र्यौ संपत्त्यागानकालेऽनुष्टुभौ । अन्येषां तु सर्वा गायत्र्यः संपत्त्यानुष्टुभः । सर्वेषामिन्द्रो देवता ॥

[ पञ्चदशस्तोमादि हारियोजनभक्षणान्तम् ] 15

पञ्चदशस्तोमः । पञ्चपञ्चिनी विष्टुतिः । प्रतिस्तोत्रमृग्जपादिचमसभक्षणान्तम् । नाप्यायनम् । इन्दविन्द्रपीतस्येत्यनुष्टुप् छंदस इति भक्षयामीत्यन्तेन भक्षणम् । श्रौतकक्षार्षभयोर्वान्तः प्रस्तावः । दैवोदासस्य षोडशाक्षरः । इतरेषां पादः । प्रथमेन पर्यायेण स्तुत्वा निष्क्रमणादि यजमानोपहवान्तं कुर्युः । एवं मध्यमेनोत्तमेन च । पृथक् स्तोत्रेभ्यः 20 समस्तेनोपतिष्ठेरन् । यान्यूर्ध्वमुक्थेभ्यः पर्यायेभ्यस्तु रात्रेरि(ला० श्रौ० २. ७. ४-५)ति वचनात् । ततः एनाप्रत्यू इमा उवामिति प्रतितृचं हिंकृत्य त्रिवृता रथंतरेण संधिस्तोत्रं कुर्युः । रथंतरस्य ऋषिच्छन्दसी उक्ते 23

11. L. °ङ्गिरसी, T. °ङ्गिरसौ, MyBKA °ङ्गीरसी for °ङ्गिरसः

21. LCV[1-2] रात्र इति for रात्रेरिति

अग्निरुषाश्विनाविति प्रतितृचानां क्रमेण देवताः । संधेरनावृत्ति-
स्तोत्राङ्गत्वेऽप्यावृत्तिः स्तोत्राङ्गत्वात् । कुशाविधानम् । तथा च
निदानम्— शिरसि कुशानवधीयेरन्नित्येके पराक्त्वादावृत्त्यङ्गभावात्तु
विधीयेरन्नेतेन संधिरुक्त (नि० सू० १. १०. २१-२३) इति ।
5 तिसृभ्यो हिंकरोति । स पराचीभिरिति परिवर्तिनी विष्टुतिः ।
द्वितीयां त्रिवृतः पथ्यामेके विष्ठावा ह्याद्या संहारशिरःसंधिसंततिषु
चानुपपन्नेति वचनात् । तत्रैकां कुशामुदग्रां निधाय ततः पश्चात्
प्रागग्रां ततः पश्चात् उदगग्रां निदध्यादित्येकः पर्यायः । तथोत्तरौ ।
ततः स्तुतस्य स्तुतमसीत्यादि ऋग्जपान्तम् । आश्विनशस्त्रान्ते
10 भक्षः । आहृते श्येन इत्यवेक्ष्य इष्टयजुष इति भक्षयाम्यन्तेन
भक्षयेयुः । स्तोमविमोचनादि पूर्ववत् । शस्तोक्थस्य तिरोअहन्यस्य
योऽश्वसनिरिति हारियोजनभक्षणे विशेष इति ॥

## [ ज्योतिष्टोमस्य संस्थाविकल्पाः ]

एवं ज्योतिष्टोमस्य तिस्रः संस्था उक्ताः । तत्र सूत्रम्—
15 स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पाः । आग्निष्टोम्यमुक्थ्यताति-
रात्रमि(ला० श्रौ० ८. १. १७)ति । स्वतन्त्रस्येति क्रत्वन्तराङ्गभूतस्य
नित्यतया काम्यतया वा प्रयोज्यस्येत्यर्थः । तिसृणामपि संस्थानां
18 मन्त्रभेदेन प्रथमत्वं सर्वाभिप्रायं च उपपादितं निदाने—

---

2. BKA. अनावृत्य V[1-2]C. अनावृत्तिः for आवृत्तिः ; TBMyKA. Om. स्तोत्राङ्गत्वेऽप्यावृत्तिः ; BMyKATV[1] Cm. तथा च निदानम्

3. V[1-2]C. एते, T. एतेन for एके ; MyBKA. Om. इत्येके ; V[1-2]KAT. पराक्त्वावृत्ति°, C. परक्त्वावाक्त्वावृत्ति° for पराक्त्वादावृत्ति°

6. B. पर्यायाम्, KA. पर्याम् for पथ्याम्

11. KAMyB. शस्तोक्थ्यस्य for शस्तोक्थस्य

12. KTA. हार्यो° for हारियो

18. BMyKA. °प्रायत्वं for °प्रायं

अथ का प्रथमा संस्था (नि० सू० ३. १. १) इत्यादिखण्डद्वयेन । अन्ये तु ज्योतिष्टोमस्य सप्त संस्था अनुक्रामन्ति । अग्निष्टोमोऽत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति । तत्र अग्निष्टोमचमसभक्षणानन्तरं यदा विधाय षोडशिस्तोत्रं ज्योतिष्टोमः समाप्यते सोऽत्यग्निष्टोम इत्युक्तः । तदा क्षत्राधिकारः । नित्यं 5 चास्य बृहत्पृष्ठं तत् क्षत्रियो यतः श्रूयते हि षोडशिनं प्रकृत्य तैत्तिरीयकम्—अत्यग्निष्टोमो राजन्यस्य गृह्णीयाद् इति । षड्विंशब्राह्मणं च—ब्रह्म वै रथन्तरम् । क्षत्रं बृहत् (ष० नि० ब्रा० ४.२.३) इति । बृहत्पृष्ठे च विशेषः पूर्वमेव दर्शितः ॥

अग्निष्टोमात् परं यत्तु षोडशिग्रहवीक्षणम् । 10
तन्निष्क्रमाद्यकृत्वैव कार्यमन्यत्र पूर्ववत् ॥

यश्चोक्तः कालनियमः सूर्याधोगमनादिकः ।
सोऽपेक्षणीयो नैवास्य न संधिस्तोत्रता यतः ॥

उक्तं निदाने संधित्वमुक्थ्यानन्तरजस्य हि ।
उदयसंधिरसावस्तमयसंधिरयं त्विति ॥ 15

अहस्तोत्रतया छन्नं तदनेन भवेत्स्तुतिः ।
उच्चैस्तु रात्रिमापन्ना यदि दैवादिहेतुना ॥

धूर्ज्योतिर्विश्वरूपा न शेषं प्रकृतिवन्मतम् ।
उक्थानन्तरसंभूतषोडशिस्तोत्रसंस्थितिः ॥ 19

---

2. V[2] ins. सोम after सप्त ; CLV[1-2]MyBKA. °संस्था नु for संस्था अनु°

4. MyBKA. चमसस्य for चमस; CV[1-2]T षोडशी° for षोडशि°

5. V[1]. ततः for तदा ; MyKABT. क्षत्राधिकारिकं for क्षत्राधिकारः

10. T. °ग्रहावेक्षणम्; for ग्रहवीक्षणम् ;

11. V[1-2] CL.T निष्क्रमणा° for निष्क्रमा°.

15. LV[1] असौ for अयं तु ; V[2]TL. Om. तु.

19. TC MyBKA, उक्थ्या° for उक्था°

ज्योतिष्टोमो निदानोक्तो ज्ञेयः षोडशिसंज्ञया ।
उक्तं हि निदाने ज्योतिष्टोमं षोडशिनं चाधिकृत्य संस्थामप्यस्यैतां विद्यमानां मन्य इति गौतमः । एवं च रहस्यब्राह्मणे दर्शयत्यप्यनेन षोडशिसंस्थेन यजेते(नि० सू० २. १२. ९-१०)ति ॥

5 अथ वाजपेयः अप्तोर्यामश्चेति ज्योतिषः संस्थे उपरि-क्रत्वन्तरयोस्तयोः प्रसङ्गे प्रदर्शयिष्यामः ॥

[ ज्योतिष्टोमसंस्थानां नित्यत्वम् ]

सर्वे ज्योतिष्टोमसंस्था नित्या इति ब्रुवते । चत्वारिंशत्-संस्कारमध्यपाठेन गौतमीयेन तत्राग्निष्टोमेन विकारात् ब्राह्मणस्य
10 सप्तैता ज्योतिःसंस्था नित्या इत्युक्तिर्नोपपन्ना । यच्चात्र सोमसंस्था इति वचने सोमशब्दोऽयं सुत्यासंयुक्तस्य क्रतुमात्रस्याभिधायको युक्तः । अत एव सूत्रकारः सर्वासां सोमयागसंस्थानां ब्रह्मत्व-मुपदिदिक्षुर्वदति यथा गौतमेनोक्तम् । तस्मादेताः संस्थायाः काश्चन सप्तसौमिक्यो नित्यतया कार्या इति निश्चिनुमो गौतमीय-
15 वचनार्थम् । एवं च वाजपेयं क्रत्वन्तरभूतमधिकृत्य आपस्तम्बेनोक्तम् — नित्यवदेकं समामनन्ति (आप० श्रौ० १८. १. २) इति । एकस्य तूभयत्वे संयोग पृथक्त्वम् इति च । जैमिनिनोक्तं— नित्यत्वं
18 काम्यत्वं चाविरुद्धमेतासामिति ॥

---

1. L ज्योतिष्टोमे निदानोक्तांतिमषोडशिसंज्ञया for ज्योतिष्टोमो ...... संज्ञया ; V[2] ज्योतिष्टोमे for ज्योतिष्टोमो ; V[1]. निदानोक्तोंतिमे, V[2]C. निदानोक्तोतियो for निदानोक्तो ज्ञेयो
3. KB. विष्याम: for मन्य इति गौतम: ; CV[2]. T. विद्यमानानां for विद्यमानां ; T. मन्यत° for मन्य°
5. V[1-2]TL. °यामं for °यामः
8. MyBKAT. सर्वा for सर्वे
9. V[1]. मध्ये for मध्य ; BKA. °पतनेन, My °पातनेन for पाठेन
10. C. Om. संस्था......°याग (L. 12)
11. V[1-2]. वचस: for वचने
13. MyBKA. Om. यथा

इत्थं वरदराजेन वामनार्यस्य सूनुना ।
ज्योतिष्टोमस्य यत्तन्त्रमौद्गात्रं तत्प्रदर्शितम् ॥

---

## सत्रात्मा व्यूढो द्वादशाहः

अथ व्यूढः समूढश्च द्वादशाहो द्विधा मतः ।
सत्राहीनत्वभेदेन प्रत्येकं द्विविधः स च ॥ 5

विहितः षड्भिरध्यायैर्ब्राह्मणे दशमादिभिः ।
व्यूढः सत्रात्मकस्तावद् द्वादशाहोऽत्र कथ्यते ॥

तस्याभितोऽतिरात्रौ षोडशिमन्तौ तु कल्पकारोक्त्या ।
दशरात्रेऽग्निष्टोमावभितोऽष्टौ मध्य उक्थ्याश्च ॥

तत्र मानसं च। षोडशिमच्चतुर्थमहः। दशममविवाक्यम् । पूर्वः 10
षडहः पृष्ठ्यश्छन्दोमः । उत्तरश्चतुरहः ।

[ द्वादशाहिकस्य नवरात्रस्य छन्दसां व्यूहः ]

तत्र व्यूढशब्दस्य प्रवृत्तिनिमित्तं ब्राह्मणे दर्शितम् । छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् । गायत्री त्रिष्टुभः । त्रिष्टुप् जगत्याः । जगती गायत्र्याः । तानि व्यौहन् यथालोकम् (ता० ब्रा० १०.५.१३) इति । 15
अस्यार्थः । छन्दांसि गायत्र्यादीनि परस्परस्य स्थानमकामयन्त । 16

---

1. CLV[1-2]T. वामनाचार्यं for वामनार्यस्य
5. LCV[1-2]. तथा for स च
9 LV[1]. अनु for तु ; BMyKA. Om. तु ; MyKA. °कारोक्ता, T. °कारोक्तौ, B. °कारेण for °कारोक्त्या
9. MyAV[1]. दशरात्रौ°, BK. दशरात्रौ for दशरात्रे
10. KAMyBIC. Om. तत्र मानसं च ; MyBTKA. तुरीयम् for चतुर्थम् V[1-2]TCMyB. before दशमम् ins. मानसवद् ; MyBKA. अनुविवाक्यम् T. अहरविवाक्यम्, V[1-2]C अभिवाक्यः for अविवाक्यम्
15. L. गतानि for तानि°
16. L. परस्परं, V[1]CT. परस्पर° for परस्परस्य ; LV[1]C अकामयत for अकामयन्त ; MyBKAT. Om. स्थानमकामयन्त । किं छन्दः कस्य स्थानम्

किं छन्दः कस्य स्थानम् अकामयतेत्यपेक्षायामुक्तम्—गायत्री त्रिष्टुभः। त्रिष्टुप् जगत्याः । जगती गायात्र्याः। इति । अत्र अन्योन्यस्येत्युपक्रमात् सामर्थ्यात् त्रिष्टुप् गायत्र्याः स्थानमकामयत। जगती त्रिष्टुभो गायत्री जगत्या इत्यपि कथितं भवति । तान्य-
5 भिध्यातपरस्परलोकानि छन्दांसि यथालोकं व्यौहन्। यथाभिध्याते स्थाने विभागेनातिष्ठन्निति । एवं स्थितिर्दशाहस्य संभवतीति । प्रथमे त्र्यहे स्वस्थान एव गायत्र्यादीनां स्थितिः । द्वितीये त्र्यहे गायत्री त्रिष्टुभः । त्रिष्टुप् जगत्याः । जगती गायत्र्या इति व्यूहः । तृतीये त्र्यहे त्रिष्टुप् गायत्र्याः । जगती त्रिष्टुभः ।
10 गायत्री जगत्या इति व्यूहः । तत्र यद्यपि गायत्र्याः सर्वमेव प्रातःसवनं स्थानं तथाप्याज्यबहिष्पवमानप्रतिपत्स्वेव छन्दोऽन्तरनिवेश इत्यृक्समाम्नायात् ब्राह्मणसमाम्नायाच्चावसीयते । त्रिष्टुभः स्थानं माध्यंदिनसवनान्त्यतृच इति । तत्र छन्दोऽन्तरनिवेशः । एवं जगतीस्थानमप्याभर्वान्त्यतृचम्। सोऽयं नवरात्रस्य व्यूहः । दशमे
15 त्वहनि छन्दोमव्यूहो नास्ति। तस्य पूर्वयोस्त्र्यहयोः समाप्तत्वात्। सामव्यूहस्तु तत्र क्रियते । तथा च निदानम्—समाप्ते छन्दोव्यूहे सामव्यूहं कुरुत इति गौतमोऽक्तकारार्थ (नि० सू० ४. ९. २०) इति। स च सामव्यूहस्तत्रैव दर्शयिष्यते॥

## [ प्रायणीयोऽतिरात्रो ज्योतिष्टोमः ]

20 तथा चास्य द्वादशाहस्य प्रयोगः। सप्तदशावराश्चतुर्विंशति-

---

4. K. Om. जगती त्रिष्टुभो···संभवतीति (L. 6)
5. AV[1-2]BMyT. °ध्यान° for °ध्यात; TAV[1-2]CMyB. °ध्याने for °ध्यते
14. MyBK. °स्थानेऽप्याभिप्रियान्त्ये तृचे for स्थानमप्याभर्वान्त्यतृचम्
17. B. गौतमोक्तप्रकारार्थः for गौतमोऽक्तकारार्थः
20. LCV[1-2]T. Om. च

परमाः। सति संभवे सर्वे इष्टप्रथमयज्ञाः। पृथक् स्तोत्रोपाकरणानीष्ट्वा समारोप्याग्नीन् सत्रमासीरन्। असंभवे गृहपतिरेवेष्टप्रथमयज्ञः। इतरे त्वनिष्टप्रथमयज्ञाः। आहिताग्नयोऽनाहिताग्नयो वा सत्राय दीक्षिष्यमाणा (ला० श्रौ० ३. ३. ९) इत्यादिना निर्मथ्येनाहिताग्नि(ला० श्रौ० ३. ४. ६)मित्यन्तेन सत्रिणां धर्मा उक्ताः। 5
तस्य द्वादश दीक्षा द्वादशोपसदः। दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुः (ला० श्रौ० १०. १. १) इत्यारभ्य तेषां द्वादश दीक्षास्तथोपसदोऽनादेशे (ला०श्रौ० १०. १. ५) इत्युक्तत्वात्। द्वादश दीक्षा द्वादशोपसदो द्वादशः प्रसुतः (तां० ब्रा० १०. ३. ९) इति श्रुतेश्च। सुब्रह्मण्यायां प्रथमोपसद्दिवसे द्वादशाहे सुत्यामागच्छेति सुत्यादेशः। 10 द्वितीयादिष्वेकादशाहे दशाहे नवाहेऽष्टाहे सप्ताहे षडहे पञ्चाहे चतुरहे त्र्यहे द्व्यहे श्वः सुत्यामिति। द्वादशादयः शब्दा अन्तोदात्ताः। दीक्षानुपूर्व्येण दीक्षितानां सत्रेषु नामग्राहः कर्तव्यः। सुत्यासु यज्ञसारथिस्थाने सत्रस्यर्द्धिं गेयम्। प्राक् प्रातरनुवाकोपाकरणादाग्नीध्रीयेऽहरहः सत्रे सत्रस्यर्द्धिं इति 15 वचनात् लोकद्वारगानं सहोमं सर्वैरपि यजमानैः कार्यम्। प्रातरनुवाकोपक्रमणवेलायाम् अद्य सुत्याप्रवचनीं सुब्रह्मण्यामाह्वयेत्। विश्वरूपा ज्योतिर्गाने न स्युः। द्रोणकलशाध्यूहनमन्त्रे इदमहमिमान् 18

---

1. LC स इष्ट 'for सर्वे इष्ट°; KAB इष्टप्रथमः यज्ञ', My इष्टप्रथमयज्ञः for इष्टप्रथमयज्ञाः ; BMyTKA. सत्रोपकरणानिष्ट्वा for स्तोत्रोपाकरणानीष्ट्वा

6. MyBKA. तत्र for तस्य

8. V[1]. द्वादश for तथा

9. MyBKAV[1-2]T द्वादशः for द्वादश; T. प्रसूतः, V[1]. प्रस्तुतः, for प्रसुतः

11. T. after द्वितीयादिषु ins. अहःसु and BMyKA. तु

13. L. after दीक्षितानां ins. तु

15. C after सत्रस्यर्द्धि इ upto माध्यंदिनपवमानः blank

16. LCV[1-2]. Om. यजमानैः

यजमानान् पशुष्वध्यूहामि इत्यूहः कार्यः । यजमानशब्दं सर्वत्र यथार्थं कुर्युरि(ला० श्रौ० १. १०. ६)ति वचनात् । प्रशुक्र इति धारानुमन्त्रणमन्त्रे यजमानानामृध्या इत्यूहः । अतिरात्रादिषु सर्वेष्वहस्सु बहिष्पवमाने रेतस्यारथन्तरवर्णे कर्तव्ये । न धूर्गानादि । धिष्ण्योप-
5 स्थानात् पूर्वं वपामार्जनकाले इदमाप इत्यादि द्विष्म इत्यन्तेन मार्जनम् । सदः प्रसृप्योपहवकाले सर्वेषां यजमानानां परस्परमुपहवः । चमसभक्षणकाले यजमानचमसमपि भक्षयेयुरुद्गातारः । तेषामपि यजमानत्वात् । उद्गातॄणाम् अग्निर्होतेति याजमानम् । अनुसवनं सवनमुखीयान् भक्षयित्वा सत्रेषु नाराशंसेषु भोजनम् । माध्यंदिनार्भवयोर्हविर्धान-
10 गमनं सर्वेषामुद्गात्रादीनाम् । उभयत्र सर्वे सर्वेष्विति वचनात् । माध्यंदिनेन स्तुत्वा सत्रेषु दधि घर्मस्य भक्षयेयुः । ससुपहूय दधिक्राव्ण इति । सत्रेषु ऋत्विजामपि यजमानत्वाद्दक्षिणा न सन्ति । तदुक्तम्—स्वामिनो हि सर्वे सत्रेषु । तेषां प्रतिग्रहं न विद्यते (ला० श्रौ० १०.१७.१७) इति । अत्रेयं प्रसर्पकादीनामस्त्येव । स्तोमविमोचनान्तरे
15 यजमानवाचने पुत्रा अनु मा तनुत ज्योतिषेति विशेषः । जातेष्वजातेषु च पुत्रा इत्येव सत्रेष्वि(ला० श्रौ० २. ११. ५)ति वचनात् । अप्सुषोमान्तानि सर्वाण्यहानि । अप्सुषोमान्तमहः सत्रेषु (ला० श्रौ० २. १२. १४) इति वचनात् । अहर्गणेष्वहराद्यन्तयोराह्वये-दि(ला० श्रौ० १. ४. ८)ति वचनात् । अहरन्तेऽपि सुब्रह्मण्या कार्या ।
20 श्वःसुत्यामिति सुत्यादेशः । तस्या उत्तरार्धत्वात् । इन्द्राग्निभ्यामिति
21 प्रैषकाले श्वःसुत्याप्रवचनीं सुब्रह्मण्यां केचिदिच्छन्ति । तत्

---

2. $V^{1-2}$ L प्रशुक्रैतु for प्रशुक्र इति

4. $LV^1$. धूर्गानं for धूर्गानादि ; $LV^1$. Om. धिष्ण्योपस्थानात् पूर्वं ; $V^2$. Om. धिष्ण्योप ⋯ द्विष्मः

6. MyBTKA. प्रविश्य for प्रसृप्य

8. BMyKA. यजमानं for याजमानम् ; T. after याजमानं adds : अनुसवनम् ; T. after अनुसवनं adds : तु-and $V^1$ वाचनं

21. $V^1V^2$ सुत्यामिति for सुत्या; $V^1$ प्रवचनं fr प्रवचनीं

सूत्रकारस्य । नेष्टम् । अहर्गणेष्वहराद्यन्तयोराह्वयेदि(ला० श्रौ० १. ४.८)ति सुब्रह्मण्याद्वयस्यैव विधानात् । ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे वे(ला० श्रौ० १. ४. २०-२१)ति लिङ्गाच्च । तत्र धानंजय्यमतेनाहरन्तिक्या अतिरात्रे नाह्वानमाश्रित्यैके इत्युक्तम् । मतान्तरेण त्वाह्वानमाश्रित्य द्वे इति । यदि चातिप्रैषकालेऽपि 5 सुब्रह्मण्या अभिमता स्यात् [तदा] द्वे तिस्रो वेति वाच्यं स्यात् । वसतीवरीपरिहरणकाले तु कर्तव्या । तत्र प्रायणीयोऽतिरात्रो ज्योतिष्टोमः षोडशीमान् पूर्वोक्तः । तस्य पथ्या एव विष्टुतयः । उत्तरस्मिन्नहनि वक्ष्यमाणक्रमेण सर्वा वा । अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः । सर्वा एवेति धानंजय्य (ला० श्रौ० ६. २. ३०-३१) 10 इति वचनात् । संधिषामान्ते स्तोमविमोचनादि अप्सुषोमान्तं कार्यम् । तस्यान्ते श्वःसुत्या गौतमस्य । नार्भेधान्ते एके । अद्यसुत्या शाण्डिल्यस्य । (ला० श्रौ० १. ४. १३-१५) नात्र नामग्रहणम् । ऊर्ध्वमतिरात्रादग्रहणमि(ला० श्रौ० १.४.१२)ति वचनात् । आहरन्तिक्या अनाह्वानं धानंजय्यः ॥ 15

## [ द्वादशाहिकस्य दशरात्रस्य प्रथमस्याह्नः ]

अथ दशरात्रस्य प्रथममहः । तत्र सत्रस्यर्द्ध्यादि पूर्ववत् । सुब्रह्मण्यायां नामग्रहणम् । अस्य प्रत्ना नवर्चं बहिष्पवमानम् । 18

---

4. LV[1-2]. धानंजय्यः । तेना° for धानंजय्यमतेना ; L. आहरन्तिकी, V[1]. आहरन्तित्वी, V[2]. आहरन्तित्वा A. आहरन्तिक्यम् for आहरन्तिक्या

5. MyBKAT. Om. यदि

7. V[12]KAMyB. T. कर्तव्याः for कर्तव्या

9. BMyKA. सर्वे for सर्वाः;

12. V[1]. नामग्रहणान्ते for नार्मेधान्ते

18. MyKV[1-2]. सुब्रह्मण्यायाः fr सुब्रह्मण्यायां; T. ins स्व before नाम

तत्रोपास्मै गायता नर उयोषुजातमप्तुरमिति ऋग्द्वयं प्रतीकेनोपात्तम् । सर्वेषमह्नां ज्योतिष्टोमवत् छन्दोदेवताः । विशेषस्तु तत्र तत्र वक्ष्यते । प्रायणीयोदयनीयातिरात्रव्यतिरिक्तानामह्नां सदसि बहिष्पवमानैः स्तवनम् । अहीनबहिष्पवमानैः सदसि स्तुवीरन् । प्रथमादह्नोऽन्यत्राद्यन्त-
5 योस्तु सत्रेष्वि(ला० श्रौ० २. २. १-२)ति वचनात् । आद्यन्तयोरिति पञ्चम्याः स्थाने षष्ठी । सत्रेष्वाद्यन्ताभ्यामहोभ्यामन्यत्र बहिष्पव-मानैः सदसि स्तुवीरन्नित्यर्थः । प्राक् धिष्ण्यविहरणान्निष्क्रभ्य तृणप्रासनप्रभृत्युपरिष्टाज्जपान्तं कुर्युः ॥

अग्न आनो मित्रायाहीन्द्राग्नी इत्याज्यानि । प्रसोमासो
10 विपश्चित इति गायत्रमेकस्याम् । अभिद्रोणानि बभ्रव इत्याश्वमेकस्याम् । सुता इन्द्राय वायव इति सोमसामैकस्याम् । प्रसोमदेववीतय इति यौधाजयं तिसृषु । प्र तु द्रवेत्यौशनं तिसृषु । इति माध्यंदिनः पवमानः ॥

माध्यंदिनेन स्तुत्वा दधिघर्मभक्षणम् । रथंतरादीनि पृष्ठानि ॥

15 रथंतरं च वामदेव्यं च नौधसं च कालेयं चेति पृष्ठानि ।

रथन्तरस्य स्तोत्रे बहिर्वेदि पश्चात् प्राञ्चं दक्षिणतो वोदञ्चं रथमिति वहेयुः ॥

प्रसोमासो मदच्युत इति गायत्रं प्रथमायाम् । तस्यामेव सहितम् । अया पवस्व देवयुः । पवते हर्यतो हरिरिति
20 जनुत्रैकर्चयोः सप्ताक्षरे । प्रसुन्वानायान्धस इति प्रथमायां गौरीवितगौतमे । अभिप्रियाणीति तृचे काव्रमित्यार्भवः ॥

22 संभवति स्तोमेऽन्त्यं सर्वत्र तृच इति वचनादेवं तृचैकर्चकरणम् ॥

---

7. V[1-2] after सदसि adds. स्तुवीत

14. V[1-2]BMyKTA. Om. रथंतरादीनि पृष्ठानि

यज्ञायज्ञीयमग्निष्टोमसाम ॥

अस्याह्नः सर्वाणि स्तोत्राणि त्रिवृन्ति । सत्रेषु दशरात्रे सर्वा विष्टुतीः प्रयुञ्जीत । अभिचरणीयां भस्त्रां चोद्धृत्येति शाण्डिल्यः । कुलायिनीं भस्त्रां चेति शाण्डिल्यायनः । भस्त्रामेवेति धानंजय्यः । पथ्याभिर्होतृषामाणि विदध्यात् । अपथ्याभिरितराणि । समाप्ता सुता एवादितः पुनः प्रयुञ्जीत । तमेतं पुनः प्रयोगं कुर्वन् प्रथमस्याह्नः प्रागाथिकानि सामानि रथन्तरनौधसकालेययज्ञायज्ञीयानि परिवर्तिन्या विष्टुत्या विदध्यादिति शाण्डिल्यः । सकृत्सर्वाः समाप्य पथ्ययैव तत ऊर्ध्वं विदध्यादिति धानंजय्यः । असमाप्तासु त्वपि होतृषाम पथ्ययैव । 10 तमिमं सकृत्प्रयोगकल्पं कुर्वन् कुलायिनीं चेत् प्रयुञ्जीत प्रथमस्याह्नो द्वितीयं पृष्ठं तया विदध्यात् । अत्र त्रिवृत्स्तोमस्य पञ्च विष्टुतयः । उद्यती कुलायिनी परिवर्तिनीति तिस्रः । अभिचरणीये द्वे इषुसंज्ञे षड्विंशब्राह्मणेऽधीते । उद्यतीपरिवर्तिन्योः पथ्यात्वे विकल्पः । त्रिवृतः पथ्यायां विवदन्त (नि०सू० १. १०. १०) इत्यादिनिदान- 15 वचनात् । उद्यत्या विष्टावाभावात् । तृचभागस्थाने कुशाविधानम् । एकपर्यायवद्वा । तदुक्तम्—तदभावे तृचभागस्थानेषु पर्यायाणां पर्यायाः स्युः । यथैवैकः पर्यायः (ला० श्रौ० ६.५.७-८) इति । एवं च धानंजय्यमते परिवर्तिन्युद्यतीभ्यामिषुद्वयेन चाज्यानि विधाय कुलायिन्या वामदेव्यं परिवर्तिन्यैवेतराणि च विदध्यात् । एव- 20 मितरयोरपि मतयोर्द्रष्टव्यम् । अस्याह्नोऽग्निष्टोमसामान्ते स्तोमविमोचनाद्यप्सुषोमान्तम् वसतीवरीपरिहरणकाले श्वःसुत्याप्रवचनी सुब्रह्मण्यानामवर्जम् ॥ 23

---

10. T. असमाप्ता सुत्यापि for असमाप्तासु त्वपि

17. V[1]. एकः पर्यायः यद्वा for एकपर्यायवद्वा; MyBKA. एकः for एक; LV[1]. भागा° for भाग°

20. BMyKA. कुलायिन्यां for कुलायिन्या

21. LV[1-3], Om, अपि मतयोः

## अथ द्वितीयस्याह्नः

सत्रस्यर्ध्यादि सुब्रह्मण्यान्तम् ॥

पवस्ववाचो-पवस्वेन्दो-वृषासोम-वृषाह्यसि-पवमानस्य ते वयम् इति बहिष्पवमानम् ॥

5 अग्निं दूतम्—मित्रं वयम्—इन्द्रमिद्गा-चतुर्ऋचम्। इन्द्रे अग्ना- इत्याज्यानि ॥

चतुर्ऋचेऽन्त्याया उद्धारः ॥

वृषा पवस्व धारयेति गायत्रयौक्ताश्वे ।
पुनानः सोमधारयेत्यैडमायास्यं त्रिणिधनं च ।
10 वृषा शोण इतीहवद्वासिष्ठामिति माध्यंदिनः पवमानः ॥

बृहच्च वामदेव्यं च माधुच्छन्दसमिति पृष्ठानि ॥

बृहतः स्तोत्रे दुन्दुभिमाहन्युः ॥

यस्ते मदोवरेण्य इति गायत्रहाविष्मते पवस्वेन्द्रमच्छेति शङ्कु-सुज्ञाने । अयं पूषा रयिर्भग इति गौरीवितक्रौश्वे ।
15 वृषामतीनाम् इत्यार्भवः ॥

शङ्कुसुज्ञानगौरिवीतान्येकर्चानि । आर्भवे चेदेकोऽनुष्टुभि द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणे(ला० श्रौ० ६. ३. २५-२६)ति वचनात् ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥
20 एह्यूष्विति साकमश्वम्। एवाह्यसि वीरयुरिति आमहीयवम् ।
21 इन्द्रंविश्वा इत्याष्टादंष्ट्रं पूर्वम् इत्युक्थानि ॥

---

2. V[1-2] °ध्यादीनि for °ध्यादि L. Om. सुब्रह्मण्यान्तम्

12. MyBKA. उपहन्युः, T. आह्वयस्व for माहन्युः

21. KTA. उक्थ्यानि for उक्थानि

विकृतिषु सर्वत्रोत्तममुक्थ्यं सर्वानुष्टुभम् । ननु प्रकृतिवद्विच्छन्दस्कमित्युक्तम् । प्रागस्याह्नः सर्वाणि स्तोत्राणि पञ्चदशस्तोमानि । पञ्चभ्यो हिंकरोतीत्यारभ्य पञ्चदशस्तोमस्य तिस्रो विष्टुतयोऽधीताः । षड्विंशे चैकाभिचरणीया । उक्थान्ते स्तोमविमोचनादि सुब्रह्मण्यान्तं पूर्ववत् ॥ 5

इति द्वितीयस्याह्नः ॥

---

## तृतीयस्याह्नः

सत्रस्यर्द्ध्यादि ॥

दविद्युतत्या रुचा-एते असृग्रमिन्दवो-राजामेधाभिरयितेतं त्वा नृम्णानि-पञ्चर्चम् । 10

इषे पवस्व धारयेति बहिष्पवमानम् ॥

अग्निना·मित्रं हुव-इन्द्रेण-ता हुव-इत्याज्यानि ॥

उच्चा ते जातमन्धस इति गायत्रं क्षुल्लकवैष्टम्भं च ।

अभिसोमास आयव इति पौरुमद्गं प्रथमायाम् ।

गौतमं तिसृष्वन्तरिक्षं तिसृष्वाक्षारनिधनमध्यास्यायां तिस्रो वाच इत्याङ्गिरसांसंक्रोश इति माध्यंदिनः पवमानः ॥ 15

बृहत्यां शशकर्णक्लृप्त्या तृचैकर्चकरणम् । यथाह निदानकारः—तृचप्रथमायामेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे अध्यास्यायामन्ततः एकर्चम् । तां शशकर्णक्लृप्त्येत्याचक्षते (नि० सू० ६. ३. १२) इति । वैरूपं होतुः पृष्ठम् । तस्य सर्वा बृहत्यः । अभ्राणि संप्लवन्त इति 20

---

2. MyKBV[1-2]T. विच्छन्दसम् for विच्छन्दस्कम् ; MyBKTA. पञ्चदशानि for पञ्चदशस्तोमानि

7. CT. before तृतीयस्य ins. अथ

16. BMyKA. Om. पवमानः ; L. after पवमानः ॥ adds :—अस्मिन् साम्नि तत्पक्षे भक्तयोऽपि तथैव कल्प्याः । प्रतिसस्तोभपादेषु एकैकं साम । एवं तृचे द्वादश सामानि सर्वेषु पादेष्विति केचित्

18. C. after प्रथमायाम् ins. च वयम्, MyBKAT. वयम्

भक्त्युपासनम् । उपवाजयमाना वैरूपेण स्तुवीरन् । उपवाज्यमाना वा यजमानवाचनादनन्तरं वात आवात्विति तृचेन वातमनुमन्त्रयेत । वामदेव्यं मैत्रावरुणसाम । वयं घ त्वा सुतावन्त इति महावैष्टम्भं ब्रह्मसाम । तस्य सतोबृहती छन्दः । वैष्टम्भसामोपधावामि । वयं घत्वर्चमुपधावामि । विष्टम्भमृषिमुपधावामि । सतोबृहतीछन्द उपधावामि । इत्युपसरणे विशेषः ॥

तरणिरित्सिषासतीति रौरवमच्छावकसाम । तिस्रोवाच उदीरतेति गायत्रं पाष्ठौहं च । आसोता परिषिञ्चत सखाय आनिषीदतेति वाचःसाम शौक्तं च । सुतासोमधुमत्तम इति गौरीवितं च त्रिणिधनत्वाष्ट्रीसाम । पवित्रं त इत्यरिष्टमित्यार्भवः ॥

वाचः साम शौक्तं चैकर्चम् । यज्ञायज्ञीयमग्निष्टोमसाम । प्रमंहिष्ठीयं हारिवर्णं तैरश्चमित्युक्थानि ॥

प्रमंहिष्ठीयस्य ककुप् । हारिवर्णस्योष्णिक् । सर्वाणि स्तोत्राणि सप्तदशानि । भस्त्रया विनाभिचरणीयया सह सप्तदशस्य सप्त विष्टुतयः । एष एव व्यूहः सप्तैकमध्या इति ब्रह्मायतनीया । तद्यथा—पञ्चभ्यो हिंकरोति । स तिसृभिः स एकया । पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया । सप्तभ्यो हिंकरोति । स तिसृभिः । स एकया स तिसृभिः स तिसृभिः (तां० ब्रा० २. ७. १) इति ॥ एष एव व्यूहः उभयः सप्तैकमध्या इति निर्मध्या । तद्यथा—सप्तभ्यो हिंकरोति । स तिसृभिः । स तिसृभिः । स एकया । तिसृभ्यो हिंकरोति । स पराचीभिः । सप्तभ्यो हिंकरोति । स तिसृभिः । स एकया । स तिसृभिरि(तां० ब्रा० २. ९. १)ति ॥ एतयैवाभिचरंस्तुवीतेत्यभिचरणीया । तिसृभ्यो हिंकरोति । स पराचीभिः । पञ्चभ्यो हिंकरोति । स एकया । स

---

11. TKAMyB. Om. इति after अरिष्टम् ; C. चार्भवः, इत्यार्भवः,

तिसृभिः । स तिसृभिः । स तिसृभिरि(तां० ब्रा० २. १२. १)ति ॥ ब्राह्मणेनैवेतरा विज्ञाताः । उक्थान्ते स्तोमविमोचनादि अप्सुषोमान्तम् । सुब्रह्मण्या च ॥

इति तृतीयस्याह्नः ॥

---

अथ चतुर्थस्याह्नः 5

सत्रस्यर्द्ध्यादि ॥

प्रत आश्विनीः - पवमानो अजीजनत् - प्रयद्गा - षड्चम् ।
आशुः - षड्चम् । हिन्वन्तीति बहिष्पवमानम् ॥

प्रत आश्विनीरिति तृचस्य जगती छन्दः । तत्र गायत्रस्यार्चिकगाने विशेष उक्तः । ज्यायसि छन्दसि प्रथमायामावृत्त्यावपेदुत्तमं पदं शिष्ट्वे- 10
(ला० श्रौ० ७. १. १)ति । तद्यथा—प्रत आश्विनीः पवमान धेनवोम् । दाइव्या असृग्रन्पयसाधरीमणि । प्रात ररिक्षात्स्थाविरीस्ते असृक्षता । ये त्वामृजन्त्यृषिषाणवा । हुंआ । धासो । आ । इति । एवमन्यत्राप्यूहनीयम् ।

जनस्या - अयंवाम् - इन्द्रोदधी - इयंवामस्येत्याज्यानि ॥ 15

प्रथमस्याज्यस्य जगती छन्दः ।

पवस्व दक्षसाधन इति गायत्रं चाथर्वणं च निधनकामम् ।
तवाहं सोमरारणेत्याष्टादंष्ट्रं चाभीशवं च स्वःपृष्ठं च ।
पुनानो अक्रमीदभीति सत्रासाहीयमिति माध्यंदिनः पवमानः ॥ 19

---

2. AV[1-2] °षोमान्तः: for °षोमान्तं
4. C. तृतीयमहः for तृतीयस्याह्नः
5. C. चतुर्थमहः for चतुर्थस्याह्नः
6. TMyA. °र्द्धिगानादि for °र्ध्यादि
9. V[1-2] after तत्र ins. तु
13. MyBKAT. हिं for हुंः
14. LCTV[1-2] ऊहः for ऊहनीयम्
19. V[1-2]KAMyB. Om. पवमानः

सत्रासाहीयस्य गायत्री छन्दः । महावैराजं पृष्ठम् । तस्य विराट्
छन्दः । वसन्तो हिंकार इति भक्त्युपासनम् । वैराजस्य स्तोत्र
उपाकृत इत्यादिना पृष्ठधर्म उक्तः । ततः पुनरूर्जेत्यनुमन्त्रणान्ते
कृते अग्निमाहवनीये प्रहरन्ति । तत उद्गाता आज्येनाभिजुहुयात् ।
5 प्रेद्धो अग्न इति विराजा स्वाहान्तया स्वाहाकारेणोत्तरामाहुतिं
जुहुयात् । पृष्ठेन स्तुत्वा चमसेभ्यः पूर्वं त्रिष्टुप्छन्दसातिग्राह्यान्
भक्षयेयुः । पृष्ठषडहादन्यत्र चैतस्मिन् कालेऽतिग्राह्यान् भक्षयेयुः ।
यानाहरेयुः । वामदेव्यं मैत्रावरुणसाम । विश्वाः पृतना इति त्रैशोकं
ब्रह्मसाम । तस्य प्रथमातिजगती । बृहत्यावुत्तरे । त्रैशोकं सामोप-
10 धावामि । विश्वाः पृतना ऋचमुपधावामि । त्रिशोकमृषिमुपधावामि ।
बृहत्युत्तरामतिजगतीं छन्द उपधावामि । एकविंशस्तोममुपधावामि ।
इत्युपसरणविशेषः । एवमन्यत्रापि ब्रह्मसाम्न्युपसरणप्रकार ऊह्यः ॥

यो राजेति पृश्न्यच्छावकसाम । परि प्रिया दिवः कविरिति
गायत्रं चौर्णायवं च । त्वंह्यङ्ग दैव्यः सोमः पुनान
15 ऊर्मिणेति बृहत्कातीषादीये । पुरोजिती वो अन्धस इति
नानदान्धीगवे । सोमः पवते जनितामतीनामिति
वात्सप्रमित्यार्भवः ॥

वात्सप्रस्य त्रिष्टुप् छन्दः ॥

यज्ञयज्ञीयमग्निष्टोमसाम । अग्निं वोधन्तामिति सैन्धुक्षितम् ।
20 वयमुत्वामपूर्व्येति सौभरम् । इममिन्द्र सुतं पिबेति
वसिष्ठस्यप्रियम् । इत्युक्थानि ॥

इन्द्रजुषस्वेति गौरीवितं षोडशिसाम । ऐन्द्रं सह इति ग्रहस्यानुष्टुप्
छन्दसा चमसस्य सर्वाणि स्तोत्राणि एकविंशतिः । एकविंशस्याभि-
चरणीयया सह पञ्च विष्टुतमः । षोडश्यन्ते स्तोमविमोचनादि ॥

25 इति चतुर्थस्याह्नः ॥

---

2. KAMy. वसन्ते for वसन्तो
3. $V^{1-2}$. °धर्मा उक्ताः for °धर्म उक्तः
23. A. सचमसस्य for चमसस्य ; $V^2$. एकविंशानि for एकविंशतिः

## पञ्चमस्याह्नः

गोवित्पवस्व - पवमानस्यविश्ववित् - प्रसोमासो अधन्विषुरिति सप्तर्चम् । प्रकविः सप्तर्चम् । यवंयवं चतुर्ऋचम् । यास्त इति बहिष्पवमानम् ॥

आद्यस्य तृचस्य जगती छन्दः ॥ 5

तत्राग्नि-पुरूरुणा-उत्तिष्ठन्-इन्द्राग्नी युवाम-इत्याज्यानि ॥

प्रथमस्याज्यस्य जगती छन्दः ॥

अर्षा सोम द्युमत्तम इति गायत्रं च यण्वं च शाकलं वार्शं च । सोम उष्वाणः सोतृभिरिति मानवं चानूपं च वाम्रं चाग्नेस्त्रि-णिधनं च । यत्सोम चित्रमुकूथ्यमिति गायत्रीषु शैशवमन्त्यमिति 10 माध्यंदिनः पवमानः ॥

महानाम्न्यः पृष्ठम् ॥

महानाम्न्यः पिबतु सोम्यं मध्वायुर्दधत्यो यज्ञपतावविह्रुतमिति पृष्ठहोम-मन्त्रे विशेषः । तासां शक्वरी छन्दः । पृथिवी हिंकार इति भक्त्युपासनम् । अपः सावका उपनिधायेत्यादिना अभि- 15 चरन्नित्यन्तेन पृष्ठधर्म उक्तः । प्रतिस्तोत्रीयम् आद्य एव प्रस्तावे कुशाविधानम् । आद्येऽनेकप्रस्तावेष्वि(ला० श्रौ० २. ६. ५)ति वचनात् । ओंकारेणादानं च । तत्रैव न प्रतिप्रस्तावम् । ते खल्विमे बहवः प्रस्तावाः । कथमोंकार इत्युपक्रम्य प्रथम एव प्रस्ताव इत्यपरिमि-त्यादिना (नि० सू० ४. १) निदानेन तथा सिद्धान्तोपपादनात् । 20

---

1. MyBKAT Om. इति

11. $V^{1-2}$KATMyB. Om. पवमानः

15. BMyKA. आपः for अपः

17. $V^2$MyT. नैकप्रस्तावासु, BK. नैवेकप्रस्तावासु, $V^1$. °नेकप्रस्तावासु,. for °नेकप्रस्तावेषु

18. B. ओंकारादानं, C. ओंकारेणोद्गीथादानं for ओंकारेणादानं

शक्वरीभिः स्तुत्वान्ते सकृत्पुरीषपदैः स्तवनम् । अतिग्राह्यभक्षणं पूर्ववत् ॥

वामदेव्यं मैत्रावरुणसाम । इन्द्रो मदायेति स्वादोरित्थेति च पङ्क्तिषु बार्हद्गिररायोवाजीये ब्रह्मसामाच्छावकसामनी । राजन्यस्य
5 तु इन्द्रो मदायेति पार्थुरश्मं ब्रह्मसाम । वैश्यस्य तु स्वादोरित्थेति रायोवाजीयं ब्रह्मसाम । इन्द्रो मदायेति बार्हद्गिरमच्छावकसामेति विशेषः । तथा च निदानम्—अथ खल्वाह पार्थुरश्मं राजन्याय ब्रह्मसाम कुर्या(नि० सू० ४. ३)दित्यादि ॥

असाव्यंशुर्मदायेति गायत्रं च संतनि चाभिद्युम्नं बृहद्यशः प्राणा शिशुर्महीनामिति च्यावनक्रोशे । पवस्व वाजसातय
10 इति गौरीवितं च ऋषभश्च शाक्वरः पार्थं चाष्टेडः पदस्तोभः । इन्दुर्वाजीति त्रिष्टुप्सु दाशस्पत्यम् इत्यार्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥

आ ते अग्न इधीमहीति संजयम् । इन्द्राय सामगायतेति
15 सौमित्रम् । असावि सोम इन्द्र त इति महावैश्वामित्रम् । इत्युक्थानि ॥

संजयस्य पङ्क्तिश्छन्दः । सौमित्रस्य उष्णिक् । महावैश्वामित्रस्यानुष्टुप् । सर्वाणि स्तोत्राणि त्रिणवानि । त्रिणवस्याभिचरणीयया सह तिस्रो विष्टुतयः । उक्थान्ते स्तोमविमोचनादि ॥

20 इति पञ्चमस्याह्नः ॥

---

1. BKA. शक्वरीऋग्भिः for शक्वरीभिः
6. L. after विशेषः adds :—पञ्चमेऽहनि रायोवाजीयं ब्रह्मसाम कुर्वंस्तस्य स्थाने कुर्यादित्यादि सूत्रम्
10. C. °र्धेडः for °ष्टेडः
17. KABMyTCV[1-2]. Om. महावैश्वामित्रस्यानुष्टुप्

## अथ षष्ठस्याह्नः

ज्योतिर्यज्ञस्य-असृक्षत-पवस्वदेववीरति-दशर्चम् । सना-दशर्चम् । तरत्समन्दी-चतुर्ऋचम् । एते सोमा इति बहिष्पवमानम् ॥

**ज्योतिर्यज्ञस्येति जगती ॥**

इमं स्तोम-प्रतिवां-भिन्धि विश्वा-यज्ञस्य हिस्थेत्याज्यानि ॥ 5

**इमं स्तोममिति जगती ॥**

इन्द्रायेन्दो मरुत्वत इति गायत्रं चेषोवृधीयं च क्रौञ्चं च वाजिदावर्यश्च रेवत्यश्च । मृज्यमानः सुहस्त्येत्यौक्ष्णोरन्ध्रे स्वारैडं वाजिजिच्च वरुणसाम चाङ्गिरसां गोष्ठं च । एतमुत्यं दशाक्षिप इति गायत्रीष्विहवद्वामदेव्यम् इति 10 माध्यंदिनः पवमानः ॥

रेवतीर्न इति वारवन्तीयं पृष्ठम् ॥

**रेवतीषु वारवन्तीयं पिबत्विति पृष्ठहोमे विशेषः ॥**

रेवत्यश्च वारवन्तीयं च पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता-विति वा ॥ 15

**तस्य गायत्री छन्दः । अजा हिंकार इति भक्त्युपासनम् । वारवन्तीयस्य स्तोत्रे धेनूः संवाशयेयुरित्यादिना पृष्ठधर्म उक्तः । पूर्ववदतिग्राह्यभक्षणम् । वामदेव्यं मैत्रावरुणसाम । सुरूपकृत्नुमूतय इति ऋषभो रैवतो ब्रह्मसाम । तस्य गायत्री छन्दः । आरम्भेण जगती ॥**

उभे यदिन्द्रेति जगतीष्वरण्येगेयश्येनोऽच्छावकसाम । परिस्वानो 20 गिरिष्ठा इति गायत्रं च वैदन्वतानि च । ससुन्वे यो वसूनां-तंवःसखायो मदायेति दीर्घकार्णश्रवसे च । सोमाः पवन्त इन्दव इति गौरीवितं च मधुश्चुन्निधनं च 23

---

2. KATMyBC. Om. यज्ञस्य and पवस्व
10. V²C after इति adds :—जगती and L. त्रिष्टुप्
11. MyBV¹⁻²KA. Om. पवमानः

क्रौञ्चे वाङ्निधनैडे । अया पवस्वेति त्रिष्टुप्सु श्नौष्टमित्यार्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥

अग्ने त्वं न इति गूर्दः । इमानुकमिति गौतमस्य
5 भद्रम् । प्र व इन्द्रायेति उद्वंशपुत्र इत्युक्थानि ॥

तेषां द्विपदा छन्दः । अस्याह्नः सर्वाणि स्तोत्राणि त्रयस्त्रिंशानि । त्रिरेकान्त इत्यादयस्त्रयस्त्रिंशस्य पञ्च विष्टुतयः । अत्र पुनः प्रयोगपक्षे पथ्यया होतृषामाण्यपथ्याभिश्चतसृभिरभ्यस्ताभिरितराणि च विदध्यात् । उत्तमं तूक्थमुत्तमया विष्टुत्या । न तु क्रमप्राप्तयापि
10 द्वितीयया । षष्ठस्याह्नः उक्थमुत्तममुत्तमया विष्टुत्या विदध्यादिति वचनात् । पक्षान्तरेऽप्युत्तममुक्थमुत्तमयैव न तु पथ्यया । उक्थ्यान्ते स्तोमविमोचनादि पूर्ववत् । षष्ठेऽहनि संस्थिते यावदुत्तरस्याह्नः उपाकरणं तावद्बहुभाषणं स्वाध्यायाध्ययनं च न कुर्युः । अस्मिन्नहनि तृतीयसवने सर्पिषा भुञ्जीरन् । सर्पिषैव तृतीयसवने
15 सत्रेष्विति वचनात् ॥

इति पृष्ठ्यः षडहः समाप्तः ॥

---

## अथ सप्तमस्याह्नः

सत्रस्यर्द्ध्यादि ॥

प्रका-प्रस्वा-नवर्चम् । असृग्रं नवर्चम् । आतेदक्ष इति
20 बहिष्पवमानम् ॥

21 आद्यस्य तृचस्य त्रिष्टुप् छन्दः ॥

---

9. KAMyB. विष्टुत्यानुक्रमप्राप्तया न for विष्टुत्या । न तु क्रमप्राप्तयापि

10. V[1-2]LT. Om. उत्तमम्

11. CV[1-2]. उक्थान्ते for उक्थ्यान्ते

13. L. C. Om. च

मूर्द्धानम्-प्रवोमित्राय-इन्द्रा याहि चित्रभानो-तमीडित्या-
ज्यानि ॥

प्रथममाज्यं त्रैष्टुभम् ॥

वृषा पवस्व धारयेति गायत्रं च संतनि च सौपर्णं च
रोहितकूलीयं च । पुनानः सोमधारयेति कण्वरथन्तरं च 5
गौङ्गवं च द्विनिधनं चायास्यं च । प्रो अयासीदिति
जगतीषु प्रवद्भार्गवम् । इति माध्यंदिनः पवमानः ॥

बृहत्पृष्ठं "बार्हतं षष्ठमहर्बार्हतं सप्तम"(तां० ब्रा० १४. ३. १७)मिति
श्रुतेः । सूक्तानुरूपान् छन्दोमान् करोती(नि०सू० ४. ६)त्यारभ्य 10
बृहद्रथन्तरे पृष्ठे(नि० सू० ४. ६) इत्यादिनिदानवचने छन्दोमानां
बृहद्रथन्तरपृष्ठत्वप्रतिपादनात् छन्दोमेषु बृहद्रथन्तरयो रथघोषादि
न कार्यम् । पृष्ठ्ये रथमतिवहेयुरित्यादिना नानापृष्ठ्यषडहे रथघोषादि-
विधानात् । अथापि बृहद्रथन्तरयोः संप्रयुक्तयोरेवेतरैः पृष्ठैः
रथव्यतिवर्तनं च दुन्दुभ्या हननं च भवति । नासंप्रयुक्तयो- 15
रित्युपग्रन्थवचनाच्च ॥

स्वासु वामदेव्यम् । वयं घत्वेत्यभिनिधनं काण्वम् ।
नकिष्टमितीतराणि पृष्ठानि ॥

वैखानसस्य बृहती छन्दः । अभ्यासेन जगती ॥

अथार्भवः । यस्ते मदो वरेण्य इति गायत्रं तिसृषु । 20
अग्नेरर्कः प्रथमायाम् । अध्यर्धेडं सोमसाम द्वितीयायाम् ।
मौक्षं तृतीयायाम् ॥

अथवा यस्ते मद इति गायत्रं प्रथमायाम् । मौक्षं द्वितीयायाम् ।
सोमसाम तृतीयायाम् । अग्नेरर्कस्तिसृषु । सप्तमेऽहनि अग्नेरर्कोऽध्यर्धेडं 24

13. MyBTAKCV[1-2]. पृष्ठे for पृष्ठ्ये ; MyBTACV[1-2]. पृष्ठे for पृष्ठ्य ;
L. आदि for आदिना ;
14. MyBTA. तथापि for अथापि
18. MyBAT. उत्तराणि for इतराणि
20. LCV[1-2]. त्रिषु for तिसृषु ; LCV[1-2] अर्कं for अर्कः
24. LCV[2]. त्रिषु for तिसृषु ; BMyKA. Om. सप्तमेऽहनि...अर्कस्तिसृषु

च सोमसाम मौक्षस्य पूर्वयोः । मौक्षसोमसामनी गयत्रस्योत्तरयोः । अर्कस्तिसृषु इति वेति वचनात् ॥

एष स्य धारयासुतः-सखाय आनिषीदत-इति शार्करप्लवौ । पुरोजितीति गौरीवितं च कार्तयशसं च । प्रवाज्यक्षा
5 इत्यक्षरपङ्क्तिषु साहविषम् । ये सोमास इति गायत्रीषु जराबोधीयमन्त्यम् ॥

यज्ञायीयमग्निष्टोमसाम ॥

आ ते वत्स इति वात्सम् । त्यं न इन्द्राभरेति सौश्रवसम् । यदिन्द्रचित्रमइहनेति वीङ्कम् । इत्युक्थानि ॥

10 सर्वाणि स्तोत्राणि चतुर्विंशानि । अष्टाभ्यो हिंकरोतीत्येकैव विष्टुतिः । चतुर्विंशस्य स्तोमविमोचनादि पूर्ववत् ॥

इति सप्तमस्याह्नः ॥

---

## अथ अष्टमस्याह्नः

शिशुम्-एते सोमा अभि-नवर्चम् । सोमः पुनानो-नवर्चम् ।
15 सोमा असृग्रं-नवर्चम् । उत्तेशुष्मा-पञ्चर्चम् । अयावीती-अपघ्नन्न- अयापवस्वधेति बहिष्पवमानम् ॥

आद्यस्य तृचस्य त्रिष्टुप् छन्दः ॥

अग्निं वो देवमग्निभिः सजोषा-मित्रं वयं हवामहे-तमिन्द्रं वाजयामसि-इन्द्रे अग्नानमोबृहत् इत्याज्यानि ॥

20 होतुराज्यं त्रैष्टुभम् ॥

---

2. LCV[1-2]CA. Om. वेति ; MyBK. चेति for वेति

5. MyBK. °पंक्ति for पंक्तिषु

9. CBMyKATV[1-2]. आकूपारम for वीङ्कम्

17. CV[1-2], Om. छन्दः

अध्वर्यो अद्रिभिः सुतमिति गायत्रं च वैरूपं च आशु-
भार्गवं मार्गीयवं च सौमित्रं चैटतं च साकमश्वं च
विलम्बसौपर्णं च । अभिसोमास आयव इति द्विहिंकार-
वामदेव्यं च गायत्रपार्श्वं च पौरुहन्मनं च हारायणं च
अच्छिद्रं च बार्हदुक्थं च । धर्तादिव इति जगतीषूद्वद्भार्गवम् । 5
इति माध्यंदिनः पवमानः ॥

द्विहिंकारं वामदेव्यमाद्यायाम् । बार्हदुक्थमध्यास्यायाम् ॥

रथन्तरं च वामदेव्यं च यदिन्द्रप्रागपागुदगिति नैपातिथम् ।
उभयं शृणवच्चन इति वैयश्वम् । इति पृष्ठानि ॥
पवस्व देव आयुषगिति गायत्रं च स्वाशिरामर्कश्च सुरूपं 10
च भासं च काक्षीवतं चासितं च । अभिद्युम्नं बृहद्यशः-
प्राणाशिशुर्महीनामिति ऐषिरत्रैते । अभीनोवाजसातममिति
गौरीवितं च कौत्सं च शुद्धाशुद्धीयं च क्रौञ्चं च
रयिष्ठं चौदलं च । पवस्व सोम महान्त्समुद्र इत्याक्षार-
पङ्क्तिषु धर्मः । हिन्वन्ति सूरमुस्रय इति गायत्रीषु 15
विशोविशीयमित्यार्भवः पवमानः ॥

ऐषिरत्रैते एकर्चयोः । सुरूपक्रौञ्चे वा ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥
प्रेष्ठं वो अतिथिमित्यौशनम् । एन्द्र नो गधि प्रियेत्युष्णिक्षु
सांवर्तम् । पुरांभिन्दुर्युवाकविरिति मारुतम् इत्युक्थानि ॥ 20

सर्वाणि स्तोत्राणि चतुश्चत्वारिंशानि । चतुश्चत्वारिंशस्य तिस्रो विष्टुतयः । पञ्चदशभ्यो हिंकरोतीति प्रथमा । चतुर्दशभ्यो हिंकरोतीति द्वितीया । पञ्चदशभ्यो हिंकरोतीति तृतीया । तासां प्रयोगे पक्षद्वयं ब्राह्मणेनोक्तम् । आज्यानां प्रथमा विष्टुतिः । 24

---

10. LCV[1-2]. अर्कं for अर्कः

15. BK. °पंक्तिः for पंक्तिषु°

पृष्ठानां द्वितीया । यज्ञायज्ञीयस्योक्थानां च तृतीयेत्येकः पक्षः । सोऽयं प्रयोगः सवनसमीषन्तीत्युच्यते । अथापरः पक्षः । अस्मिन्नहनि द्वादशावर्तिस्तोत्रक्रमेण चतुरभ्यस्ताभिरेताभिस्तिसृभिर्विष्टुतिभिर्विदध्यादिति । तादिदं दर्शितम्—याज्यानां सा
5 होतुरि(तां० ब्रा० ३. ११. ३)त्यादिना । सोऽयं स्तोत्रसमीषन्तिसंज्ञः । अनयोश्च प्रयोगयोर्ब्राह्मणगतेनोक्थशब्देन यज्ञायज्ञीयस्यापि ग्रहणम् । योक्थानां सा होतुरिति लिङ्गात् । न हि यज्ञायज्ञीयादन्यद्धोतुरुक्थमस्ति । उक्थानां तृतीयेति प्रयोगस्य सवनसमीषन्तीति संज्ञाकरणात् । सम्यग्व्याप्नुवन्तीति समीषन्तीत्युच्यते । उक्थान्ते स्तोम-
10 विमोचनादि ॥

इति अष्टमस्याह्नः ॥

---

## अथ नवमस्याह्नः

अक्रान्-एषदेवो-दशार्चम् । एषधियेत्यष्टर्चम् । एष उस्य-षड्चम् । एष वाजी-षड्चम् । एष कविः-षड्चम् । स सुतः-षड्चम् ।
15 पवमानस्य ते कव इति बहिष्पवमानम् ॥

पवमानस्य ते कव इत्यस्य स्थाने आ ते दक्षमिति वा ।
17 तदुक्तम्—नवमस्य ज्योतिष्टोमः पर्यायः । साप्तमिक इत्येके(तां०ब्रा०

---

2. $V^2$. समीशन्ती° for समीषन्ती°
4. BK. Om. इदं°
5. BMyKA. °समीषन्तीसंज्ञाप्रयोगः T. समीषन्तीति संज्ञा for समीषन्तिसंज्ञा ; $V^{1-2}$ समीषन्ती for समीषन्ति°
8. $LCV^{1-2}$. उक्थमिति for उक्थ्यमस्ति
9. BMyKA. Om. इति BMyKAT add :— च after °करणात् ; $V^{1-2}C$ °करणाः for °करणात् ; $KAMyV^2$. व्याप्नुवतीभिः $BV^1$ व्याप्नुवन्तीभिः for व्याप्नवन्तीति
15. $LCV^{1-2}$. Om. पवमानस्य ते कव इति बहिष्पवमानम्
17. $V^1$My. पर्यासः for पर्यायः

३. ६. २६-२७) इति । अक्रानिति त्रिष्टुप् । अक्रान्त्समुद्रः प्रथमे विधर्मन्निति पाठविकल्पः ॥

अगन्म महा नमसा यविष्ठम्-मित्रं हुवे पूतदक्षम्-
महाँ इन्द्र य ओजसा-ता हुवे ययोरिदम् । इत्याज्यानि ॥

होतुराज्यं त्रैष्टुभम् ॥ 5

पवमानस्य जिघ्नत इति गायत्रं चादारसृच्च सुरूपं च हरिश्रीनिधनं सैन्धुक्षितं च बाभ्रवं चेडानां संक्षारः ऋषभश्च पवमानः । परीतोषिञ्चता सुतमिति पृष्ठं तिसृषु । कौल्मलबर्हिषं प्रथमायाम् । अर्कपुष्पं द्वितीयायाम् । दैर्घश्रवसं तृतीयायाम् । देवस्थानं तिसृषु । संकृति तिसृषु । 10 वैयश्वं प्रथमायाम् । भर्गस्तिसृषु । आभीशवं प्रथमायाम् । यशस्तिसृषु । वासिष्ठमध्यास्यायाम् । असावि सोमो अरुषो वृषाहरिरिति जगतीषु दीर्घतमसोऽर्कः । इति माध्यंदिनः पवमानः ॥

तस्य बृहत्यामरण्येगेयानि । तृचेषु पृष्ठं च वासिष्ठमध्यास्यायाम् । 15 वैयश्वं प्राक् भर्गाद् आभीशवं यशस (ला० श्रौ० ३. ६. ३०) इति वचनात् । इत्थं तृचैकर्चकरणक्रमश्च । त्रीनेकतृचे नानास्तोत्रीयास्विति वचनात् । कौल्मलबर्हिषादिभिः सामतृचः । अपि वा बार्हतेषु सामसु सप्तैवाजामिक्रमेण तृचेषु कुर्यादितरेषामध्यास्यायाश्च 19

---

1. TKV[1]. आक्रान् for अक्रान्; V[1-3]KA. परमे for प्रथमे
2. BMyKA. वा for पाठ°
12. B. Om. असावि……अध्यास्यायाम् (L. 15)
17. BKAT. तृचैकर्चाकरणं, V[1]. तृचैकर्चाकरण°; My. तृचैकर्चकरणं for तृचैकर्चकरण°
19. BMyKA. अध्यायस्य लोपम्, T. अध्यायस्य लोपः; V[1-3] अध्यास्यायां च लोपः for अध्यास्यायाश्च लोपः

लोपः । तदुक्तम्– सप्तैव तृचेषु यैरजामीत्यपरमि(ला० श्रौ० २.६.
०६-३१)ति दीर्घतमसोऽर्कस्य स्थाने सामराजं वा स्यात् ।
अस्मिन् पक्षे पृष्ठस्थाने परीतोषीति पृष्ठमेकस्याम् । सुषाव सोममिति
दीर्घतमसोऽर्के एकस्याम् । अदब्ध इत्यैडं माण्डवमेकस्याम् इति
5 सामतृचः । शेषं पूर्ववत् । तदुक्तम्—दीर्घतमसोऽर्कोऽन्त्यम् । सामराजं
वा । पृष्ठस्योत्तरयोर्दीर्घतमसोऽर्को माण्डवं चैडं सामराजेऽन्त्ये(ला०श्रौ० २. ६.
३२-३३) इति ॥

बृहच्च वामदेव्यं च श्रायन्तीयं च यत इन्द्रेति समन्तं च ।
इति पृष्ठानि ॥

10 त्वं सोमासि धारयुरिति गायत्रं चाश्वसूक्तं च
शामदं च दाव्रसुनिधनं च प्रतीचीनेडं काशीतं
हाविष्कृतं च । त्वं ह्यङ्गदैव्य-पवस्व देववीतय इति सौपर्णं
च वैश्वमनसं च । परि त्यं हर्यतं हरिमिति गौरीवितं
च निहवश्च यद्वाहिष्ठीयमासितं च साध्रं चाकूपारं च ।
15 पवस्व सोम महे दक्षायेत्यक्षरपङ्क्तिषु त्रिधर्मोऽपोषु जात-
मप्तुरमिति गायत्रीषु श्रुध्यम् । इत्यार्भवः पवमानः ॥
यज्ञायज्ञीयमग्निष्टोमसाम ॥

आ घा ये अग्निमिन्धते इत्यैध्मवाहम् । य एक इदिति
19 त्रैककुभम् । गायन्ति त्वेति उद्वंशीयम् । इत्युक्थानि ॥

---

1. BMy. वैराजमिति, K. वैराजामिति for यैरजामीति
4. LCV1-2. अर्कम् for अर्कः
5. BMyV2TKA. °तृचम् for तृचः
6. B. उत्तमयोः for उत्तरयोः ; TKABMy. °राजेति for राजेऽन्त्ये इति
13. LV1. °मनसे for °मनसं
16. V1-3 BMyTAK. Om. पवमानः

अस्मिन्नहनि सर्वाणि स्तोत्राणि अष्टाचत्वारिंशानि । अष्टाचत्वारिंशस्य द्वे विष्टुती । तयोरुत्तरया मैत्रावरुणस्यैवाज्यं विदध्यात् । सत्रे वेत्यादिविकल्पाः । स्तोमविमोचनादि सुब्रह्मण्याह्वानान्तं पूर्ववत् ॥

इति नवमस्याह्नः ॥ 5

## अथ दशमस्याह्नः

असृक्षत प्रवाजिनः-पवमानस्य विश्ववित्-पवमानो अजीजनत्-एते असृग्रमिन्दवः-पवस्वेन्दो वृषासुतो-अस्यप्रत्ना-नवर्चम् । इति बहिष्पवमानम् ॥

दशमस्य बहिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः । 10 प्रथमाच्च बहिष्पवमानान्तं नवर्चम् इति वचनात् । अनुरूपेषु तृचाः प्रतिलोमाः । यथाधीतं नवर्चमिति शाण्डिल्यायनमते नेयं क्लृप्तिरुक्ता । मतान्तराणि तु सूत्र एव द्रष्टव्यानि ॥

सुषमिद्धो न आवह—यदद्य सूर उदित-उ त्वा मन्दन्तु सोमा-इन्द्राग्नी आगतं सुतम् । इत्याज्यानि ॥ 15

सुषमिद्ध-चतुर्ऋचे मधुमन्तं तनूनपान्नाराशंसमिहप्रियमिति ऋचोरन्यतरस्या यथागोत्रमुद्धारः । तत्रोक्तम्—सुषमिद्ध इत्यत्रिवसिष्ठ- 17

---

1. BMyKA. तस्य for अष्टाचत्वारिंशस्य
2. T. Om. एव ; LCV1-2 Om. द्वे विष्टुती सत्रे वा and add : उत्तरया
3. T. सर्वत्र for सत्रे
10. BMyKA. Om. दशमस्य बहिष्पवमानं
12. LV1-2. ऋचो for यथाधीतं ; T. after अधीतं adds : तत् ; C. °मतेन नेयं for °मते नेयं
16. KATBMy. चतुर्ऋचम् ; CV1-2 चतुर्ऋचो for चतुर्ऋचे

शुनककण्वसंकृतिवाध्र्यूश्वानां तानूनपातीं नाराशंसीमन्येषामि(ला० श्रौ० ६.४.
१३-१४)ति । उभयेषु समवायवत्सु भूम्नोऽवसंतये(!)गृहपतेरित्येके ॥

उच्चातेजातमन्धस इति गायत्रं चामहीयवं चाजिकं चाभीकं
च पुनानः सोमधारयेत्युत्सेधश्च यज्ञायज्ञीयं च निषेधश्च
5 जागृविरिति गौरीवितम् । इति माध्यंदिनः पवमानः ॥

यज्ञायज्ञीयस्य ककुबुत्तरा बृहती छन्दः ॥

कया न इति रथंतरम् । स्वासु मैधातिथम् । उदुत्ये
मधुमत्तम इत्यभीवर्तम् । स्वासु कालेयम् । इति
पृष्ठानि ॥

10 रथंतरस्य गायत्री छन्दः । मैधातिथस्य बृहती । अथ रथन्तरे
भकारैः स्तोभो नास्ति । सर्वत्रास्वस्तोत्रीयं न स्तोभेदि(ला० श्रौ०
२. ९. २०)ति वचनात् । अत्र सामन्यूहो निदाने दर्शितः—
यज्ञायज्ञीयगौरीवितरथन्तरवामदेव्यान्येव युक्तानि सामन्यूह इत्याचक्षत (नि० सू०
४. ९. १३) इति ॥

15 अथार्भवः । स्वादिष्ठयेति गायत्रसंहिते । पवस्वेन्द्रमच्छेति
सफरोहितकूलीये । पर्यूष्विति श्यावाश्वान्धीगवे । परिप्रधन्वेति
वाङ्निधनसौहविषम् । सूर्यवतीषु वाजिजिदन्त्यम् ॥

पर्यूष्विति पिपीलिकामध्यानुष्टुप् । परिप्रधन्वेत्यक्षरपङ्क्तिः । सौम्या-
वेक्षणमन्त्रे पुनरस्मासु दध्मसीति पादमभ्यस्येयुः । आर्भवान्तानि
20 सर्वाणि स्तोत्राणि चतुर्विंशानि । अग्निं नर इति वामदेव्यमग्निष्टोम-
साम त्रयस्त्रिंशम् । तस्य वामदेवो विराडग्निरित्यृष्यादयः । प्राक्-
22 स्तोमयोगाद्गावो अश्वा इत्यादि ध्यानम् । प्रावृतशिरस्कत्वपत्न्य-

---

1. T. °पान्नाराशंसीम्, K A. °पान्नाराशंसम् B. °पातन्नाराशंसीयम् My °पातिन्नाराशंसीं, V1-2 °पातीनां नाराशंसीम् for °पातीं नाराशंसीम्
2. V1-2 °वसंतयेत्, BMyKA °वसन्नयेत्, T. वसंतं नयेत्, for °वसंतये
11. BMyK. सर्वत्रास्तु, A. सर्वत्राव for सर्वत्रास्व°
13. BK. युक्त्वा, My युक्ता for युक्तानि ; MyBKA. Om. इत्याचक्षत इति
17. LV1-2 वाज° for वाजि°

वेक्षणादयो धर्माः अस्मिन् स्तोत्रे कार्याः । न तु पवमानगते यज्ञायज्ञीये अन्यस्थानगतस्य सतो निवर्तेरन् धर्माः । यदन्यदग्निष्टोमसाम स्यात् तस्य स्युरि(ला० श्रौ० २. १०. २१-२२)ति वचनात् ॥

अहन्यस्मिन्नृतं कर्म व्याचक्षीरन्ननुष्टुभा । 5
मन्त्रो यदा विस्मृतः स्यादनुष्टुप् छन्दसोऽधिकः ॥
तदानीं स्मारयेयुस्तमनुष्टुप्मात्रभाषणात् ।
अभ्यासानुष्टुभं कृत्वा ब्रूयुर्न्यूनस्त्वसौ यदि ॥

अथवा विस्मृतं वस्तु यथासंभवं वाचैव ब्रूयुः । नेङ्गितादिना । वागनुष्टुप् (तां० ब्रा० १३. २८. ४) इति हि ब्राह्मणं भवति । 10
अग्निष्टोमसाम्ना स्तुत्वा स्तोमविमोचनाद्यप्सुषोमान्ते कृते प्राक् पत्नीसंयाजेभ्यो यदेभिः सौत्येष्वहःसु पराध्यं व्रजितं स्यात् तद् गत्वा प्रत्याव्रजेयुः । अशक्तौ मनसैव गमनागमनं च कुर्युः । हुतेषु पत्नीसंयाजेषूद्गाता शालामुखीये जुहुयात् । उपसृजं धरुणमिति दीधरत् स्वाहेत्यन्तेन पूर्वामाहुतिम् । स्वाहेत्युत्तराम् । अथोत्तरवेदिकमग्निं गत्वा तस्य पश्चात् प्राङ्मुखः स्थित्वा अयं सहोहा इति त्रिर्गायेत् । प्रजापतिरतिजगतीन्द्रः । गौरिति निधनम् । प्रस्तोतृप्रतिहर्तारावनूपेयाताम् । अभिदक्षिणमावृत्य पूर्वया द्वारा सदः प्रविश्यासीरन् । अध्वर्युणोपाकृते मानसस्तोत्रे आयं गौरिति तृचे 19

---

1. LCV[1-2] ननु for न तु
5. MyBK अस्मिन्यनृतं, V[1-2] LCT. अस्मिन् विस्मृतं° for अस्मिन्नृतं
7. CV[1-2] अनुष्टुभं मात्रभक्षणात्, L. अनुष्टुभं मात्रात् भक्षणात् for अनुष्टुप्मात्रभक्षणात्
9. V[1] नैंगतादिना, V[2]. नैंगतादिन, C. नैंगितादिना ; MyBKA न्वैगितादिना for नेङ्गितादिना ; LV[1-2]C. Om. हि
11. MyBKA. Om. कृते
12. Bk. after एभिः ; ins. अहीनः
17. LV[1-2]. after त्रिर् add : उद्गाता ; TKAB. °पतिरिति, V[2] °पतीरिति, °पतिरीरिति for °पतिरति

गायत्रं निरुक्तम्। त्रिकः स्तोमः पृथक् स्तोत्रीयाभ्यो हिंकृत्य मनसा स्तुवीरन्। स्तोमयोगयजमानवाचनकुशाविधानानि स्युः। प्रतिहारवेलायां प्रतिहर्ता पान्यात् उत्तमां प्रस्तुत्यैषेति स्मरन् होतारमीक्षेत। अस्मिन् स्तोत्रे समीक्षणेन परस्परं ज्ञापयन्तः सर्वं
5 मनसा कुर्युः। यदाध्वर्युर्भक्षणं प्रयच्छन् मन्येत ततो मनसोपहूय कस्त्वा कं भक्षयामीति तं भक्षयेयुः। अवेक्षणाद्याप्यायनवर्जम्। अथ तत्सवितुर्वरेण्यमित्याप्यायस्वेति वा गायत्रीं ब्रूयुः। इन्द्रं ब्रह्मोद्यवदनम् ॥

अथ प्रजापतिं परिवदन्ति। अकुशलो वायं प्रजापतिर्यो
10 दंशमशकान् संसृज्येद्यः स्तेनानिति। प्रजापतिपरिवादः (आप० श्रौ० २१. १२. १) आपस्तम्बेनोक्तः एतस्यां वेलायामभीष्टान् वरान् मनसा वृणीरन्। उत्तरत उद्गातौदुम्बरीं गृह्णीयात्। पश्चात् प्रतिहर्ता। दक्षिणतो ब्रह्मा। पुरस्तादितरे सर्वे गृह्णीयुः। अथ जपेयुः। इह धृतिरिह रमध्वमित्यन्तम्। वाग्यताः सदसः पूर्वापरे द्वारे
15 अपिधायासीरन्। आनक्षत्रप्रवचनात् उदितानि नक्षत्राणीति प्रोक्ते पूर्वया द्वारोपनिष्क्रम्य सुब्रह्मण्याप्रणवैर्वाचं विसृजेरन्। इदमहरत्यग्निष्टोमम्। मानसस्तोत्रेणाग्निष्टोममतीत्य वर्तमानत्वात्। अग्निष्टोमावभित इति वाङ्मात्रम्। यथा गवामयनेऽतिरात्रस्योक्थत्ववादः यदुक्थ्यो यज्ञक्रतोरनन्तरायेति ॥

20 अथोदयनीयातिरात्रः। तस्य सत्रस्यन्द्वर्यादि पूर्ववत्। स च प्रायणीयातिरात्रवत् कार्यः। तत्राहरन्तिकीं सुब्रह्मण्यां न कुर्यात्। तस्या उत्तरार्थत्वात्। स्तोमविमोचानाद्युदवसनीयान्ते कृते
23 पृथगग्नीन् समारोप्य पृथगन्यान् ऋत्विजो वृत्वा पृथक्पृष्ठ-

---

1. MyV¹⁻² TKAC. अनिरुक्तम् for निरुक्तम्

10. BKA. असृजत for संसृज्येत्; My. blank after मशकान् upto प्रजापति°; BK. न and A स्तेन for यस्तेनानिति

23. CV¹⁻² BMyKAT. Om. अन्यान्

शमनीयैर्यजेरन् । ज्योतिष्टोमोऽग्निष्टोमः सहस्रदक्षिणः । पृष्ठशमनीयः । धूर्ज्योतिर्विश्वरूपा न सन्ति । शेषं प्रकृतिवत् ।

इति सत्रात्मा व्यूढो द्वादशाहः समाप्तः ॥

---

## अहीनात्मा द्वादशाहः

अहीनात्मा सोऽस्तीत्युक्तम् ॥ तथा च सूत्रम्—द्वादशाहः- 5
प्रभृतीनि सत्राणि । तेन यजेताप्यहीनभूतेन (ला० श्रौ० १०. १. ११-१२) इति । निदानं च— अथ द्वादशाहोऽहीनो भवतीति । सत्र- (नि० सू० ९. ९. १)मित्युपक्रम्य उभयं भवतीति लामकायनः (नि० सू० ९. ९. २६) इत्यादि । तत्र ब्रह्मणोक्तमेव द्वादशाहमधि- कृत्य प्रकारद्वयकथनात् अहीनद्वादशाहेऽपि स्तोत्रस्तोमक्लृप्तौ न 10
कश्चिद्विकार इति गम्यते । ततश्च तस्यापि गौरीवितमेव स्वरो रात्रिश्च नाहीनिकीत्याचार्याः । अस्माभिस्तु तस्याहीनत्वप्रयुक्तं नाना- स्वरत्वं युक्तमित्यासीतप्रसङ्गे प्रतिहारव्याख्याने प्रतिपादितम् । तत्र रात्रिरप्याहीनिकी स्यात् । स तु विकृतोऽहीनद्वादशाह उपरिष्टात् वक्ष्यते । इदानीं त्वविकृतः । तेनैकः षट् त्रयो द्वादश त्रयोदश 15
चतुर्दश वा यजेरन् । यजमानव्यतिरिक्ता एवर्त्विजः । अस्यापि दीक्षोपसत्सुत्यादिवसाः पूर्ववत् । द्वादश दीक्षा द्वादशोपसदो द्वादश प्रसुत (तां० ब्रा० १०. ३. ९) इति अविशेषेण श्रवणात् । 18

---

2. BMyKAT. पूर्ववत् for प्रकृतिवत्
5. MyBAT. Om. सः, V[1]. अहीनात्मकः for अहीनात्मा सः ; B. तदाह, MyKA तथाह for तथा च ; T. after उक्तम् ins. तत्र लिङ्गव्यूढद्वादशाहः
10. BMyA. Om. न
11. T. किंचिद् for कश्चिद्
13. V[1-2] add अपि after °स्वरत्वं ; V[1] प्रयुक्तं for युक्तं ; BAK. आस्तिन, My. आस्तितः, C. आसिन for आसीत°
15. My. Om. त्रयोदश
16. MyBKAT. चतुर्विंशति for चतुर्दश
17. LC. द्वादशः प्र० for द्वादश प्र°
18. MyBKA विशेषेण for अविशेषेण

सुब्रह्मण्यायां द्वादशाहे सुत्यामित्यादि पूर्ववत् । अग्नीषोमीय-
प्रभृत्यहीनेषु सर्वाः सुब्रह्मण्याः सनामग्रहाः । सुत्यास्वग्नीध्रीयेऽहर-
हर्यज्ञसारथिविश्वरूपाज्योतींषि च निवर्तन्ते । प्रातरनुक्रमणवेलायामद्य-
सुत्याप्रवचनीं सुब्रह्मण्यामाह्वयेत् । अहरन्ते श्वःसुत्याप्रवचनीम् ।
5 प्रायणीयातिरात्रान्ते विकल्पेनाह्वानम् । सुब्रह्मण्यायाः उदयनीयाति-
रात्रान्ते त्वनाह्वानमेव । सर्वेषामह्नां पथ्या एव विष्टुतयः । अन्यत्र
सदसि बहिष्पवमानैः स्तवनम् । अहीनबहिष्पवमानैः सदसि स्तुवीरन्
प्रथमादह्नोऽन्यत्रे(ला० श्रौ० २. २. १)ति वचनात् । प्राक् धिष्ण्य-
विहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः । रेतस्यारथन्तरवर्णे
10 सर्वत्र कार्ये । न धुरो गेयाः । दधिभक्षणान्तानि सर्वाण्यहानि ।
दधिभक्षान्तमहीनेष्वि(ला० श्रौ० २. २२. १५)ति वचनात् ।
षष्ठेऽह्नि संस्थिते सप्तमस्याह्न उपाकरणात्पूर्वं न बहुवादिनः स्युः
न चाधीयीरन् । सर्पिर्मधुभ्याम् ऋत्विजो भोजयेत् । अन्यतरेण वा ।
(ला० श्रौ० ३. ६. ७-९) सर्वस्तोत्रधर्मा दशमेऽहनि अस्मिन् विस्मृतं
15 कर्मेत्यादिना धर्मा उक्ताः । मानसं च पूर्ववदेव । तत्र वरवरण-
वाग्यमने यजमान एव कुर्यात् । इतरे प्रजापतिवादान्तं कृत्वा यथार्थं
17 स्युरिति विशेषः । उदयनीयेऽतिरात्रे संस्थितेऽवभृथाद्युदवसनीयान्तम् ।

---

3. V[1]A यज्ञा° for यज्ञ° BMYKA °सारथ्येव, T. °सारथ्ये च, V[2] °सारथ्या, C. °सारथ्यो for °सारथि ; T. My. Om. च ; BK. Om. रूपा°···नाह्वा

5. V[2]MyBTKAC after °रात्रान्ते add : तयोः, V[1]. रात्रान्तोभयोः for रात्रान्ते

6. V[1–2] before अन्यत्र ins. अतिरात्राद् , C. प्रायणी[य]उक्ताः, and MyBT प्रायणीयरात्राद् ;

7. CMy सदसः for सदसि MyBKA. °मानस्तवनं, V[1]. माने स्तवनं for °मानैः स्तवनम्

10. C. ज्ञेयाः for गेयाः

14. MyBKAT. सर्वत्र for सर्व

15. B. तन्त्रधारण for तत्र वरवरण

अङ्गदक्षिणानां प्रधानदक्षिणानां च यथायथं प्रवृत्तिः । अन्यत् सर्वं ज्योतिष्टोमवत् । अस्यानेकयजमानत्वपक्षे सुब्रह्मण्यायां दीक्षितानां नामग्रहः याजमानानि च यजमानशब्दस्य यथार्थमूहाश्च पूर्ववदेवेति सिद्धम् ॥

इत्थं वरदराजेन वामनार्यस्य सूनुना । 5
सत्राहीनात्मको व्यूढो द्वादशाहः प्रदर्शितः ॥ १ ॥
समूढोऽपि द्विधा सोऽयं सत्राहीनत्वभेदतः ।
आर्षेयकल्पविवृतौ स्वस्थाने दर्शयिष्यते ॥ २ ॥ 8

अहीनात्मा द्वादशाहः समाप्तः ॥ 9

---

1. LV[1-3]C. Om. प्रधानदक्षिणानां
8. LV[1-3]C. Om. इत्थं…सूनुना…दर्शयिष्यते

# प्रथमोऽध्यायः

# गवामयनम्

### चतुर्विंशः प्रायणीयः

उक्तौ ज्योतिष्टोमद्वादशाहौ । अथ तदुपजीवनेन कल्पकार ऋक्समाम्नाये दशरात्रानन्तरम् अधीतस्य ब्राह्मणे च दाशरात्रिक- 5 विष्टुतिसमाम्नायानन्तरं गावो वा एतत् सत्रमासते-(तां० ब्रा० ४. १. १) त्यारभ्य अध्यायद्वयेन विहितस्य संवत्सरसत्रस्य गवामयनस्य स्तोत्र- क्लृप्तिमध्यायद्वयेनाह— क्लृप्तो ज्योतिष्टोम इत्यादिना ॥

इह गवामयनस्य एकषष्ट्यधिकं शतत्रयं सौत्यान्यहानि सन्ति । तानि च सत्रप्रकरणे शतरात्रानन्तरमतिरात्रश्चतुर्विंशं 10 प्रायणीयमहरित्यारभ्य संवत्सरब्राह्मणमि-(तां० ब्रा० २४.२०.२)त्यन्तेनानु- वाकेन संगृह्य दर्शितानि । तद्यथा—अतिरात्रश्चतुर्विंशं प्रायणीय- महश्चत्वारोऽभिप्लवाः षडहाः । पृष्ठ्यः षडहः । इति प्रथमो मासः । 13

---

4. BMyKA. °कारेण···समाम्नायेण for °कारः ··· समाम्नाये

5. BMyKA. विहितस्य for अधीतस्य ; KAMy दाशरात्र, $LV^{1-2}C$. दशरात्रिक for दाशरात्रिक

7. $V^{1-2}T$ अयनस्तोत्रस्य क्लृप्तिम् for अयनस्य स्तोत्रक्लृप्तिम्

10. KB. चतुर्विंशाभ्यां सह प्रष्ठेन मासः पूर्वस्मिन् पक्षसीति वचनात् for चतुर्विंशं ···प्रायणीयमहश्च° (L. 13)

11. $V^1$. Om. आरभ्य···प्रायणीयमहः (L. 13) ; $V^{1-2}$ ATMy after महः ins. द्वयं षष्ठ ($V^1$. षष्ठे मासि) मासपरिपूरकत्वेन गण्यते । अतिरात्र- श्चतुर्विंशाभ्यां सह षष्ठो मासः (My. प्रष्ठेन मासः) पूर्वस्मिन् पक्षसीति ($V^1$. पक्ष सति) वचनात्

13. L. सः for इति प्रथमः

स द्वितीयः। स तृतीयः। स चतुर्थः। स पञ्चमः। **इति पञ्च मासाः। अथ षष्ठे मासि** त्रयोऽभिप्लवाः षडहाः। पृष्ठ्यः षडहोऽभिजित् त्रयः स्वरसामान (तां० ब्रा० २४. २०. १) **इत्यष्टाविंशतिरहानि। अतिरात्रश्चतुर्विंशाभ्यां सह षष्ठो मास इति**
5 **पूर्वः पक्षः। मध्ये विषुवान् दिवाकीर्त्यमहः।** आत्मा वा एष संवत्सरस्य यद्विषुवान् पक्षावेतावभितो भवतः (तां० ब्रा० ४.७.१) **इति श्रुतेः॥**

**अथोत्तरः पक्षः।** त्रयः स्वरसामानो विश्वजित् पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः त्रयोऽभिप्लवाः षडहा **इत्यष्टाविंशतिरहानि।**
10 **व्रतातिरात्राभ्यां सह प्रथमो मासः।** व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन्नि-(ला०श्रौ० १०.९.७)ति वचनात्। पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणश्चत्वारोऽभिप्लवाः षडहा **इति द्वितीयो मासः। तथैव तृतीयस्तथैव चतुर्थस्तथैव पञ्चमः।** त्रयोऽभिप्लवाः षडहा आयुश्च गौश्च द्वे अहनी द्वादशाहस्य द्वादशाहानि (तां० ब्रा० २४.२०.१) **इति षष्ठो मासः॥**

15 **अथ** महाव्रतं चातिरात्रश्च। **तौ च प्रथममासपूरकावित्युक्तम्। तस्यैतस्य गवामयनस्य सत्रभूतद्वादशाहवत् प्रयोगः। उक्तकाले दीक्षा। ब्राह्मणेन गवामयनस्येत्यादिना दीक्षाकालादिकमुक्तम्। औपसथ्यान्तं कृत्वा प्रायणीयमतिरात्रमुपयन्ति। तस्य सत्रस्यर्द्ध्यादि सुब्रह्मण्यान्तं द्वादशाहवत्। स्तोत्रक्लृप्तिमाह—**

20 क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः॥ १ ॥

---

1. $V^{1-2}$My TKAB. after द्वितीयः add : मासः ; $V^{1-2}$KATCMyB. Om. इति पञ्च मासाः। अथ षष्ठे मासि
10. C. Om. सह······(अ)तिरात्राभ्यां
15. MyBK. °रात्रौ for रात्रश्च
16. $LV^{1-2}$C. उक्त (C. उक्तः) काल° for उक्तकाले
17. $LV^{1-2}$C. Om. दीक्षाकाला°······कृत्वा
18. L. before प्रायणीयम् adds :—अथ प्रथमं

ब्राह्मणेनैवंभूतोऽतिरात्रः क्लृप्त इत्यर्थः । तत्राहरन्तिकी सुब्रह्मण्या द्वादशाहवदेव ॥ १ ॥

अथ प्रायणीयमेतदहर्भवतीत्युक्तं चतुर्विंशमहराह—

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) उपास्मै गायता नर (सा० ६५१-३) 5 उपोषु जातमप्तुरम् (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-२) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) ॥ २ ॥

इति बहिष्पवमानम् ॥

द्वितीयादीनामह्नां सदसि बहिष्पवमानस्तवनं द्वादशाहवत् । रेतस्या- 10 रथन्तरवर्णयोः सर्वत्र प्रवृत्तिः । न धुराम् ॥ २ ॥

उप प्रयन्तो अध्वरम् (सा० १३७९-८१) प्र वो मित्राय गायते-(सा० ११४३-५) न्द्रायाहि चित्रभानव् (सा० ११४३-८) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२) ॥ ३ ॥

इत्याज्यानि ॥ 15

तृचसूक्तानामादिग्रहणेन विधिरनादेश (ला० श्रौ० ६.३.१) इति वचनात् उपप्रयं-चतुर्ऋचस्य उपावदानेऽपि आवृत्तिस्तोत्रत्वात् अन्त्याया उद्धारः । शिष्टास्तृचः ॥ ३ ॥

वृषा पवस्व धारये(सा० ८०३-५)ति गायत्रं चामहीयवं (ऊ० ६. २. १) चैडं सौपर्णं (ऊ० ४. १. २) रोहितकूलीयं 20 (ऊ० ४. १. ३) च पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६. २. २) तिसृषु समन्तमेकस्याम् प्लव एकस्यां 22

---

1. V[1-2]. एव महतो for एवं भूतः; L. Om. भूतः
10. T. °मानैः for °मान°
17. C. अन्यायाः for अन्त्यायाः
22. LC. त्रिषु for तिसृषु

(ऊ० ६. २. ३ ) दैर्घश्रवसमेकस्या-(ऊ० ६. २. ४)मिति वा ॥
रथन्तरं तिसृषु (र० २. २. १०) गौङ्गवं ( ऊ० ४. १. ५ )
रौरवं (ऊ० १.१.२) त्रिणिधनमायास्यं (ऊ० ४.१.६) च एकर्चाः ।
प्र काव्यमुशनेव ब्रुवाण (सा० १११६-८) इति पार्थमन्त्यम्
5 (ऊ० ६. २. ५ ) ॥ ४ ॥

इति माध्यंदिनः पवमानः ॥

**समन्तादीनामेकर्चानां गौङ्गवादीनां च सामतृचः । त्रीनेकतृचे नानास्तोत्रीयास्वि-(ला०श्रौ० ६.३.१४)ति वचनात् । अत्रैवंभूताया ऋक्सामक्लृप्तेर्निदानकारेण दर्शितम्—** अथ खलु य ऊर्ध्वं
10 ज्योतिष्टोमदशाहाभ्यामि-(नि० सू० ४. १२. १०)**त्यादिना । तत्तु विस्तरभयादिह नोच्यते ।** अन्त्य-**शब्दोऽयं माध्यंदिनस्य पवमानस्यान्त्यमाह । एवमुत्तरस्यार्भवस्य ॥ ४ ॥**

बृहच्च ( र० १. १. ५ ) वामदेव्यं च ( ऊ० १. १. ५ )
मा चिदन्यद्विशंसते-( सा० १३६०-१ ) त्यभीवर्तः ( ऊ० ६.
15 २. ६ ) स्वासु कालेयम् (ऊ० १. १. ७ ) ॥ ५ ॥

इति पृष्ठानि ॥

यस्ते मदो वरेण्यम्-( सा० ८१५-७ ) इति गायत्रं च
मौक्षम् ( ऊ० ४. १. १० ) जराबोधीयम् (ऊ० ६. २. ७)
पवस्वे-( सा० ६९२-३ )-न्द्रमच्छे-( सा० ६९४-६ )ति सफ-(ऊ०
20 १. १. ९ ) सुज्ञाने ( ऊ० ६. २. ८ ) । पुरोजिती वो
21 अन्धस (सा० ६९७-९) इति गौरीवितं च (ऊ० ४.१.१३)

---

4. MyBKAT. ते for च
10. V[1-2]. CL. खल्वयम् for खलु
11. CL. ज्योतिष्टोमादनाहाभ्यां for ज्योतिष्टोमदशाहाभ्यां

क्रौञ्चं च (ऊ० ६. २. ९)। प्रो अयासीद् (सा० ११५२-४) इति कावम् (ऊ० ६. २. १०) अन्त्यम्॥ ६॥

इति आर्भवः पवमानः॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥ ७॥

अग्निं वो वृधन्ताम् (सा० ९४६-८) इति सत्रासाहीयं (ऊ० ६. २. ११) सौभरम् (ऊ० १. १. १६) उद्वंशीयम् (ऊ० ४. १. ८)॥ ८॥

इत्युक्थानि॥

चतुर्विंशस्तोमः॥ ९॥

अस्मिन्नहनि सर्वेषां स्तोत्राणामिति शेषः। उक्थान्ते स्तोमविमोचनाद्यप्सुषोमान्तं सुब्रह्मण्या च॥ ९॥

इति चतुर्विंशस्तोमः॥ १॥

---

## अभिप्लवः षडहः

### प्रथममहः—ज्योतिः

ज्योतिर्गौरायुर्गौरायुर्ज्योतिरिति षडहोऽभिप्लव उच्यते। ज्योतिर्गौरायुर्(तां०ब्रा० ४.१.७)इत्यारभ्य स एतं त्र्यहं पुनः प्रायुङ्क्ते-(तं० ब्रा० ४.१.९)ति श्रुतेः। तस्य ज्योतिःसंज्ञकं प्रथममहराह—

उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९)॥ १॥

इति बहिष्पवमानम्॥

अग्न आयाहि वीतये (सा० ६६०-७१)॥ २॥

इत्याज्यानि॥

अग्न (सा० ६६०-२) आ नो मित्रा-(सा० ६६३-५) याही-(सा० ६६६-८) न्द्राग्नी-(६६९-७१) त्याज्यानीत्यर्थः॥ २॥

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं च (ऊ० ६. २. १२) प्र सोम देववीतय ( सा० ७६७-८ ) इति पञ्चं (ऊ० ६. २. १३) यौधाजयं (ऊ० १. २. १३) चौशनसम् (ऊ० १.१.५) अन्त्यम् ॥ ३ ॥

इति माध्यंदिनः पवमानः ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । तं वो दस्ममृतीषहम् ( सा० ६८५-६ ) इत्यभीवर्तः (ऊ० ६. २. १४ ) स्वासु कालेयम् ( ऊ० १. १. ७ ) ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-( सा० ६८९-९१ )ति गायत्र-संहिते (ऊ० १. १. ८) । अया पवस्व देवयुः ( सा० ७७२ ) पवते हर्यतो हरिर् (सा० ७७३) इति सफ-(ऊ० १.१.१५) सुज्ञाने (ऊ० ६. २.१५) काशीतं (ऊ० ६.२.१६) वा । प्र सुन्वानायान्धसः (सा० ७७४) इति गौरीवितं तिसृषु (ऊ० ६. २. १७) गौरीवितमेकस्याम् (ऊ० १. १. १७) औष्णिहमोकोनिधनमेकस्याम् (ऊ० ६.२. १८) औदल-मेकस्याम् (ऊ० ६.२.१९) इति वा । साध्रं तिसृषु (ऊ० ६.२.२०) कावमन्त्यम् (ऊ० १. १. १३) ॥ ५ ॥

इति आर्भवः पवमानः ॥

सुज्ञानकाशीतयोर्विकल्पः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥ ६ ॥

ज्योतिष्टोमस्तोमः ॥ ७ ॥

ज्योतिष्टोमशब्देनात्र ज्योतिष्टोमसंबन्धिस्तोमसंनिवेश उच्यते । त्रिवृद्बहिष्पवमानम् । पञ्चदशानि आज्यानि । पञ्चदशो माध्यंदिनः पवमानः । सप्तदशानि पृष्ठानि । सप्तदश आर्भवः । एकविंशोऽग्निष्टोम इति स्तोम इत्यर्थः ॥ अग्निष्टोमान्ते स्तोमविमोचनादि पूर्ववत् ॥ ७ ॥

इति ज्योतिष्टोमस्तोमः ॥२॥

## अभिप्लवषडहस्य द्वितीयमहः—गौः

**गोसंज्ञकं द्वितीयमाभिप्लविकमहराह—**

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) पवमानस्य ते कवे (सा० 5
७८९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०) ॥ २ ॥

इत्याज्यानि ॥

अग्निं दूतं (सा० ७९०-१२) मित्रं वयं (सा० ७९३-९५) इन्द्रमिद्गा- 10
(सा० ७९६-९९) चतुर्ऋचम् । इन्द्रे अग्ना (सा० ८००-८०२)
इत्याज्यानि । इन्द्र इद्गा-चतुर्ऋचे अन्त्याया उद्धारः ॥ २ ॥

वृषा पवस्व धारये-(सा० ८०३-५) ति गायत्रं च हाविष्मतं
च (ऊ० ७. १. १) यौक्ताश्वमुत्तरेषु यद्वुत्तरम् (ऊ० ७.१.२) ॥

उत्तरेष्वभिप्लवेषु द्वितीयतृतीयचतुर्थेषु हाविष्मतस्य स्थाने यौक्ताश्व- 15
मुत्तरमित्यर्थः ॥

परीतो षिञ्चता सुतम् (सा० १३१३-५) इति माधुच्छन्दसं
(अ० ७.१.३) च भर्गश्च (र० १.२.५) यशो (र० १.२.६)
वायास्ये (ऊ० ७.१.४-५) ॥

माधुच्छन्दसं प्रथमायाम् । भर्गस्तृचे । यशो वा । आइ पराइ 20
इत्यैडमायास्यं तृचे । श्रीणन्तो गोभिरूहाउ होवेति त्रिणिधनमायास्य- 21

10. B. Om. इन्द्रमिद्गा…इन्द्रे अग्ना
11. V[1-2]CL. Om. चतुर्ऋचम्
12. B. before इति adds :—बर्हितम् ; B. आज्यम् for आज्यानि Om. इन्द्र…उत्तरम् (L. 14)
15. C. after हाविष्मतस्य adds : तस्य ; L. हाविष्मत for हाविष्मतस्य
20. MyBA after यशो add : वायायशो and K. वायुयशो ; L. आकूपराइ, T[2]. आकूपारइ, C. आकूपाराइ, MyB. आकूइपारइ for आइपराइ ; V[1]. Om. आइपराइ इत्यैडम्
21. MyBV[2]L. एवम् for ऐडम्

**मध्यास्यायाम्** । साध्यास्यायां चैकोऽध्यास्यायामेवान्ततो द्वौ तस्यां चैवादितश्च सा शशकर्णक्लृप्ते-(ला० श्रौ० ६. ३. २०-२१)ति वचनात् । **एवं तृचैकर्चकरणम्** । **भर्गयशसोर्व्यवस्थां सूत्रकार आह**— आभिप्लविकस्य द्वितीयेऽहनि भर्गो यश इति प्रागू विषुवतो व्यत्यासं
5 स्यातामिति गौतम **इत्यादिना** यश उत्तरस्मिन्नपरमि-(द्रा० श्रौ० सू० ७. ४. ९-१३)त्यन्तेन ॥

वृषा शोण (सा० ८०६-८) पार्थम् (ऊ० ७.१.६) **अन्त्यम्** ॥३॥

**इति माध्यंदिनः पवमानः ॥**

**अथ पृष्ठानि—**

10 बृहच्च (र० १.१.५) वामदेव्यं (ऊ० १.१.५) चाभि प्र वः सुराधसम् (सा० ८९१-२) इत्यभीवर्तः (ऊ० ७. १. ७) स्वासु कालेयम् (ऊ० १.१.७) ॥ ४ ॥

**इति पृष्ठानि ॥**

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे
15 (ऊ० ४. १. १०) हाविष्मतम् (ऊ० २. १. ५) उत्तरेषु । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति शङ्कु-(ऊ० ७. १. ८) सुज्ञाने (ऊ० ६. २. ८) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति गौरीवितं (ऊ० ७. १. ९) च क्रौञ्चं (ऊ० २. १. ९) च । वृषा मतीनां पवत (सा० ८२१-३) इति याममन्त्यम्
20 (ऊ० २. १. १०) ॥ ५ ॥
21 **इत्यार्भवः पवमानः ॥**

---

3. L. व्यवस्थाः, V[1]. व्यवस्था, B. व्यवस्थायां for व्यवस्थां

5. L. आभ्य उत्तरस्मिन, C. आदि उत्तरस्मिन्, V[1]. आद्य उत्तरस्मात्, MyBKA आदिना य उत्तरस्मिन् for आदिना यश उत्तरस्मिन्

13. CMyBKA. Om. पृष्ठानि°

हाविष्मतमुत्तरेष्विति उत्तरेष्वभिप्लवेषु मौक्षस्य स्थाने हाविष्मतमित्यर्थः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

साकमश्वम् (ऊ० १. १. १५) अभ्रातृव्यो अनात्वम् (सा० १३८९-९०) इत्यामहीयवम् (ऊ० ७. १. १०) आष्टादंष्ट्रं यादौहोवद् (ऊ० ७. १. ११) ॥ ७ ॥

इत्युक्थानि ॥

यदौहोवादिति । इन्द्रं विश्वा अवीवृधन्नै (सा० ८२७) यादौ होवेत्याष्टादंष्ट्रमित्यर्थः ॥ ७ ॥

गोष्टोमस्तोमः ॥ ८ ॥

पञ्चदशं बहिष्पवमानम् । त्रिवृदाज्यानि । सप्तदशं माध्यंदिनं सवनम् । एकविंशं तृतीयं सवनं सोक्थ्यम् इति गोष्टोमस्य स्तोम इत्यर्थः । स्तोमविमोचनादि पूर्ववत् ॥ ८ ॥

इति गोष्टोमस्तोमः ॥ ३ ॥

---

## अथ अभिप्लवस्य तृतीयमहः—आयुः

आयुःसंज्ञिकं तृतीयमाभिप्लविकमहराह—

दविद्युतत्या रुचै- (सा० ६५४-६) ते असृग्रमिन्दवः (सा० ८३०-२) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निनाग्निः समिध्यते (सा० ८४४-५५) ॥ २ ॥

इत्याज्यानि ॥

अग्निना (सा० ८४४-४६) मित्रं हुवे (सा० ८४७-४९) इन्द्रेण (सा० ८५०-५२) ता हुवे (८५३-५५) इत्याज्यानि ॥ २ ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं च वरूपं (ऊ० ७. १. १२) चाभि सोमास आयवः (सा० ८५६-८) इति

रौरवं (ऊ० ७. १. १३) च गौतमं (ऊ० २. १. १५) चाञ्जश्च वैरूपम् (र० १. २. ११) । अग्नेस्त्रिणिधनम् (ऊ० ७. १. १४) । तिस्रो वाचः (सा० ८५९-६१) इत्यङ्गिरसांसंक्रोशोऽ-(ऊ० २. १. १७)न्त्यः ॥ ३ ॥

5 इति माध्यंदिनः पवमानः ॥

रौरवं प्रथमायाम् । प्रहिन्वान (सा० ५३६) इत्यग्नेस्त्रिणिधन-मध्यास्यायाम् ॥ ३ ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) चात्वा सहस्रमा शतम् (सा० १३९१. ३) इत्यभीवर्तः ।

10 (ऊ० ७. १. १५) स्वासु कालेयम् (ऊ० १. १. ७) ।.४॥

इति पृष्ठानि ॥

तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० ७. १. १६) चासोता परिषिञ्चत (सा० १३९४-५) सखाय आ निषीदते-(सा० ११५७-९) ति

15 वाचश्च साम (ऊ० ७. १. १७) सुज्ञानं च (ऊ० ७. १. १८) दैवोदासं (ऊ० ७. १. १९) च सुतासो मधुमत्तमा (सा० ८७२-४) इति गौरीवितं (ऊ० २. २. ३) चान्धी-गवं (ऊ० ७. १. २०) च पवित्रं त (सा० ८७५-७) इति सामराजम् (ऊ० ७. २. १) अन्त्यम् ॥ ५ ॥

20 इति आर्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

स्वान्युक्थानि ॥ ७ ॥

षडहस्य तृतीयस्याह्नः उक्थानि— प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य(ऊ० २. २. ७)मिति ॥ ७ ॥

25 आयुष्टोमस्तोमः ॥ ८ ॥

---

19. L. before साम° adds : स्वारं

त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशं माध्यंदिनं सवनम् । एकविंशं तृतीयसवनम् । सोक्थ्यम् ॥ ८ ॥

इति आयुष्टोमस्तोमः ॥ ४ ॥

---

## अभिप्लवस्य चतुर्थमहः—गौः

गोसंज्ञिकं चतुर्थमाभिप्लविकमहराह— 5

पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्रयद्गावो न भूर्णयः (सा० ८९२-७) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

प्रयद्गा-षड्टृचम् । तृचसूक्तानामादिग्रहणेन विधिरनादेश (ला० श्रौ० ६. ३. १) इति वचनात् । शिष्टास्तृचः ॥ १ ॥ 10

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) इति होतुराज्यमिति । स्वान्युत्तराणि ॥ २ ॥

इत्याज्यानि ॥

अग्निर्वृत्राणि (सा० १३९६-८) अयं वां मित्रावरुणा (सा० ९१०-१२) इन्द्रो दधीचो अस्थभिर् (सा० ९१३-१५) इयं वामस्य मन्मनः (सा० ९१६-१८) इत्याज्यानि स्वशब्देन गृह्यन्ते । चातुर्थिकत्वात् ॥ २ ॥ 15

पवस्व दक्ष साधन (सा० ७१९-२१) इति गायत्रं चादारसृच्च (ऊ० ७. २. २) । परीतो षिञ्चता सुतम् (सा० १३१३-५) इति पृश्नि (ऊ० ७. २. ३) चाथर्वणं (र० १. २. १२) चाभीशवं (ऊ० ७. २. ४) च यौधाजयं (ऊ० ७. २. ५) चोद्व वा अस्येति वासिष्ठम् (ऊ० ७. २. ६) अन्त्यम् ॥ ३ ॥ 20

इति माध्यंदिनः पवमानः ॥

पृश्नि प्रथमायाम् । श्रीणन्त (सा० १३१४) इति यौधाजयमध्यास्यायाम् ॥ ३ ॥ 25 26

---

25. CV[1-3] Om. श्रीणन्त……अध्यास्यायाम् ; L. Om. श्रीणन्त इति

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च यो राजा चर्षणीनाम् ( सा० ९३३-४ ) इत्यभीवर्तः (ऊ० ७. २. ७) । स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ।

इति पृष्ठानि ॥

परि प्रिया दिवः कविर् ( सा० ९३५-७ ) इति गायत्रं चौर्णायवं च यदीनिधनम् ( ऊ० ७. २. ८ ) । त्वं ह्यङ्ग दैव्य ( सा० ९८३-९ ) सोमः पुनान उर्मिणे-(सा० ९४०-२) ति बृहत्क-(ऊ० २. २. १६) सुज्ञाने (ऊ० ७.२. ९) । पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवितं (ऊ० ४. १. १३) च त्वाष्ट्रीसाम च यदूर्ध्वेडम् (ऊ० ७. २. १०) । प्रो अयासीद् (सा० ११५२-४) इति लौशम् (ऊ० ७. २. ११) अन्त्यम् ॥ ५ ॥

इति आर्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

सैन्धुक्षितं (ऊ० २. २. २०) सौभरं (ऊ० १. १. १६) वीङ्कं ( ऊ० ४. १. १९ ) शुद्धाशुद्धीयं वा यदीडाभिरैडम् (ऊ० ७. १२. १२) ॥ ७ ॥

इत्युक्थानि ॥

वीङ्कशुद्धाशुद्धीययोर्व्यवस्था भर्गयशोभ्यामुक्ता । तदुक्तम्—एताभ्यामुक्ते वीङ्कशुद्धाशुद्धीये (ला० श्रौ० ३. ४. १३) इति ॥७॥

गोष्टोमस्तोमः ॥ ८ ॥

पञ्चदशं बहिष्पवमानमित्यादि ॥ ८ ॥

इति अभिप्लवस्य चतुर्थमहः—गोष्टोमस्तोमः ॥५॥

## अभिप्लवस्य पञ्चममहः—आयुः

आयुःसंज्ञकं पञ्चममाभिप्लविकमहराह—

पवमानस्य विश्वविद् ( सा० ९५८-६० ) यत्सोम चित्रमुक्थ्यम् (सा० ९९९-१००१) पवमानस्य ते कवे (सा० ६५७-९) ॥१॥

इति बहिष्पवमानम् ॥ 5

अग्ने स्तोमं मनामहे (सा० १४०५-७) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

इत्याज्यानि ॥

पुरूरुणा चिद्ध्यस्ति ( सा० ९८५-८७ ) उत्तिष्ठन्नोजसा सह (९८८-९०) इन्द्राग्नी युवाम् (सा० ९९१-९३) इत्युत्तराण्याज्यानि ॥२॥ 10

अर्षा सोम द्युमत्तम (सा० ९९४-६) इति गायत्रं च यण्वं (र० १. १. ११) च । अपत्यं (र० १. २. १३) संतनि (ऊ० ७. २. १३) शाक्वरवर्णम् ( र० १. २. १४ ) । तान्युत्तरेषु । अभिसोमास आयवः (सा० ८५६-८) इति मानवं (ऊ० ७. २. १४) चानूपं (ऊ० ७. २. १५) च वाम्रं ( ऊ० ७. २. 15 १६ ) चाग्नेस्त्रिणिधनम् ( ऊ० ७. १. १४ ) । अभि त्रिपृष्ठम् (सा० १४०८-१०) इति सम्पान्त्यमन्त्यम् (ऊ० ७. २. १७) ॥३॥

इति माध्यंदिनः पवमानः ॥

अपत्यं संतनि शाक्वरवर्णम् । तान्युत्तरेष्विति । अपत्यादीनि त्रीणि सामानि द्वितीयादिष्वभिप्लवेषु यथासंख्यं यण्वस्थान इत्यर्थः । मानवं 20 प्रथमायाम् । अग्नेस्त्रिणिधनमध्यास्यायाम् ॥ ३ ॥ 21

---

17. V[1-2]CMyBKA संपान्त्या, T. संपाद्या for संपान्त्यमन्त्यम्

19. LV[1]. °वर्णान्तानि, BC. °वर्णानि for °वर्णं । तानि ; T.O m. तानि ; LV[1-2] अपत्य संतनिशाक्वरवर्णान्तानि for अपत्यं संतनि शाक्वरवर्णं तानि ;

20. B. after इति ins. वचनात् B. व्यवस्थानात्, T. यथास्थानम् for यण्वस्थाने

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । त्वमिन्द्र यशा असि-(सा० १४११-२) त्यभीवर्तः (ऊ० ७. २. १८)। स्वासु कालेयम् (ऊ० १. १. ७.) ॥ ४ ॥

इति पृष्ठानि ॥

असाव्यंशुर्मदाये-( सा० १००८-१० )ति गायत्रं च गोषूक्तं (ऊ० ७. २. १९) चाभिद्युम्नं बृहद्यशः (सा० १०११-२) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति च्यावन-(ऊ० ३. १. ११) सुज्ञाने (ऊ० ७. २. २०) । दैवोदासं (ऊ० ७. २. २१) वा। पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितं (ऊ० ३. १. १३) च रयिष्ठं च (ऊ० ८. १. १) असावि सोमो अरुषो वृषा हरिर् (सा० १३१६-८) इति द्व्यभ्याघातं लौशम् (ऊ० ८. १. २) अन्त्यम् ॥ ५ ॥

इति आर्भवः पवमानः ॥

सुज्ञानदैवोदासयोर्विकल्पः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम ( ऊ० १. १. १४ ) ॥ ६ ॥

यजिष्ठं त्वा ववृमह ( सा० १४१३-४ ) इति साध्यं (ऊ० ८. १. ३) सांवर्तं (ऊ० ५. १. १२) मारुतम् (ऊ० ५. १. १३) ॥ ७ ॥

इत्युक्थानि ॥

अयुष्टोमस्तोमः ॥ ८ ।

त्रिवृद् बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशं माध्यंदिनं सवनम् इत्यादि ॥ ८ ॥

इति आभिप्लविकं पञ्चममहः अयुः ॥ ६ ॥

---

## अभिप्लवस्य षष्ठमहः—ज्योतिः

ज्योतिःसंज्ञकं षष्ठमाभिप्लविकमहराह—

असृक्षत प्र वाजिनः ( सा० १०३४-६ ) एतमु त्यं दश क्षिपः (सा० १०८१-३) पवमानस्य ते कवे (सा० ६५७-९) ॥१॥

इति बहिष्पवमानम् ॥

यमग्ने पृत्सु मर्त्यम् (सा० १४१५-७) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

॥ इत्याज्यानि ॥

प्रति वां सूर उदिते (सा० १०६७-६९) भिन्धि विश्वा अप द्विषो (सा० १०७०-७२) यज्ञस्य हि स्थ ऋत्विजा (सा० १०७३-७५) इत्युत्तराण्याज्यानि ॥ २ ॥

इन्द्रायेन्दो मरुत्वते-(सा० १०७६-८)ति गायत्रं चाश्वसूक्तं च (ऊ० ८.१.४) सकृदिषोवृधीयं (ऊ० ३.१.१९) कुर्यात् मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)त्यैडं चौक्ष्णोरन्ध्रं (ऊ० ३. २. २) त्रिणिधनमायास्यं (ऊ० ८.१.६) सकृत्समन्तं कुर्यात् (ऊ० ८.१.५) । साकमुक्ष (सा० १४१८-२०) इतीहवद्वासिष्ठम् (ऊ० ८. १. ७) अन्त्यम् ॥ ३ ॥

इति माध्यंदिनं पवमानम् ॥

सकृदिषोवृधीयं कुर्यादिति । अन्तेऽभिप्लव इषोवृधीयमाश्वसूक्तस्य स्थाने कुर्यादित्यर्थः । एवं त्रिणिधनस्थाने समन्तम् । तदिदमुक्तम्—इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये षष्ठ (ला० श्रौ० ३. ४. १६) इति ॥ ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । पिबा सुतस्य रसिन (सा० १४२१-२) इत्यभीवर्तः (ऊ० ८.१.८) । स्वासु कालेयम् (ऊ० १.१.७) ॥ ४ ॥

इति पृष्ठानि ॥

परि स्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं चैध्मवाहं च यदिहवत् (ऊ० ८. १. ९) स सुन्वे यो वसूनां (सा० १०९६-७) तं वः सखायो मदाये-(सा० १०९८-११००)ति

15. CMy BKAT. Om. एवं त्रिणिधनस्थाने समन्तम्

दीर्घ-(ऊ० ३. २. ११) सुज्ञाने (ऊ० ८. १. १०)। काशीतं (ऊ० ८.१.११) वा। सोमाः पवन्त इन्दव (सा० १९०१-३) इति गौरीवितं (ऊ० ३.२.१३) च क्रौञ्चं च यत्स्वयोनि (ऊ० ३.२.१६)। त्रिरस्मै सप्त धेनवो दुदुह्रिरे (सा० १४२३-५)
5 इति मरुतां धेनु (ऊ० ८.१.१२) अन्त्यम् ॥ ५ ॥

इत्यार्भवः पवमानः ॥

यदिहवदिति। परिस्रुवा इहेत्यैध्मवाहमित्यर्थः। यत्स्वयोनीति वाङ्निधनव्यावृत्त्यर्थम् ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४) ॥ ६ ॥

10 गूर्दस् (ऊ० ३.२.१८) त्रैककुभं (ऊ० ६.१.७) नार्मेधम् (ऊ० १.१.१७) इत्युक्थानि। यद्युक्थ्यः ॥

यद्युत्सृजेयुरुक्थानि उत्सृजेयुरिति पक्षाश्रयणेन यद्युक्थ्यान्तं चिकीर्षितमित्यर्थः। तदुक्तम्—उत्सर्जनानि मासि मासि यथान्ते एवमावृत्तानामादिः पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वाग्निष्टोममुत्तमः (द्रा० श्रौ०
15 सू० ८.४.८-१०) इति। सिद्धान्तमाह—

अग्निष्टोमस्त्वे ॥ ७ ॥

उत्सर्जनस्यानित्यत्वादिति भावः। तथा यद्युत्सृजेयु(तां० ब्रा० ५. १०.५)रिति ब्राह्मणम् ॥

ज्योतिष्टोमस्तोमः ॥ ७ ॥

20 त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। पञ्चदशः माध्यंदिनः पवमानः। सप्तदशानि पृष्ठानि। सप्तदश आर्भवः। एकविंशोऽग्निष्टोमः। सोक्थ्य इति ॥ ७ ॥

इति ज्योतिः ॥

इति प्रभिप्लवस्य षष्ठमहः ॥

25 संपूर्णोऽभिप्लवः षडहः ॥

---

12. MyBCKATV[1-2], यद्युक्थ्यं तत् for युद्युक्थ्यान्तं

## पृष्ठ्यः षडहः

एवमन्येऽपि त्रयोऽभिप्लवाः कर्तव्याः। तेषु विशेषः। द्वितीयेऽहनि हाविष्मतस्य स्थाने यौक्ताश्वमुत्तरम्। मौक्षस्य हाविष्मतम्। द्वितीयेऽभिप्लवे पञ्चमेऽहनि यण्वस्य स्थानेऽपत्यम्। तृतीयेऽभिप्लवे पञ्चमेऽहनि संतनि। मानवात् पूर्वं वाम्रं च मानवं चानूपं चेति। 5
पञ्चमेऽहनि यदहः प्रामेगेयं संतनि स्यात् मानवात् पूर्वं वाम्रं स्यात् (द्रा० श्रौ० ७.४.१६) इति वचनात्। एतच्चाजाम्यर्थम्। तत्र वाम्रं प्रथमायाम्। मानवं तृचे। चतुर्थेऽभिप्लवे पञ्चमेऽहनि यण्वस्य स्थाने शाक्वरवर्णम्। तत्रैव षष्ठेऽहन्याश्वसूक्तस्यैषोवृधीयम्। त्रिणिधनायास्यस्य समन्तम्। भद्रयशसोर्वाङ्क्शुद्धाशुद्धीययोश्च 10
व्यवस्थाप्रकार उक्तो न प्रस्मर्तव्यः। अन्यत् सर्वं प्रथमवत्॥

एवं चतुरोऽभिप्लवानुपेत्य पृष्ठ्यःषडहमुपयन्तीति तस्य क्लृप्तिमाह—

पृष्ठ्यः षडहः समूढो वा व्यूढो वा ॥ १ ॥

ब्राह्मणोक्तं पृष्ठ्यस्य यद् व्यूढत्वं तद्यदि दशरात्रप्रयुक्तं तत्र समूढोऽयं 15
भवितुमर्हति। अविच्छिन्नत्वात्। अथ पृष्ठ्यप्रयुक्तं ततो व्यूढ इति संदेहाद्विकल्प इति पूर्वः पक्षः॥ १॥

सिद्धान्तमाह—

समूढस्त्वेव ॥ २ ॥

इति। दशरात्रप्रयुक्तो व्यूह इति भावः। तथा च निदानम्— 20
अथापि विलुप्तो व्यूढः षडह (नि० सू० ५. ६. १) इत्यादि। श्रुत्यन्तरं च नर्ते छन्दोमेभ्यः पृष्ठयो व्यूहमानश (नि० सू० ५.६.४) इति ॥ २ ॥ 23

---

5. V¹⁻²MyCKAT. Om. पञ्चमेऽहनि
6. B. Om. संतनि ; V²C. Om. पूर्वं वाम्रं स्यात् इति वचनात्
7. LV¹. Om. इति वचनात्
11. TMyBKA. विस्मर्तव्यः for प्रस्मर्तव्यः
22. TMy. आनर्ते, L. न चेच्, CV³. नक्ते, V¹. नवे, A न तत्, BK नत्ते for नर्ते ; BK पृष्ठे for पृष्ठयो°

तस्य समूढस्य क्लृप्तिर्वक्ष्यत इत्याह—

तस्य कल्पः ॥ ३ ॥ इति ॥ ३ ॥

प्रथममहराह—

उपास्मै गायता नरः ( सा० ६५१-३ ) उपोषु जातमप्तुरम्
5 (सा० १३३५-७) पवमानस्य ते कवे (सा० ६५७-९) इति प्रथमस्याह्नो बहिष्पवमानम् ॥ ४ ॥

अस्य प्रत्ना-(सा० ७५५-९३) नवर्चस्य नवाहयोगाभावान्निवृत्तिः । प्रत्नवतीभिश्चोपवतीभिश्चेत्यारभ्य नव भवन्ति । नवाहस्य युक्त्या (तां० ब्रा० ११.१.६) इति श्रुतेः ॥

10 प्र सोम देववीतय (सा० ७६७-८) इत्यभीवर्त एकस्याम् (ऊ० ८. १. १३) । पञ्जमेकस्याम् (ऊ० ६. २. १३) । यौधाजयमेकस्याम् (ऊ० १. २. १३) । समानमितरत् ॥ ५ ॥

दशरात्रिकेण प्रथमेनाह्ना समानमितरदित्यर्थः ॥

अग्न (सा० ६६०–२) आ नो मित्रा (सा० ६६३-५) आ याहि-
15 (सा० ६६६-८) इत्याज्यानि । प्र सोमासो विपश्चितः (सा० ७६४-६) इति गायत्रमाश्वं (ऊ० ६. २. १२) सोमसाम (ऊ० १४. १. १३) इति तृचः । प्र सोम देववीतये (सा० ७६७-८) इत्यभीवर्त-(ऊ० ८.१. १३) पञ्ज-(ऊ० ६. २. १३) यौधाजयैः (ऊ० १. २. १३) सामतृचः । प्र तु द्रव (सा० ६७७-९) इत्यौशन-(ऊ० १. १. ४) मन्त्यम् ।
20 रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । अस्मिन्नपि पृष्ठे रथघोषादयः पृष्ठधर्माः कार्याः । सह धर्मैः सर्वत्र पृष्ठं स्यात् ( ला० श्रौ० ३. ६. १६ ) इति वचनात् ॥ प्र सोमासो
24 मदच्युत ( सा० ७६९-७१ ) इति गायत्रमेकस्याम् । तस्यामेव

8. KA युक्ता for युक्त्या

10. MyBKA. Om. प्रसोम⋯सोमसामेति तृचः (L. 17)

संहितम् (ऊ० १. २. १४)। अया पवस्व देवयु:-(सा० ७७२-४) पवते हर्यतो हरिर् (सा० ७७३-४) इत्येकर्चयोः सफाक्षारे (ऊ० १. २. १५-१६)। प्र सुन्वानायान्धस इति प्रथमायां गौरीवितगौतमे (ऊ० १. २. १७-१८)। काव-(ऊ० १. १. १३)मन्त्यम्। यज्ञा-यज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। सर्वं त्रिवृत्। अत्रेदमनु-संधेयम्। यत्सामावमृजेयुरवस्वर्गाल्लोकात् पद्येरन् (तां० ब्रा० ४. ३. ६) इत्यभीवर्तप्रकरणे श्रवणात् पूर्वस्मिन् पक्षसि सर्वत्र कर्तव्योऽभीवर्त इति स्थिते पृष्ठस्य नानाब्रह्मसामत्वात् न तत्राभिप्लववत् ब्रह्म-सामत्वेन संकल्पयितुं शक्यत इति पावमानीकीषु बृहतीषु निवेश्यते। नित्यानुग्रहेणैव च स्तोमोपपत्त्यर्थमागन्तुभिर्नित्यैः सहैकर्चं क्रियते। तत्र द्वितीयादिष्वहस्सु कालेयमागन्तु कल्पयिष्यते। तं खलु बृहतीषु कालेयमनुकल्पयामः। सतोऽनुरूपमस्मिन् भवतीति। अस्मिंस्त्वहनि कालेयस्याच्छावाकसामत्वात् संचारदोषो मा भूदिति पञ्चमागन्तु कल्पितमिति ॥ ५ ॥—॥ ८ ॥

---

## द्वितीयस्याह्नः

पुनानः सोम धारय (सा० ६७५-६) इत्यैडमायास्यमेकस्याम् (ऊ० १. २. २०) अभीवर्त एकस्याम् (ऊ० ८.१.१४) कालेय-मेकस्याम् (ऊ० ८. १. १५) वृषा शोण (सा० ८०६-८) इति

3. LCV[1-2] Om प्रथमायां; MyBKA गौरीवितं for गौरीवित; MyBKA. गौतमम् for गौतमे and thereafter ins. :—प्रभिप्रियाणीति

6. L. प्रव: for अव

10. T. सुगन्तुभिः, V[1]. सामागन्तुभिः, V[2] KAMyB सागन्तुभिः for आगन्तुभिः; TKAMyB. एकर्चः for एकर्चं

11. V[1]. Om. आगन्तु……कालयेम्

12. MyBKA सन्तानरूपम्, T. सन्तानमनुरूपम् for सतोऽनुरूपम्

14. KAMyB. पत्रम् for पञ्चम्

पार्थम् (ऊ० ७.१.६) अन्त्यम् । इति माध्यंदिनस्य । समान-
मितरत् ॥ १ ॥

इति । माध्यंदिनशब्देन कल्पे सर्वत्र माध्यंदिनः पवमान उच्यते ।
इहवद्वासिष्ठस्य षष्ठेऽहनि माध्यंदिनान्त्यत्वेन कल्पयिष्यमाणत्वात्
5 असंचाराय पार्थमत्र कल्पितम् । एतत्स्तोमं क्षत्रसाम बृहती-
पृष्ठेऽभिरूपम् (नि० सू० ) इति निदानम् । तत्रेयं क्लृप्तिः ।
पवस्व वचो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) वृषा सोम
(सा० ७१८-३) वृषा ह्यसि (सा० ७८४-६) पवमानस्य ते वयम्
(सा० ७८७-९) इति बहिष्पवमानम् । अग्निं दूतं (सा० ७९०-२)
10 मित्रं वयम् (७९३-५) इन्द्रमिद्धा (सा० ७९६-९) चतुर्ऋचम् । इन्द्रे
अग्ना (सा० ८००-२) इत्याज्यानि । चतुर्ऋचेऽन्त्याया उद्धारः ।
वृषा पवस्व धारय ( सा० ८०३-५ ) इति गायत्रं च यौक्ताश्वं
(ऊ० १. २. १९) च । पुनानः सोम धारय (सा० ६७५-६)
इत्यैडमायास्यम् (ऊ० १.२.२०) अभीवर्तः (ऊ० ८.२.१३) कालेय-
15 (ऊ० १०. १.१३)मिति सामतृचः । त्रिणिधनमायास्यं(ऊ० २.१.१) ।
तृचे । वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ०७.१.६)मन्त्यम् ।
बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं
(ऊ० २. १. ३) च माधुच्छन्दसं (ऊ० २. १. ४) चेति पृष्ठानि ।
बृहत्स्तोत्रे दुन्दुभिमाहन्युः । यस्ते मदो वरेण्य (सा० ८१५-७)इति
20 गायत्रं च हाविष्मतं (ऊ० २.१.५) च । पवस्वेन्द्रमच्छे-(सा० ६९२-३;
६९४-६)ति शङ्कुसुज्ञाने (ऊ० २. १. ६-७) एकर्चे । अयं पूषा
रयिर्भग ( सा० ८१८-२० ) इति गौरीवित-( ऊ० २. १. ८ )
मेकस्याम् । कौत्सं (ऊ० २. १. ९) तृचे । वृषा मतीनां पवत
(सा० ८२१-३) इति याम-(ऊ० २. १. १०)मन्त्यम् । यज्ञायज्ञीय-
25 (ऊ० १.१. १४)मग्निष्टोमसाम । साकमश्वम् (ऊ० १.१.१५)।

---

1. MyBTA. Om. अन्त्यम् ; V[1-2] MyBTA Om. इति

4. KABMy. (अ)न्यत्वे for (अ)न्त्यत्वेन

एवाह्यसि वी-(सा० ८२४-३) त्यामहीयवम् (ऊ० २. १. ११)। आष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि। सर्वं पञ्चदशम् ॥६॥—॥९॥

---

## तृतीयस्याह्नः

अभि सोमास आयवः (सा० ८५६-८) इति पौरुमद्गं प्रथमायाम्। (ऊ० १. १. १४) तस्यामेवाभीवर्तः (ऊ० ८. १. १६)। 5
कालेयं द्वितीयायाम् (ऊ० ८. १. १७)। गौतमं तृतीयायाम् (ऊ० १. १. १५)। समानमितरत् ॥ १ ॥

इति। चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोर् (द्रा० श्रौ० १६. ३. १३) इति **न्यायदेवमेकर्चकरणम्**। अथ **क्लृप्तिः**। दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) 10
राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) इषे पवस्व धारय (सा० ८४१-३) इति **बहिष्पवमानम्**। अग्निना (सा० ८४४-६) मित्रं हुव (सा० ८४७-९) इन्द्रेण (सा० ८५०-२) ता हुव (सा० ८५३-५) **इत्याज्यानि**। उच्चा ते जातमन्धसः (सा० ६७२-४) इति **गायत्रं च क्षुल्लकवैष्टम्भं** (ऊ० 15
२. १. १३) च। अभिसोमास आयवः (सा० ८५६-७) इति पौरुमद्गं (ऊ० २. १. १४) **प्रथमायाम्। अभीवर्त**-(ऊ० ६.१.१६) **कालेय**-(ऊ० १. १. ७) **गौतमैः** (ऊ० १. २. १८) **सामतृचः अन्तरिक्षं** (र० १. १. ५) **तिसृषु**। प्र हिन्वान (सा० ५३६ ) **इत्यस्याध्यास्यायाम् आष्कारणिधनम्** (ऊ० २. १. १६)। तिस्रो 20
वाच (सा० ८५९-६१) **इत्यङ्गिरसां संक्रोशो** (ऊ० २.१.१७)ऽन्त्यः। **वैरूपं च वामदेव्यं च**। वयं घ त्वे-(सा० ८६४-६) **महावैष्टम्भम्** (ऊ० २. १. १८)। तरणिरित्सिषासति (सा० ८६७-८) इति 23

---

20. BMyKAT. V[1]. Om. अस्य

21. BB. Om. इत्यङ्गिरसां……तिस्रो वाच (p. 112, L. 2)

रौरवं ( ऊ० २. १. १९ ) चेति पृष्ठानि । उपवाजयमाना वैरूपेण स्तुवीरन्नि-( ला० श्रौ० २. ५. ३ )त्यादि । तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं च पार्ष्ठौहं (ऊ० २. १. २०) च । आ सोता परिषिञ्चत ( सा० १३९४-५ ) सखाय आ निषीदत
5 (सा० ११५७-९) इति वाचःसाम शौक्तं (ऊ० २. २. १-२) चैक-चर्योः । सुतासो मधुमत्तमाः (सा० ८७२-४) इति गौरीवितं (ऊ० २. २. ३ ) च त्रिणिधनं च त्वाष्ट्रीसाम ( ऊ० २. २.४ ) । पवित्रं त ( सा० ८७५-७ ) इत्यरिष्ट-( र० १.१. ८ )मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)माग्निष्टोमसाम । प्रमंहिष्ठीयं (ऊ० २.
10 २. ५) हारिवर्णं ( ऊ० २. २. ६ ) तैरश्च्य-(ऊ० २. २. ७)मि-त्युक्थानि ॥ सर्वं सप्तदशम् ॥ १ ॥—॥ १० ॥

---

## चतुर्थस्याह्नः

पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि ( सा० ९२४-६ ) इति स्तोत्रीयानुरूपौ । अग्निर्वृत्राणि जङ्घनत्
15 (सा० १३९६-८) होतुराज्यम् । तवाहं सोम रारण (सा०९२२-३) इत्याष्टादंष्ट्रोत्तरमेकस्याम् (ऊ०२.२.९) । अभीवर्त एकस्याम् (ऊ०८. १. १८) । कालेयमेकस्याम् (ऊ० ८.१.१९) । सोमः पवते जनिता मतीनाम् ( सा० ८४३-५ ) इति जनित्रमन्त्यम् (ऊ० ८. २. १) । माध्यंदिनस्य प्र त आश्विनीः पवमान धेनवः ( सा० ८८६-८ ) इति
20 लौशमन्त्यम् (ऊ० ८. २. २ ) आर्भवस्य । समानमितरत् ॥ १ ॥

---

1. TA उपजायमाना, My. उपवाजायमान for उपवाजयमाना

16. TMyKBA आष्टादंष्ट्रम् for आष्टादंष्ट्रोत्तरम् ; TMy Om. अभीवर्त एकस्याम् । कालेयमेकस्याम्

इति। स्तोत्रीयो बहिष्पवमानस्याद्यस्तृचः। द्वितीयोऽनुरूपः। अत्र गायत्रीत्रिष्टुब्जगतीनाम् अन्योन्यलोकपरिहरणेन प्रकृतिवदवस्थानं समूह इत्यस्मिंस्त्र्यहे वैयूहिकेऽहरेव जगतीत्रिष्टुभोराभवान्ते माध्यंदिनान्ते च कृतयोर्बहिष्पवमाने प्रकृतिवदवस्थाने वैयूहिको यूपः तत्स्थाने च माध्यंदिनान्त्यो गायत्रस्तृचो यथाप्रत्यासक्तिरिष्यते। 5 होतुराज्यानि च। वैयूहिकान्युद्धृत्य गायत्राणि तद्विभक्तीनि प्रतिनिधीयन्त इत्यनुसंधेयम्॥

अथास्य क्लृप्तिः। पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्र यद्गावो न भूर्णय (सा० ८९२-६) आशुरर्षबृहन्मते (सा० ८९८-९०३) हिन्वन्ति सूरमुस्रय (सा० ९०४-६) 10 इति बहिष्पवमानम्। अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) अयं वां मित्रावरुणा (सा० ९१०-२) इन्द्रो दधीचो अस्थभिः (सा० ९१३-५) इयं वामस्य मन्मन (सा० ९१६-८) इत्याज्यानि। पवस्व दक्ष साधन (सा० ९१९-२१) इति गायत्रं चाथर्वणं (र० १. १. ९) च निधनकामं (ऊ० २.२.८) च। तवाहं सोम रारण (सा० ९२२-३) 15 इत्याष्टादंष्ट्र-(ऊ० २.२.९)मभीवर्तः (ऊ० ६.१.१६) कालेय-(ऊ० १. १. ७)मिति सामतृचः। आभीशवं (ऊ० २.२.१०) तिसृषु। 17

1 V[1]KACMyB. स्तोत्रीया, V[2]. निस्तोत्रीया for स्तोत्रीयो; T. आद्याः for आद्यः

2. BMyTKA. °हारेण for °हरणेन; V[2]C. आस्थान्, B. अवस्थापनं, KAMy. अपस्थापनं, V[1]. स्थानं for अवस्थानं

3. B. समूढ इत्यस्य त्र्यहे त्र्यहे वैयुरुयहेमोक्मारेम, My समूढ इत्यस्य त्र्ययगम वैयुक्मोरेव, K. समूढ इत्यस्य त्र्यहस्त्रियहे वैयुग्मारमारेव for इत्यस्मिंस्त्र्यहे वैयूहिकेऽहरेव; T. वैयुहिक्योरेव for वैयुहिकेऽहरेव; LC. आभंवान्त्ये for आभंवान्ते

4. My. after कृतयोः ins. च; TBMyK. प्रतिपत्स्थाने, V[1-2] प्रकृतिवत् स्थाने for प्रकृतिवदवस्थाने; V[1-2] बहिष्पवमानं for बहिष्पवमाने°

5. BMyKAT. प्रत्यासत्ति निवेश्यते fo. प्रत्यासक्तिरिष्यते

**स्वःपृष्ठं** (ऊ० २. २. ११) **तिसृषु** । सोमः पवते जनिता मतीनाम् (सा० ९४३-५) **इति जनित्र**-(ऊ० ८. २. १)**मन्त्यम्** । **वैराजं** (र० १. १. १०) **च वामदेव्यं** ( ऊ० १. १. ५ ) **च त्रैशोकं** (ऊ० २. २. १३) **च पृश्नि** (ऊ० २. २. १४) **चेति पृष्ठानि** । वैराजस्य स्तोत्रमुपाकृत (ला० श्रौ० सू० ३.५.५) **इत्यादि** । परिप्रिया दिवः कविर् (सा० ९३५-७) **इति गायत्रं चौर्णायवं** (ऊ० २. २. १५) **च** । त्वं ह्यङ्ग दैव्यः सोम । पुनान ऊर्मिणा (सा० ९३८-९) **इति बृहत्कातीषादीये** (ऊ० २. २. १६-१७) । पुरोजिती वो अन्धस (सा० ६९७-९) **इति नानदा**-(ऊ० २.२.१८)**न्धीगवे**(ऊ०१.१.१२) । प्र त आश्विनीर् (सा० ८८६) **इति लौशम्** (ऊ० ८. २. २) **अन्त्यम्** । **यज्ञायज्ञीय**-(ऊ० १. १. १४)**मग्निष्टोमसाम** । **सैन्धुक्षितं** ( ऊ० २. २. २० ) **सौभरं** ( ऊ० १. १. १६ ) **वसिष्ठस्य प्रिय**-(ऊ०३.१.१)**मित्युक्थानि** । इन्द्र जुषस्व (सा०९५२-४) **इति गौरीवितं** (ऊ० ३. १. २) **षोडशिसाम** । **सर्वमेकविंशम्** ॥१॥—॥११॥

---

## पञ्चमस्याह्नः

पवमानस्य विश्ववित् (सा० ९५८-१०) यत् सोम चित्रमुक्थ्यम् ( सा० ९९९-१००१ ) इति स्तोत्रीयानुरूपौ । अग्ने स्तोमं मनामहे (सा० १४०५-७) इति होतुराज्यम् । सोम उष्वाणः सोतृभिः (सा० ९९७-८) इति मानवानूपे (ऊ० ३. १. ५-६) तृचयोः । वाम्रमेकस्याम् (ऊ० ३. १. ७) अभीवर्त एकस्याम् (ऊ० ८. २. ३) । कालेयमेकस्याम् ( ऊ० ८. २. ४) । इन्दुर्वाजी पवते गोन्योघा (सा० १०१९-२१) इति संपान्त्या (ऊ० ८. २. ५) माध्यंदिनस्य । पार्थस्य लोके त्वाष्ट्रीसाम यद् द्व्यनुतोदम् (ऊ० ८. २. ६) । गोवित् पवस्व (सा० ९५५-७) इति द्व्यभ्याघातं लौशम् (ऊ० ८. २. ७) अन्त्यम् आर्भवस्य । समानमितरत् ॥ ११ ॥

इति । पार्थस्य लोके त्वाष्ट्रीसामेति [अ]संचारार्थमुक्तम् । पवमानस्य विश्ववित् ( सा० ९५८०-१० ) । यत्सोम चित्रमुक्थ्यम् (सा० ९९९-१००१) । प्र सोमासो अधन्विषुः (सा० ९६१-७) प्र कविर्देववीतये (सा० ९६८-७४) यवं यवन्नो अन्धसा (सा० ९७५-८) यास्ते धारा मधुश्चुतः (सा० ९७९-८१) इति बहिष्पवमानम् । 5
अग्ने स्तोमं मनामहे (सा० १४०५-७) पुरूरुणा चिद्ध्यस्ति (सा० ९८५-७) उत्तिष्ठन्नोजसा सह ( सा० ९८८-९० ) इन्द्राग्नी युवाम् (सा० ९९१-३) इत्याज्यानि । अर्षा सोम द्युमत्तम (सा० ९९४-६) इति गायत्रं च यण्व(र० १. २. १)-शाकल-वार्शानि( ऊ० ३. १. ३-४) । सोम उष्वाणः सोतृभिर् (सा० ९९७-८) इति मानवानूपे 10
( ऊ० ३. १. ५-६ ) तृचयोः । वाम्रा-(ऊ० ३. १. ७)भीवर्त-(ऊ० ६.१.१६) कालेयैः (ऊ० १. १. ७) सामतृचः । अग्नेस्त्रिणिधनं (ऊ० ३. १. ८) तिसृषु । इन्दुर्वाजी पवते (सा० १०१९-२१) इति संपान्त्या-( ऊ० ८. २. ५ )न्त्यम् । महानाम्न्यश्च वामदेव्यं (ऊ० १. १. ५) च बार्हद्गिरं (र० १. २. २) च रायोवाजीयं 15
( र० १. २. ४ ) चेति पृष्ठानि । अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन्नि-(ला० श्रौ० सू० ३. ५. १३)त्यादि । असाव्यंशुर्मदाये(सा० १००८-१०)ति गायत्रं च संतनि (ऊ० ३. १. १०) च । अभिद्युम्नं बृहद्यशः-प्राणाशिशुर्महीनाम् (सा० १०१३-५) इति च्यावनक्रोशे (ऊ० ३. १. ११-१२) । पवस्व वाजसातये (सा० 20
१०१६-८) इति गौरीवितं (ऊ० ३. १. १३) च ऋषभश्चशाक्वरं (र० १. २. ५) त्वाष्ट्रीसाम ( ऊ० १६. २. १ ) च द्व्यनुतोदमष्टेडश्च पदस्तोभः ( र० १. २. ६ )। गोवित्पवस्वे(सा० 23

1. IKAB My Om. इति
9. LV[1-2] वार्षाणि for वार्शानि
14. BC संपान्त्यम्, My संपाद्यन्त्या, TKAV[2] संपान्त्या, V[1] संपान्त्यां for संपान्त्यान्त्यम्
23. L. before द्व्यनु ins. त; BMyKA °तोदोऽष्टेडः for तोदमष्टेडश्च; V[1-2] अष्टेड्ं for अष्टेड;

९५५-७)ति द्व्यभ्याघातं लौश-( ऊ० ७. २. ११ )मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । संजयं च सौमित्रं महावैश्वामित्रं ( ऊ० ३. १. १६-८ ) चोक्थानि । सर्वं त्रिणवम् ॥ १२ ॥

---

## षष्ठस्याह्नः

5 असृक्षत प्र वाजिन (सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) इति स्तोत्रीयानुरूपौ । यमग्ने पृत्सु मर्त्यम् (सा० १४१५-७) इति होतुराज्यम् । मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)ति स्वारमौक्ष्णोरन्ध्रं तिसृषु ( ऊ० ३. २. १ ) 10 ऐडमौक्ष्णोरन्ध्रमेकस्याम् (ऊ० ३. २. २) अभीवर्त एकस्याम् (ऊ० ८ २. ८) कालेयमेकस्याम् (ऊ० ८. २. ९) अया पवा पवस्वैना वसूनी-( सा० ११०४-६ )ति इहवद्वासिष्ठमन्त्यं ( ऊ० ८. २. १०) माध्यंदिनस्य । ज्योतिर्यज्ञस्य पवते मधु प्रियम् (सा० १०३१-३) इति मरुतां धेन्वन्त्यम् (ऊ० ८. २. ११) आर्भवस्य । 15 समानमितरम् । समानमितरम् ॥ १ ॥

इति आर्षेयकल्पसूत्रे प्रथमोऽध्यायः ॥ १ ॥

असृक्षत प्र वाजिनः (सा० १०३४-६) एतमुत्यं दश क्षिपः (सा० १०८१-३) पवस्व देववीरति (सा० १०३७-४६) स ना च सोम जेषि च ( सा० १०४७-५६ ) तरत्समन्दी धावति (सा० 20 १०५७-६०) एते सोमा असृक्षते-(सा० १०६१-६३)ति वहिष्पवमानम् । यमग्ने पृत्सु मर्त्यं (सा० १४१५-७) प्रति वां सूर उदिते (सा० १०६७-९) भिन्धि विश्वा अप द्विषो (सा० १०७०-२) यज्ञस्य हि स्थ ऋत्विजे(सा० १०७३-५)त्याज्यानि । इन्द्रायेन्दो मरुत्वते (सा० १०७६-८) इति गायत्रं चेषोवृधीयं (ऊ० ३. १. १९) गायत्री- 25 क्रौञ्चं ( ऊ० ३. १. २० ) च वाजदावर्यश्च ( ऊ० ३. २. १ )

---

17. L. before असृक्षत adds : अथ क्लृप्तिः ; V¹ Om. असृक्षत…सोमा (l. 20)

रैवत्यश्च (र० १. २. ७) । मृज्यमान (सा० १०७९-८०) इति स्वारमौक्ष्णोरन्ध्रं (ऊ० ३. २. २) तिसृष्वैडमौक्ष्णोरन्ध्र-(ऊ० ३. २. ३)मभीवर्तः (६. १.१६) कालेय-(ऊ० १. १. ७)मिति सामतृचे। वाजजिद्वरुणसाम (ऊ० ३. २. ४-५)। आङ्गिरसां गोष्ठश्च (उ० ३. २. ६) तिसृषु । अया पवस्वैना वसूनी-( सा० ११०४-६ )तीहवद्वा- 5
सिष्ठ-(ऊ० ८. २. १०)मन्त्यम्। रैवतीषु वारवन्तीयम् ( ऊ० ३. २. ८ )। स्वासु वामदेव्यम् (ऊ० १. १. ५)। सुरूपकृत्नुमूतये (सा० १०८७-९) इत्यृषभो रैवतम् (र० १. २. ८) । उभे यदिन्द्रेति श्येनश्च (र० १. २. ९) पृष्ठानि । वारवन्तीयस्य स्तोत्रे धेनु-
रित्यादि पृष्ठधर्म उक्तः। परिस्वानो गिरिष्ठा (सा० १०९३-५) इति 10
गायत्रं च त्रीणि च वैदन्वतानि (ऊ० ३. २. ९-११) । ससुन्वेयो वसूनाम् (सा० १०९६-७) तं वः सखायो मदाये-( सा० १०९८-११०० )ति दीर्घकार्णश्रवसे (ऊ० ३. २. १२-१३) च । सोमाः पवन्त (सा० ११०१-३) इति गौरीवितं च मधुश्चिन्निधनं च
क्रौञ्चे च वाङ्निधनैडे (ऊ० ३. १. १४-७) । 15
ज्योतिर्यज्ञस्ये-(सा० १०३१-३ )ति मरुतां धेन्व-(ऊ० ८. २. ११) न्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । अग्ने त्वं नो अन्तम (सा० ११०७-९) इति गूर्दः (ऊ० ३. २. १९)। इमा नु कम् (सा० १११०-२) इति भद्रम् (र० १. २. १०)।
प्र व इन्द्राये-(सा० १११३-५)त्युद्वंशपुत्र (ऊ० ३.२.२०) इत्युक्थानि। 20
सर्वं त्रयस्त्रिंशम् ॥

षष्ठेऽहनि संस्थिते इत्यादि पूर्ववत्। अत्र सूत्रम्—आभीवर्त-स्तोत्रीयानाभिप्लाविकान् पृष्ठ्ये संशयेत् । ब्राह्मणाच्छंसिना कालेयर्चो-ऽच्छावाकेन सर्वत्र यदा पवमाने स्याता-( ला० श्रौ० ३. ६.
१८)मिति । तत्र प्रथमद्वितीययोरह्नोराभिप्लाविकस्याभीवर्तस्य 25

9. BT after च ins. इति

10. CV[1-2]T धर्मा उक्ताः for धर्मं उक्तः

पार्ष्ठिकयोर्नौधसश्यैतयोश्च समानस्तोत्रीयाविति न तयोः पृथगनुशासनम् । प्रथमेऽहनि कालेयस्य च । एवं चतुर्भिरभिप्लवैः पृष्ठ्येन चैको मासः । स द्वितीयः । स तृतीयः । स चतुर्थः । स पञ्चमः । षष्ठेऽपि मासे त्रयोऽभिप्लवाः प्रयोक्तव्याः । चतुर्थस्य लोपः ।
5 पूर्वस्मिन् पक्षसि त्रिषु चतुर्थोऽभिप्लवो लुप्येते-(ला० श्रौ० ३. ४. १७)ति वचनात् । तृतीयेऽभिप्लवे षष्ठेऽहनि इषोवृधीयसमन्ते स्याताम् । पृष्ठ्यानन्तर्ये षष्ठ (ला० श्रौ० ३. ४. १३) इति वचनात् ॥

पूर्ववत् पृष्ठ्यः षडहः प्रयोक्तव्यः ॥ १ ॥—॥ १३ ॥

10 इति श्रीवामनार्यसुतवरदराजविरचितायाम् आर्षेयकल्पसूत्र-
11 व्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

---

2. V[1-2]MyBKA °शंसनम् for शासनम् ; V[1-2]C MyBKA कालेयर्चा for कालेयस्य; V[1-2]T MyKA चतुरभिप्लवैः for चतुर्भिरभिप्लवैः ; B Cm. चतुर्भिः

5. TBMyKA लुप्यते for लुप्येत and Om. इति

## द्वितीयोऽध्यायः

# अभिजित्

अभिजितमाह—

पवस्व वाचो अग्रियः ( सा० ७७५-७ ) पुनानो अक्रमीदभि (सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७-९) ॥

इति वहिष्पवमानम् ॥ १ ॥

अग्निं दूतं वृणीमहे (सा० ७९०-२) आ नो मित्रावरुणा (सा० ६६३-५) अभि त्वा वृषभा सुतम् ( सा० ७३१-३ ) इन्द्राग्नी आगतं सुतम् (सा० ६६९-७१) ॥

इत्याज्यानि ॥ २ ॥

उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रम् आमहीयवं (ऊ० १. १. १) सत्रासाहीयम् (ऊ० ८. २. १२)। पुनानः सोम धारये-(सा० ६७५-६)ति अभीवर्तो (ऊ० ८. २. १३) रौरव-(ऊ० १.१.२) यौधाजये (ऊ० १.१.३)। अभि वायुं वी-( सा० १४२६-८ )ति पार्थम् (ऊ० ८. २. १४) अन्त्यम् ॥

[ इति माध्यंदिनः पवमानः ]

बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० २. १. ३) च कालेयं (ऊ० १. १. ७) च ॥

इति पृष्ठानि ॥ ४ ॥

स्वादिष्ठया मदिष्ठया ( सा० ६८९-९१ ) इति गायत्र-सांहिते ( ऊ० १. १. ८ ) पवस्वेन्द्रमच्छे-(सा० ६१२-६)ति सफ-(ऊ० १. १. ९ ) सुज्ञाने ( ऊ० ६. २. ८ ) पुरोजिती वो अन्धस

(सा० ६९७-९) इति गौरीवितं तिसृषु (ऊ० ४. १. १३)।
गौरीवितमेकस्यां (ऊ० ४. १. १३) मधुश्चुन्निधनमेकस्यां
(ऊ० ८. २. १५) श्यावाश्वमेकस्याम् (ऊ० १. १. ११) इति
वा। आन्धीगवं तिसृषु (ऊ० १. १. १२) यज्ञायज्ञीयं च
5 (ऊ० ८. २. १६) बृहच्चाग्नेयं (ऊ० ८. २. १७)। कावम्
(ऊ० १. १. १३) अन्त्यम् ॥ ५ ॥

[ इति आर्भवः पवमानः ]

गौरीवितस्य स्थाने गौरीवितादिभिः सामतृचो वैकल्पिकः। अथा-
न्यदग्निष्टोमसाम भवति । तद्यज्ञायज्ञीयमनुष्टुभि भवतीति न्यायेन
10 यज्ञायज्ञीयस्यानुष्टुप्सु कल्पनम् (ला० श्रौ० ८. ११. १२)॥५॥

यज्ञायज्ञीयस्यर्क्षु रथन्तरमग्निष्टोमसाम (र० १. २. १५) ॥ ६ ॥

नात्र रथन्तरधर्माः कार्याः । तस्यापृष्ठस्य सतो निवर्तेरन् धर्माः
(ला० श्रौ० २. ९. २६) इति वचनात् । यज्ञायज्ञीयधर्मास्तु
कार्याः। तत्र प्रतिहारवेलायां पत्न्यवेक्षणम् । अहिंकारे प्रतिहार-
15 वेलायां पत्नीमुद्गाते-(ला० श्रौ० २. १०. २३)ति वचनात् ॥ ६ ॥

स्तोमक्लृप्तिमाह—

सर्वस्तोमस्य सतस्त्र्यावृतस्तोमश्चतुःप्रणयाः ॥ ७ ॥

इति सर्वपृष्ठस्य स्तोमाः। त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा
यस्मिन् स सर्वस्तोमः । तस्य तथाविधस्य सतोऽभिजितस्ते
20 त्रिवृदादयः स्तोमास्त्रिरावृत्ताः चतुरुपक्रमाश्च भवन्ति । त्रींस्त्रीन्

8. KAMyT after अथ ins. यत्र and B यद् ;
9. KATBMy after तद् ins. यथा
13. BMyKAT यज्ञायज्ञीयस्य तु धर्माः for यज्ञायज्ञीयधर्मास्तु
14. BMyKA Om. तत्र; MyBKA हिंकारे for अहिंकारे
18. BMyTKA सर्वे for सर्वं
19. B. यतीया सर्वे स्तोमाः MyKA यतीन् सर्वे स्तोमाः (K स्तोम) for यस्मिन् स सर्वस्तोमः ; TV[1]C Om. सः ; T. सर्वे स्तोमाः for सर्वस्तोमः
20. V[1] त्रिरावृताः, T. त्रिभिरावृताः for त्रिरावृत्ताः

स्तोमान् चतुर्वारं प्रणयन्तीत्यर्थः । तथा च श्रुतिः—त्रींस्त्रिवृद-भिजितः प्रणयन्ति त्रीन् पञ्चदश त्रीनेकविंश (तां० ब्रा० १६. ४.१२) इति । तत्र त्रिवृद्बहिष्पवमानं पञ्चदशं होतुराज्यं सप्तदशं मैत्रावरुणस्येत्येकः प्रणयः । पञ्चदशं ब्राह्मणाच्छंसिनः सप्तदशमच्छावाकस्यैकविंशो माध्यंदिनः पवमान इति द्वितीयः । 5
सप्तदशं होतुः पृष्ठमेकविंशं मैत्रावरुणस्य त्रिणवं ब्राह्मणाच्छंसिन इति तृतीयः । एकविंशमच्छावाकस्य त्रिणव आर्भवः त्रयस्त्रिंशोऽग्निष्टोम इति चतुर्थः प्रणयः । एवं त्र्यावृतः स्तोमाः चतुःप्रणयाः ॥७॥—॥१॥

इति अभिजित् ॥ १ ॥

---

### स्वरसाम्नां प्रथमः

स्वरसामान प्रथम एते भवन्ती(तां० ब्रा० ४.५)ति विहितानां 10
स्वरसाम्नां प्रथमस्य क्लप्तिमाह—

उपास्मै गायता नरः (सा० ६५१-३) उपोषु जातमप्तुरम् (सा० १३३५-७) तं त्वा नृम्णानि बिभ्रतं (सा० ८३६-४०) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥ 15

अग्न आयाहि वीतये (सा० ६६०-७१) ॥२ ॥

इत्याज्यानि ॥

प्र सोमासो विपश्चितः (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० १. २. ११) चाभिसोमास आयव (सा० ८५६-८) इति पौरुहन्मनं (ऊ० ४. २. ९) च द्वैगतं (ऊ० ४. २. १०) 20
च गौङ्गवं च (ऊ० ८. २. १८) यौधाजयं (ऊ० ८. २. १९) चौशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानम् ॥ ] 23

---

1. V[1-2] BMyCKAT चत्वारः for चतुर्वारं ; C. त्रीन् for त्रिवृद्
11. T. क्लृप्तिः for क्लृप्तिमाह

**पौरुहन्मनमाद्यायां यौधाजयमध्यास्यायाम् ॥ ३ ॥**

यज्जायथा अपूर्व्ये (सा० १४२९-३१) इति रथन्तरम् (र० १. २. १६)। स्वासु वामदेव्यम् (ऊ० १. १. ५) । तं वो दस्म ऋतीषहम् (सा० ६८५-६) इत्यभीवर्तः ( ऊ० ६. २. १४ )।
5 स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

**इति पृष्ठानि ॥**

**यज्जायथा इत्यनुष्टुप् ॥ ४ ॥**

स्वादिष्ठया मदिष्ठया (सा० ६८९-९१) इति गायत्रं ( ) च क्षुल्लकवैष्टम्भं ( ऊ० ८. २. २० ) चाया पवस्व देवयुः
10 (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति सफ- (ऊ० १. २. १५) सुज्ञाने (ऊ० ६. २. १५ )। काशीतं वा ( ऊ० ६. २. १६ )। प्र सुन्वानायान्धसः ( सा० ७७४ ) इति गौरीवितं तिसृषु (ऊ० ६. २. १७)। गौरीवितमेकस्याम् (ऊ० १. २. १७ ) गौतममेकस्याम् ( ऊ० ९. १. १ ) औदलमेकस्याम्
15 (ऊ० ६. २. १९) इति वा । स्वरं तिसृषु यत् पयोनिधनम् (र० २. १. ४)। अभिप्रियाणी-(सा० ७००-२) त्यैडं कावम् (ऊ० ९. १. २) अन्त्यम्। स्वारं (ऊ० १. १. १३) यदि विकल्पयेत् ॥ ५ ॥

**[ इत्यार्भवः पवमानः ॥ ]**

20 सफसुज्ञाने **एकर्चयोः** । काशीतं वा **सुज्ञानस्थाने** । यत्पयोनिधन**मिति** प्रासुप्रासु **इत्येतदित्यर्थः** । स्वारं यदि विकल्पयेदिति । **गौरीवितं**
22 **गौतममौदलमिति सामतृचेन गौरीवितस्थानं यदि विकल्पयेद्विविधैः**

---

20. V[1-2] CT. after निधनम् ins. एवम्

22. LCV[2] गौरीवितं for गौरीवित°; V[1] °स्थाने for स्थानं

सामभिः कल्पयेत्तदा स्वारम् । कावमार्भवान्त्यम् । न त्वैडमित्यर्थः । तृचे हि गौरीविते क्रियमाणे मा मैवं निरिडः आर्भवो भूदिति वक्ष्यामाणन्यायेनेडानुग्रहार्थं कावं कल्पितम् । सामतृचे तु गौतमेनै- वेडानुग्रहः सिद्ध इति भावः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥ 5

औशनम् (ऊ० १. १. ४) औपगवम् (ऊ० ४. १. १८) वासिष्ठस्य प्रियं (ऊ० ३. १. १) तैरश्च्यम् (ऊ० २.२.७) इत्युक्थानि । यद्युक्थ्यः अग्निष्टोमस्त्वेव ॥ ७ ॥

एकविंशत्यहकारिणां पक्षे स्वरसामान उक्थ्या भवन्ति । तथा च निदानम्—अथैते स्वरसामानस्तानग्निष्टोमान् नवाहकारिणः कुर्युः । 10 उक्थ्यानेकविंशत्यहकारिण (नि० सू० ५. ७. १-३) इति । सूत्रं च—एकविंशत्यहकारिण उपरिष्टादभिजितः पृष्ठ्यमुपयन्ति । प्राक् च विश्वजितः स्वरसामानश्चोक्थ्यान् (द्रा० श्रौ० ८. २. १२) इति । अग्निष्टोमस्त्वेवेति नवाहकारित्वादस्माकमिति भावः । सप्तदश भवन्ति (तां० ब्रा० ४. ५. ५) इति श्रुतेः त्रयाणां स्वरसाम्नां सप्तदश 15 स्तोमाः कर्तव्याः ॥ ७ ॥

इति प्रथमः स्वरसामा ॥२॥ 17

---

1. LV[1-2]C. after स्वारं ins. एव; T. कावमेवार्भवमन्ययं for कावमार्भवान्त्यम् ; V[1-2]C आर्भवान्तम् for आर्भवान्त्यम् ,
2. V[1] आर्भवान्त्यमैडं न तु स्वांभवंतिर [ ] दुर्भवो हुरिति, T. मामेव उपयन्निरुड आर्भवःभूरिति, C मामेव निरआर्भवोंभूरिति, K मामेव पन्तिरितिन्ध आर्भवोभूरिति, A मामेव पन्तिरि [ ] आर्भवो भूरिति. MyB मामेव पन्तिरिगआर्भवो भूरिति, V[2] मामेवं निर [ ] डर्भवोहुरिति for मा मैवं निरिड आर्भवो भूदिति
4. MyBKA कृतः for सिद्धः
7. CV[2]P after तैरश्च्यं ins. इति
8. T. यद्युक्थ्यं, V[1] य उक्थ्यः, MyBKAL यदुक्थ्यः for यद्युक्थ्यः
13. LV[1-2]C उक्थानीति for उक्थ्यानिति

## स्वरसाम्नां द्वितीयः

**द्वितीयं स्वरसामानमाह—**

पवस्व वाचो अग्रियो (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) 5 उत्ते शुष्मास ईरते (सा० १२०५-९) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०-७; ७९९-८०२) इत्याज्यानि ॥ २ ॥

10 इन्द्रमिद्गा-चतुर्ऋचे तृतीयामृचमुद्धरेत्। तृतीयां सर्वस्वारस्वरसाम्नोरिति वचनात् ॥ २ ॥

वृषा पवस्व धारये-(सा० ८०३-५) इति गायत्रं च यौक्ताश्वं च यत् पृष्ठ्ये (ऊ० १. १. ३९)। परीतोषिञ्चता सुतम् (सा० १३१३-५) इति समन्तं च (ऊ० ९. १. ३) 15 दैर्घश्रवसं (ऊ० ५. २. ४) चायास्ये (ऊ० १. २. २०)। वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७.१.६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ]

यत् पृष्ठ्ये इति। यद् यौक्ताश्वं पृष्ठ्यःषडहे उक्तम् औहोहोइ 20 वृषेति तदित्यर्थः। यत् पूर्वमिति वक्तव्ये यत् पृष्ठ्य इति वचनं स्वरसाम्नां पृष्ठ्यप्रकृतित्वज्ञापनार्थम्। समन्तं प्रथमायाम्। त्रिणिधनमध्यास्यायाम् ॥ ३ ॥

मत्स्यपायि ते महः (सा० १४३२-४) बृहद् (र० २. १. १)। 24 स्वासु वामदेव्यम् (ऊ० १. १. ५)। अभि प्र वः सुराधसम्

---

19. V[1-2]TC पृष्ठचे for पृष्ठ्यः

21. V[-2] ज्ञापकार्थम् for ज्ञापनार्थम्

( सा० ८११-२ ) इत्यभीवर्तः (ऊ० ७. १. ७) । स्वाशु कालयम् ( ऊ० १. १. ७ ) ॥ ४ ॥

इति पृष्ठानि ॥

मत्स्यपायीति उत्तरा बृहती प्रथमा । अनुष्टुभावुत्तरे ॥ ४ ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रं च हाविष्मतं (ऊ० २.१.५) च । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति शङ्कु-(ऊ० २. १. ६) सुज्ञाने (ऊ० २. १. ७) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति गौरीवितं तिसृषु (ऊ० ७.१.९) । गौरीवितमेकस्याम् (ऊ० २.१.८) क्रौञ्चमेकस्याम् (ऊ० २.१.९) आसितमेकस्याम् (ऊ०९.१.४) इति वा । स्वारं तिसृषु यद् बृहन्निधनयोः पूर्वम् (र० २. १. ६) । उत्तरमावृत्तेषु (र० २. १. ७) । वृषा मतीनां पवत ( सा० ८२१-३ ) इति ऐडं यामम् (ऊ० ९. १.५) अन्त्यम् । स्वारं ( ऊ० २. १. १० ) यदि विकल्पयेत् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

शङ्कुसुज्ञाने एकर्चयोः । यत् बृहन्निधनयोः पूर्वम् इति । हस् पया इति, हस् इडा पया इति च निधनाभ्यामुपलक्षिते द्वे बृहन्निधने । तयोः पूर्वम् । एहा वयं पूषेत्येतदित्यर्थः । उत्तरमावृत्तेष्विति । आवृत्तेषु स्वरसामसु बृहन्निधनयोरुत्तरम् । एहाउ औहो अयं पूषेत्येतदित्यर्थः । सामतृचपक्षे स्वारं याममार्भवान्त्यम् ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

साकमश्वं (ऊ० १. १. १५) सौभरम् (ऊ० १. १. १६) आष्टादंष्ट्रम् ( ऊ० २. १. १२ ) इत्युक्थानि । यद्युक्थ्योऽग्निष्टोमस्त्वेव ॥ ७ ॥

---

4. CV[1-3] Om. उत्तरा; MyBTKA उत्तरो for उत्तरा; V[2] Om. प्रथमा

10. LV[1-2]C आसीतम् for आसितम्

23. LV[2]TC यद्व for यदि

यद्युकूथ्यः । अत्राष्टादंष्ट्रपूर्वम् । अग्निष्टोमस्त्वेव । व्याख्यातमिदम् । सर्वाणि स्तोत्राणि सप्तदशानि ॥ ७ ॥

इति द्वितीयः स्वरसामा ॥ ३ ॥

---

## स्वरसाम्नां तृतीयः

5 तृतीयं स्वरसामानमाह—

दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) पवस्व वृष्टिमासु नः (सा० १४३५-९) पवमानस्य ते कवे (सा० ६५७-९) ॥१॥

इति बहिष्पवमानम् ॥

10 पवस्ववृ-पञ्चर्चम् ॥ १ ॥

अग्निनाग्निः समिध्यत (सा० ८४४-५५) ॥

इत्याज्यानि ॥ २ ॥

ऊच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) चाभिसोमास आयव (८५६-८) इति पौरुमद्गं (ऊ० २. १. १४) च गौतमं (ऊ० २.१.१५)

15 चान्तरिक्षं (र० १. १. ६) चाग्नेश्च त्रिणिधनम् (ऊ० ७. १. १४) । तिस्रो वाच (सा० ८५९-६१) इत्यङ्गिरसां संक्रोशोऽन्त्यः (२. १. १७) ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

पौरुमद्गं प्रथमायाम् । अग्नेस्त्रिणिधनमध्यास्यायाम् ॥ ३ ॥

20 प्रत्यस्मै पिपीषत (सा० १४४०-३) इति रथन्तरं (र० २.१.२) स्वासु वामदेव्यम् (ऊ० १. १. ५)। वयं घ त्वा सुतावन्त (सा० ८६४-६) इत्यभीवर्तः (ऊ० ९. १. ६) । स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥

25 रथन्तरस्य प्रथमे अनुष्टुभौ । बृहत्युत्तमा ॥ ४ ॥

---

25. MyBKAL रथन्तर for रथन्तरस्य° ; V[1-2] उत्तमाः, C उत्तमः, MyBKA उत्तरा for उत्तमा

तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं च संहितं (ऊ० ९. १. ७) च क्षुल्लकवैष्टम्भम् (ऊ० सं० ३६)। आ सोता परिषिञ्चत (सा० १३९४-५) सखाय आ निषीदत (सा० ११५७-९) इति वाचश्च साम (ऊ० ७. १. १७)। सुज्ञानं (ऊ० ७. १. १८) च। दैवोदासं 5 (ऊ० ७. १. १९) वा। सुतासो मधुमत्तमा (सा० ८७२-४) इति गौरीवितं तिसृषु (ऊ० २. २. ३)। गौरीवितमेकस्याम् (ऊ० २. २. ३)। आन्धीगवमेकस्याम् (ऊ० ७. १. २०)। त्वाष्ट्रीसामैकस्याम् (ऊ० ९. १. ८) इति वा। स्वरं तिसृषु यत् प्रथमम् (र० २. १. १०)। पवित्रं त (सा० ८७५-७) 10 इत्यरिष्टम् (र० १. १. ८) अन्त्यम् ॥ स्वारं सामराजं (ऊ० ७. २. १) यदि विकल्पयेत् ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

यत्प्रथममिति। सुतासो मधुमत्तमा इत्येतत्। स्वारसामराजं विकल्पये-दिति। पूर्ववदिदं व्याख्येयम् ॥ ५ ॥ 15

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णम् (ऊ० २. २. ६) उद्वंशीयम् (ऊ० ६. १. ८) इत्युक्थानि। यद्युक्थ्योऽग्निष्टोमस्त्वेव ॥७॥

संस्थयोर्व्यवस्था पूर्ववत् ॥ ७ ॥ 20

सर्वे सप्तदशाः ॥ ८ ॥ 21

---

1. PA[2-3] गायत्रसंहिते for गायत्रं च संहितं च
2. MyBKA Om. संहितं ; PA[2-3] Om. क्षुल्लकवैष्टम्भं
11. L. स्वार for स्वारं
19. LV[2] यदुक्थ्यं KAMyB यद्युक्थ्यानि for यद्युक्थ्यः; CV[1] यद् for यदि
20. LCV[1-2] अवस्था for व्यवस्था

स्वरसामानः सर्वे सप्तदशाः । सर्वशब्दः कृत्स्नवाचकः । सर्वाणि स्तोत्राणि सप्तदशान्येषामित्यर्थः । अथवा अन्यत्र कल्पकारेणापि नियुक्तः स्वाराण्यूहेऽधीयन्ते । यथा यज्जायथा इति पयोनिधनम् । मत्स्य पायि ते मह इति बृहन्निधने । प्रत्यस्मा इति प्रथमं च
5 तेषां स्वरपृष्ठेषु स्वरसामसु विनियोगः । यथोक्तम्—स्वरपृष्ठाश्चेत् स्वरसामिकेषु पृष्ठस्तोत्रीयेषु यथासुतमित्यादि ॥ ८ ॥

इति स्वरसामानः समाप्ताः ॥ ४ ॥

## विषुवान्

विषुवतो दिवैके प्रातरनुवाकमुपकुर्वन्ति । बहिरस्यैके बहिष्पवमानेन
10 स्तुवत (ला० श्रौ० ४. ६. १८-९) इति विषुवत्सञ्ज्ञकं दिवाकीर्त्यमहराह—

उपास्मै गायता नरो (सा० ६५१-३) बभ्रवे नु सुतवसे (सा० १४४४-९) प्र स्वानसो रथा इव (सा० १११९-२७) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

15 इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) यदद्य सूर उदिते (सा० १३५१-३) उदु घेदभि श्रुतामघम् (सा० १४५०-२) इयं वामस्य मन्मनः (सा० ९१६-८) ॥ २ ॥

19 इत्याज्यानि ॥

---

1. T. सर्वपदं कार्त्स्न्यवचनं for सर्वशब्दः कृत्स्नवाचकः ; LCV1-2 readings are corrupt.
2. MyBKA तेषाम् for एषाम्
5. CMyBKA स्वः, T. सर्व for स्वर° ; CMyK स्वः for स्वर
6. MyBTV1KA स्वम् for सुतम्

अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) गायत्रं च भ्राजं (र० २. १. ११) सत्रासाहीयम् (ऊ० ९.१.९)। तवाहं सोम रारणे-(सा० ९२२-३)त्युत्सेधं तिसृषु (ऊ० ९. १. १०)। आभीशवमेकस्याम् (ऊ० २. २. १०) अभीवर्त एकस्याम् (ऊ० ८. १. १८) पृश्न्यैकस्याम् 5 (ऊ० ९. १. ११) रथन्तरं तिसृषु (ऊ० २. २. ४)। शिशुं जज्ञानम् (सा० ११७५-७) इति पार्थम् (ऊ० ९. १. १२) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

आभीशवादिभिः सामतृचम् । भ्राजादिषु शुक्रियेषु त्रिरुक्तॉं- 10 स्तोभांश्चतुर्ब्रूयुः। निधनात् पूर्वस्य नाभ्यासः ॥ ३ ॥

महादिवाकीर्त्यं च (र० २. १. १२) वामदेव्यं च (ऊ० १. १. ५)। इन्द्रक्रतुं न आ भरे-(सा० १४५६-७)ति विकर्णम् (र० २. १. १७)। स्वासु कालेयम् (ऊ० १. १. ७)॥ ४ ॥

इति पृष्ठानि ॥ 15

महादिवाकीर्त्यं पिबत्विति पृष्ठहोमे विशेषः। महादिवाकीर्त्यस्य ऋषिरिन्द्रः । सूर्यो वा। जगती छन्दः। सूर्यो देवता । तस्य स्तुतिप्रकारः प्रतिहारव्याख्याने एवोक्तः । प्रथमे प्रस्तावे कुशा-विधानम्। ओंकारेणोद्गीथादानं च । न द्वितीये । तेन स्तुत्वा पूर्वं चमसेभ्यः त्रिष्टुप्छन्दसातिग्राह्याणां भक्षणम् । एतस्यान्य- 20 तरस्मिंस्त्र्यहेऽतिग्राह्याणां भक्षयेयुः स्तुत्वा पृष्ठेन । विषुवद्व्रतयोश्च । 21

---

18. MyBKA विधानादि° for कुशाविधानम्
19. KAMyB उद्गीथादानादि for उद्गीथादानं
20. MyBKA अत एव तस्य, T तत एव तस्य, V[1-2]C त एव तस्य for एतस्य

त्रिष्टुप् छन्दसा । पूर्वं चमसेभ्यः (ला० श्रौ० सू० २. ६. ११-१४) इति वचनात् । नाराशंसस्य पूर्ववद्भक्षणम् ॥ ४ ॥

परि स्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं चाभ्राजं (र० २. १. २०) च । अभि द्युम्नं बृहद्यशः (सा० 5 १०११-२) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति शफ-(ऊ० ९. १. १३) श्रुध्ये (ऊ० ९. १. १४) एकर्चयोः । पर्यूषु (सा० १३६४-६) इति श्यावाश्वमेकस्याम् (ऊ० ६. १. १८) । पुरोजिती वो अन्धस (सा० ६९७-९) इति बृहत्ति-सृषु (र० २. २. ५) । गौरीवितमेकस्याम् (ऊ० ६. १. १३) । 10 आन्धीगवमेकस्याम (ऊ० १. १. १२) । निषेधमेकस्याम् (ऊ० ९. १. १५() । यज्ञायज्ञीयं तिसृषु (ऊ० ८. २. १६) । धर्ता दिव (सा० १२२८-३०) इति कावम् (ऊ० ९. १. १६) अन्त्यम् ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

15 पर्यूष्विति पिपीलिकामध्यानुष्टुप् । ५ ॥

मूर्धानं दिवो अरतिं पृथिव्या (सा० ११४०-२) इति भासं दशास्तोभमग्निष्टोमसाम (र० २. २. २) ॥ ६ ॥

एकविंशस्तोमः ॥ ७ ॥

तस्य त्रिष्टुप् छन्दः । अस्याह्नः स्तोमक्लृप्तिमाह—एकविंशस्तोम 20 इति । बण्महाँ असि सूर्यम् (सा० १७८८-९) इन्द्रमिद्देवतातये (सा० १५८७-८) आयन्त इव सूर्यम् (सा० १३१९-२०) इति स्तोत्रीया विकल्पन्ते (ला० श्रौ० सू० ४. ६. २३) । यज्ञायज्ञीयभासे व्यतिहरन्त्येके (ला० श्रौ०सू० ४. ६. २२) । तत्राहम् (सा० ९२२-३) 24 इति महादिवाकीर्त्यस्य (र० २. २. १०) पुरोजिती (सा०

22. V[1] Om. यज्ञा°···विनियोगः (p. 131, L. 1)

६९७-९)ति विकर्णस्य ( २० २. ३. ५ ) च बृहत्पृष्ठे विनियोगः । यथोक्तम्—बृहत्पृष्ठश्चेदग्रियवती प्रतिपदि-(ला० श्रौ० सू० ४. ७. १) त्यादि । आयन्त इति विकर्णस्य उच्चा ते इत्यग्नेर्व्रतस्य चास्मिन् प्रदेशे यदध्ययनं तस्य प्रयोजनमन्वेष्यम् ॥ ७ ॥

इति विषुवान् ॥ ५ ॥ 5

---

## आवृत्ताः स्वरसामानः

**अथोत्तरस्मिन् पक्षसि त्रयः स्वरसामान आवृत्ताः** । एत-एवावृत्ता ऊर्ध्वं विषुवतोऽभिप्लवाः । तेषां प्रतिलोममह्नान्युपेयुः पृष्ठस्वरसाम्नां चे-(ला० श्रौ० सू० ३. ४. १८-२०)ति वचनात् । तेषां विशेषमाह— 10

इन्द्र ऋतुं न आभर ( सा० १४५६-७ ) इति महावैष्टम्भं (ऊ० ९. १. १७) श्यैत-(ऊ० ९. १. १९) नौधसे (ऊ० ९. २. १) । एतानि ब्रह्मसामान्यावृत्तानां स्वरसाम्नामभीवर्तलोके । पौष्कलं राथन्तरयोः (ऊ० ९. १. १८) । श्रुध्यं (ऊ० ९. १. २०) बार्हतस्य सुज्ञानलोके ॥ १ ॥ 15

यत् पुरस्तात् समानः प्रगाथो भवति । अन्यदन्यत् सामे-(तां० ब्रा० ४. ३. ८)ति श्रुतेः । अभीवर्तस्थाने इन्द्रक्रतौ नानाब्रह्मसामानि विहितानि । सुज्ञानमपि पौर्वपक्षिकमेवेति तत्स्थाने राथन्तरयोः स्वरसाम्नोः पौष्कलम् । बार्हतस्य च स्वरसाम्नः श्रुध्यं विहितम् । तत्रावृत्तानां स्वरसाम्नां प्रथमो द्रविणुतत्या रुचेत्यादिकः । तस्येन्द्र- 20

---

2. MyBAK °पृष्ठचं चेत् for °पृष्ठश्चेत्
3. L after अस्मिन् ins. ऊहरहस्ये
7. KAMyB पक्षस् for पक्षसि ; BKAT Om. एते एवावृत्ताः; V[1] तत एवावृत्ताः, L. एते वावृत्ताः for एत एवावृत्ताः
14. AKB. श्रुध्यश्वार्हतस्य, L श्रुध्यं वा एते for श्रुध्यं बार्हतस्य
17. MyBTKA °क्रतोः for °क्रतौ
18. MyBTKA इति for अपि
19. L. Om. बार्हतस्य ··· पौष्कलम् ( p. 132, L. 7)

क्रतौ महावैष्टम्भं ( ऊ० ९. १. १७ ) ब्रह्मसाम । सुज्ञानलोके पौष्कलम् (ऊ० ९. १. १८)। द्वितीयस्तु स्वरसाम्ना पवस्व वाचो अग्रिय इत्यादिक एव। तस्येन्द्रक्रतौ श्यैतं ( ऊ० ९. २. १९ ) ब्रह्मसाम। इन्द्रमच्छेति सुज्ञानस्थाने श्रुध्यम् (ऊ० ९. १. २०) ।
5 बृहन्निधनयोः स्वरयोः पूर्वस्य स्थाने उत्तरम् । तृतीयस्तूपास्मै गायता नर इत्यादिकः। तस्येन्द्रक्रतुमिति नौधसं (ऊ० ९. २. १) ब्रह्मसाम। पवते हर्यतो हरिरिति सुज्ञानस्थाने पौष्कलम् (ऊ० ९.२.२)। शेषं पूर्ववत् ॥ १ ॥

इति आवृत्ताः स्वरसामानः ॥ ६ ॥

---

10 ## विश्वजित्

अथ विश्वजितमाह—

उप त्वा जामयो गिरो ( सा० १५७०. ) जनीयन्तो न्वग्रव ( सा० १४६०. 2 ) उत नः प्रिया प्रियासु ( सा० १४६१. ) तत्सवितुर्वरेण्यं ( सा० १४६२. ) सोमानं स्वरणम् (सा०
15 १४६३. ) अग्न आ याहि (आयूंषि?) पवसे ( सा० १४६४. ) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

आद्याः षडेकर्चाः। उत्तमस्तृचः। उत्तमस्तृचो भवती(तां० ब्रा० ११. ६. ८)ति श्रुतेः। संभवति स्तोमेऽन्त्यं सर्वत्र तृच [इति]
20 वचनाच्च। नानादैवतं बहिष्पवमानम्। अग्निः सरस्वती सरस्वान् सविता ब्रह्मणस्पतिरग्निः पवमानः इति षण्णामृचां क्रमेण देवताः।
22 पावमान उत्तरस्तृचः ॥ १ ॥

---

1. V[1]. Om. सुज्ञान ··· ब्रह्मसाम (L. 4)
5. MyBKA. Om. उत्तरम् ··· सुज्ञानस्थाने (L. 7)
22. MyBKATV[2]. पवमानः for पावमानः; TMyKBA. ऋचः for तृचः

सुषमिद्धो न आ वह (सा० १३४७-५०) ता नः शक्तं पार्थिवस्य (सा० १४६५-७) युञ्जन्ति ब्रध्नमरुषं (सा० १४६८-७०) तमीडिष्व यो अर्चिषा (सा० ११४९-५१) ॥ २ ॥

इत्याज्यानि

सुषमिच्चतुर्ऋचे यथागोत्रं उद्धारप्रकारः उक्तः ॥ २ ॥ 5

अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ९. २. ३) च । परीतोषिञ्चता सुतम् (सा० १३१३-५) इति कालेयमेकस्याम् (ऊ० ९. २. ४) । रथन्तरं तिसृषु (र० २. २. ६) दैर्घश्रवसं तिसृषु (ऊ० ५. २. ४) यौधाजयमेकस्याम् (ऊ० ७. २. ५) । अयं सोम 10 (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥३॥

[ इति माध्यंदिनः पवमानः ॥ ]

शशकर्णक्लृप्ता बृहती । रथन्तरस्तवनकाले रथघोषः कर्तव्यः । विश्वजिति वैराजे धर्मान् कुर्यात् । इतरेष्वपि पृष्ठेष्वित्याचार्यमतिः (ला० श्रौ० ३. ६. २०-२१)इति वचनात् ॥ ३ ॥ 15

वैराजं (र० १. १. १०) च महानाम्न्यश्च (र०प०शि०) वैरूपं च (र० १. १. ७) रेवत्यश्च (र० २. २. ७) ॥४॥

इति पृष्ठानि ॥

वैरजं पिबतु सोम्यं मधु इति पृष्ठहोमः । एषां पृष्ठानां धर्माः पृष्ठ्ये दर्शिताः ॥ ४ ॥ 20

परि स्वानो गिरिष्ठाः (सा० १०९३-५) इति गायत्रसंहिते (ऊ० ९. २. ६) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय-(ऊ० ९. २. ७) श्रुध्ये (ऊ० ९. १. २०) । पर्यूषु (सा० १३६४-६) इति वामदेव्यम् (ऊ० ९. २. ८) । पुरोजिती वो अन्धस (सा० ६९७-९) इति आन्धीगवमेकस्याम् 25

5. TC. °गोत्रप्रकारः, V[1 3] °गोत्र उद्धारः for °गोत्रमुद्धारप्रकारः

(ऊ० १. १. १२) गौरीवितमेकस्याम् (ऊ० ४. १. १३)। यद्वाहिष्ठीयमेकस्याम् (ऊ० ९. २. ९)। यज्ञायज्ञीयं तिसृषु (ऊ० ८. २. १६)। परि प्र धन्वे-(सा० १३६७-९)ति द्विपदासु वारवन्तीयम् (ऊ० ९. २. १०) सूर्यवतीषु कावम्
5 (ऊ० ९. २. ११) अन्त्यम् ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

पर्यूष्विति पिपीलिकामध्यानुष्टुप्। परिप्रधन्वेत्यक्षरपङ्क्तिः ॥ ५ ॥

त्वमग्ने यज्ञानां होते-(सा० १४७४-६)ति बृहदग्निष्टोमसाम (र० २. २. ८) ॥ ६ ॥

10 तस्य गायत्री छन्दः। स्तुतिकाले दुन्दुभिघोषः कार्यः ॥ ६ ॥

सर्वस्तोमस्य सतः चतुरावृत्ताः स्तोमास्त्रिःप्रणयाः ॥ ७ ॥

इति। अभिजित् स्तोमकल्पानुसारेण व्याख्येयः। अत्र श्रुतिः— चतुरस्त्रिवृद्विश्वजितः प्रणयन्ति। चतुरः पञ्चदशश्चतुरः सप्तदश (तां० ब्रा० १६. ४. १३) इति। एवं त्रिवृद्बहिष्पवमानम्। पञ्चदशं
15 होतुराज्यम्। सप्तदशं मैत्रावरुणस्य। एकविंशं ब्राह्मणाच्छंसिनः इति प्रथमः प्रणयः। पञ्चदशमच्छावाकस्य। सप्तदशो माध्यंदिनः पवमानः। एकविंशं होतुः पृष्ठम्। त्रिणवं मैत्रावरुणस्येति द्वितीयः। सप्तदशं ब्राह्मणाच्छंसिनः। एकविंशमच्छावाकस्य। त्रिणव आर्भवः। त्रयस्त्रिंशोऽग्निष्टोमः इति तृतीयः। एवं चतुरावृत्ताः स्तोमाः
20 त्रिष्प्रणयाः ॥ ७ ॥

इति विश्वजित् ॥ ७ ॥

---

## पृष्ठ्याभिप्लवावावृत्तौ

अथ त्रयस्त्रिंशारम्भणः पृष्ठ्यः षडहः तस्य षण्णामह्नां
24 विशेषमाह—

---

11. PA²V¹ चतुरावृत°, A³ चतुरावृत्तित° for चतुरावृत्ताः
19. V²C चतुरावृत्त°, V¹ByBAT. चतुरावृत for चतुरावृत्ताः°

पौरुमीढं (ऊ० ९. २. १२) मानवं (ऊ० ९. २. १३)
जनित्रं (ऊ० ९. २. १४) भारद्वाजं (ऊ० ९. २. १५)
वासिष्ठं (ऊ० ९. २. १६) गौङ्गवं (ऊ० ९. २. १७)
शुद्धाशुद्धीयं (ऊ० ९. २. १८) वैत एकर्चाः । आवृत्तस्य
पृष्ठस्याभीवर्त्तलोकः ॥ १ ॥ 5

तत्र प्रथमं त्रयस्त्रिंशमहरसृक्षत प्रवाजिन इत्यादिकम् । तस्य पवमानाभ्यर्षसीत्यभीवर्तस्थाने पौरुमीढम् । षष्ठेऽहनि संस्थिते इत्यादिनिदानोक्ताः षडहसंस्थाधर्मा अस्मिन्नहनि कर्तव्याः । कथमावृत्ते पृष्ठे संस्थाधर्मा इत्युपक्रम्य त्रयस्त्रिंशेस्य त्वेव संस्थायामित्याचार्या (नि. सु. ४. ५) इत्यादिनिदानवचनात् । पवमानस्य विश्वविदित्यादित्रिणवमहर्द्वितीयम् । तस्य मन्द्रया याति धारयेत्यभीवर्तस्थाने पूर्वं मानवम् । पवमानो अजीजनत्—पुनानो अक्रमीदभि इत्याद्येकविंशमहस्तृतीयम् । तस्य परिधिँ रति ताम् अभीवर्तलोके जनित्रम् । दविद्युतत्यादि सप्तदशमहश्चतुर्थम् । तस्याभिसोमास आयव इति प्रथमायामभीवर्तलोके भारद्वाजम् । पवस्व वाचो अग्रिय इत्यादिकं पञ्चदशमहः पञ्चमम् । तस्मिन्नुत्सो देवो हिरण्यय इत्यभीवर्तस्थाने वासिष्ठम् । उपास्मै गायता नर इत्यादिकं त्रिवृदहः षष्ठम् । तस्य प्र सोम देववीतय इति प्रथमायामभीवर्तस्थाने गौङ्गवं शुद्धाशुद्धीयं वा । अन्यत् सर्वं पूर्ववत् ॥ १ ॥ 19

---

4. T. वैतत्, MyB वैतन्वत°, KA च त° for वैत°
8. MyBKA. Om. षडहसंस्था
9. V[1]C. °त्रिंशस्त्वेव संस्थायाम् KL.त्रिंशे त्वेव for त्रिंशस्य त्वेव संस्थायाम् संस्थायाम्
10. V[1-2]IBMyKA (आ) दिक for (आ) दि
14. MyBV[1-2]CTKA (आ) दिक for (आ) दि; V[1] after चतुर्थम् adds : अहः
15. L. removes प्रथमायामभीवर्तलोके
16. L. after पञ्चमम् adds : अहः; MyBKA तस्य व for तस्मिन्नुत्सो'''हिरण्य°
17. MyBKA. Om. वासिष्ठम्° ; L. after षष्ठम् ins. अहः°

अथावृत्तस्याभिप्लवस्य षण्णामह्नां क्रमाद्विशेषमाह–

इन्द्र क्रतुं न आ भरे-(सा० १४५६-७)ति पौरुमीढं (ऊ० ९.२.१९) मानवं (ऊ० ९. ३. १) जनित्रं (ऊ० ९.३.३) भारद्वाजं (ऊ० ९. ३. ५) श्यैत-(ऊ० ९. १. १९) नौधसे (ऊ० ९.२.१)।
5 एतानि ब्रह्मसामान्यावृत्तस्याभिप्लवस्याभीवर्तलोके। पौष्कलं (ऊ० ९. ३. २) राथन्तराणां श्रुध्यं (ऊ० ९. २. २०) बार्हतानां सुज्ञानलोके ॥ २ ॥

इति। तत्र प्रथमस्याह्नः कल्पः—असृक्षत प्र वाजिनः-(सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) पवमानस्य ते कवे
10 (सा० ६५७-९) इति बहिष्पवमानमित्यादि। इन्द्र क्रतुं न आभरेति पौरुमीढं ब्रह्मसामाभीवर्तस्थाने। तं वः सखाय (सा० १०९८-११००) इति सुज्ञानस्य श्रुध्यम् (ऊ० ९. २. २०) ॥

द्वितीयस्याह्नः—पवमानस्य विश्वविद् (सा० ९५८-६०) इत्यादि। इन्द्रक्रतुमिति मानवाद्यं (ऊ० ९. ३. १) ब्रह्मसाम। प्राणा
15 शिशुर् (सा० १०१३-५) इति सुज्ञानलोके पौष्कलम् (ऊ० ९.३.२)॥

तृतीयस्याह्नः—पवमानो अजीजनत् (सा० ८८९-९१) इत्यादि। इन्द्र क्रतौ जनित्रं (ऊ० ९. ३. ३) ब्रह्मसाम। सोमः पुनान इति सुज्ञानलोके श्रुध्यम् (ऊ० ९. ३. ४)॥

चतुर्थस्याह्नः—दविद्युतत्या रुचे-(सा० ६५४-६)त्यादि। इन्द्र-
20 क्रतुमिति भारद्वाजं (ऊ० ९. ३. ५) ब्रह्मसाम। सखाय आ निषीदते-(सा० ११५७-९)ति सुज्ञानलोके पौष्कलम् (ऊ० ९.१.१८)॥

पञ्चमस्याह्नः—पवस्व वाचो अग्रियः (सा० ७७५-७) इत्यादि। इन्द्रक्रतौ श्यैतं (ऊ० ९.१.१९) ब्रह्मसाम। इन्द्रमच्छे-(सा० ६९४-६)ति
24 सुज्ञानस्थाने श्रुध्यम् (ऊ० ९.१.२०)॥

---

13. MyB चतुर्थस्य for द्वितीयस्य°; K Om. द्वितीयमस्याह्नः…सुज्ञान भोके पौष्कलम् (L. 15)

षष्ठस्याह्नः—उपास्मै गायता नर (सा० ६५१-३) इत्यादि। इन्द्रक्रतुमिति नौधसं (ऊ० ९. २. १) ब्रह्मसाम। पवते हर्यत (सा० ७७३- ) इति सुज्ञानलोके पौष्कलम् (ऊ० ९. २. २)॥ अन्यत्सर्वमुक्तम्॥

अत्र च त्रिष्वभिप्लवेषु कर्तव्येषु आवृत्तानां चतुर्णामभिप्लवानां 5 यः प्रथमः शाक्करवर्णवाँस्तस्य लोपः। उत्तरे अभिप्लवे दशरात्र-समीपे त्रिषु चतुर्णामावृत्तानां प्रथमो लुप्येतेति धनंजयः उत्तम इषो-वृधीयसमन्ते स्यातामिति। विपरीतमेतच्छाण्डिल्यायनस्य। विषुवत्समीपे च। त्रिष्वभावः (ला० श्रौ० ३. ४. २१-२३) एवमुत्तरस्मिन् पक्षसि प्रथमस्य मासस्य अष्टाविंशतिरहानि। द्वात्रिंशदुत्तमे। द्वे त्वहनी 10 पुरस्तात् भविष्यतः। पुनरावृत्तं पृष्ठ्यमावृत्तांश्चाभिप्लवान् कुर्युः। स मासः। तथैव अपरे त्रयो मासाः। अथ षष्ठे मासि त्रयोऽभिप्लवाः पूर्ववत्॥

इति पृष्ठ्याभिप्लवावावृत्तौ॥ ८॥

---

आयुः 15

आयुष्टोममाह—

ज्योतिष्टोममाज्यबहिष्पवमानम्। गायत्री च॥ १॥ 17

---

5. L. ततः, C. तत्र for अत्र

6. MyBKAT उतमे for उत्तरे; V[1-2] TCMyBK after अभिप्लवे ins. इषोवृधीयसमन्ते स्याताम्। अथवा तेषामुत्तमस्य यण्वतो लोपः। इषो वृत्रीयसमन्ते तु (MyBKA °मन्तेन्द्र क्रतु) प्रथमेऽभिप्लवे

7. V[2] लुप्यतेति for °लुप्येतेति

9. MyBKATV[1-2]C इति तद् for अभावः; MyBKA उक्ते for उत्तरस्मिन्

10. MyBK त्रिशत्वमेतत्वहीन परस्तात्, A. त्रिशत्वमेतत्वहीनपरस्तात्, C त्रिशततमेवत्वहनि। पुरस्तात्, V[1] त्रिशतमेवत्वहनीय परस्ताद्, V[2] त्रिशततमेवत्वहनी परस्तात्, T. त्रिशत्तमेवत्वहानि परस्तात् for द्वात्रिंशदुत्तमे। द्वे त्वऽहनी पुरस्तात्

12. TC Om. अथ

गायत्रीशब्देनात्र माध्यंदिनाद्यो गायत्रस्तृचः ससामा कथ्यते । उ२-दधि-पत्रे(सा० ६५१-३)ति बहिष्पवमानम् । अग्न-आनो मित्रा-आयाहि-इन्द्राग्नी-(सा० ६६०-७१) इत्याज्यानि । उच्चा ते-(सा० ६७२-४) इति गायत्रं चामहीयवं च ॥ १ ।

5 अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं च (ऊ० ४. २. ७) वार्कजम्भं च यद् बृहन्निधनं (र० २.२.९) मैधातिथं (ऊ० ९. ३. ३) च रौरवं (ऊ० ७. १. १३) वा यौधाजयम् । (ऊ० ८. २. १९) औशनम् ( ऊ० १. १. ४ ) अन्त्यम् ॥ २ ॥

10 [ इति माध्यंदिनः पवमानः ॥ ]

द्विहिंकारं प्रथमायाम् । यौधाजयमध्यास्यायाम् ॥ २ ॥

रथन्तरं च ( र० १. १. १ ) वामदेव्यं (ऊ० १. १. ५) च । इन्द्र क्रतुं न आ भरे-(सा० १४५६-७)ति नौधसं (ऊ० ९. २. १) स्वासु कालेयम् (ऊ० १. १. ७) । ३ ॥

15 इति पृष्ठानि ॥

स्वादिष्ठये (सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १.१.१८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९) पौष्कले (ऊ० १. १. १०) । पुरोजिती वो ( सा० ६९७-९ ) इति गौरीविता-(ऊ० ४. १. १३)न्धीगवे (ऊ० १. १. १२) । कावम् 20 (ऊ० १. १. १३) अन्त्यम् ॥ ४ ॥

इत्यार्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ५ ॥

प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णम् ( ऊ० २. २. ६ ) 24 उद्वंशीयम् (ऊ० १. ८) इत्युक्थानि ॥ ६ ॥

---

1. MyBKA गयत्रीतृचः समाकथ्यते, CV[1-2] गायत्र्यस्तृचः ससामा कथ्यते for गायत्रस्तृचः ससामा कथ्यते

7. MyBKA रौरवयौधाजये for रौरवं वा यौधाजयं, LV[1] Om. वा

आयुष्टोमस्तोमः ॥ ७ ॥

त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशं मध्यंदिनं सवनम् । एकविंशं तृतीयसवनम् । सोक्थमिति स्तोमः ॥ ७ ॥

इति आयुः ॥ ६ ॥

---

## गौः

**गोष्टोममाह—**

पवस्व वाचो अग्रियो (सा० ७७५-७) दविद्युतत्या रुचा (सा० ६५४-६) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८ ; ७९९-८०२) ॥ २ ॥

इत्याज्यानि ॥

अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं च (ऊ० ९. २. ३) । परीतो षिञ्चता सुतम् (सा० १०१३-५) इति समन्तं (ऊ० ९. १. ३) च वार्कजम्भं च यदीनिधनम् (र० २. २. १०) दैर्घश्रवसं (ऊ० ५. २. ४) च बार्हदुक्थं (ऊ० ९. ३. ७) वा । यौधाजयम् (ऊ० ७. २. ५) । अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

समन्तं प्रथमायाम् । यौधाजयमध्यास्यायाम् । ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । इन्द्र क्रतुं न आ भरे (सा० १४५६-७)ति श्यैतं (ऊ० ९. १. १९) स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रमौक्षे (ऊ० ४. १. १०)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीविता-(ऊ० ४. १. १३): न्धीगवे (ऊ० १. १. १२)। सूर्यवतीषु कावम् (ऊ० ९.२.११) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

साकमश्वं (ऊ० १. १. १५) सौभरम् (ऊ० १. १. १६) उद्वंशीयम् (ऊ० ६. १. ८) इत्युकूथानि ॥ ७ ॥

गोष्टोमस्तोमः ॥ ८ ॥

पञ्चदशं बहिष्पवमानम् । त्रिवृन्त्याज्यानि । सप्तदशं माध्यंदिनं सवनम् । एकविंशं तृतीयसवनम् । सोक्थमिति स्तोमः ॥ ८ ॥

इति गौः ॥ १० ॥

---

अथ द्वादशाहस्य दशाहानि त्रिवृदहरारभ्याविवाक्यपर्यन्तानि सत्रभूतव्यूढद्वादशाहवत् कर्तव्यानि ॥

महाव्रतम्

उपास्मै गायता नरः (सा० ६५१-३) उपोषु जातमप्तुरं (सा० १३३५-७) पवस्व वाच अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) दविद्युतत्या रुचै-(सा० ६५४-६) ते असृग्रमिन्दवो (सा० ८३०-२) यवंयवं नो अन्धसा (सा० ९७५-८) पवमानस्य ते कवे (सा० ६५७-९)॥ १ ॥

इति बहिष्पवमानम् ॥

होता देवो अमर्त्यः (सा० १४७७-९) ता नः शक्तं पार्थिवस्य (सा० १४६५-७) सुरूपकृत्नुमूतये (सा० १०८७-९) आ सुते षिञ्चत प्रियम् (सा० १४८०-२) ॥ २ ॥

इत्याज्यानि ॥

अस्मिन्नहनि सर्वेषां स्तोत्राणां पञ्चविंशस्तोमः । तस्यैवं विष्टुतिः । अष्टाभ्यो हिंकरोति । स तिसृभिः । स चतसृभिः । स एकया । अष्टाभ्यो हिंकरोति । स एकया । स तिसृभिः । स चतसृभिः । नवभ्यो हिंकरोति । स चतसृभिः । स द्वाभ्याम् । स तिसृभिः । स पञ्चभिः । स एकया । स तिसृभिरिति वा । तदुक्तं पञ्चविंशे—चतुर्विंशस्योत्तमे पर्याये परिचरायामावपेत् इति गौतमः । आवापस्थान इति धानंजय्यः (ला० श्रौ० ४. ४. १-२) इति ॥ २ ॥

अस्य प्रत्नाम् अनु द्युतम् (सा० ६५५-७) इति गायत्रं चामहीयवं (ऊ० ९. २. ३) च जराबोधीयं (ऊ० ९. ३. १०) च सत्रासाहीयं च (ऊ० ९. १. ९)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं (ऊ० ९. १. ३) च दैर्घश्रवसं (ऊ० ५. २. ४) च रौरव-(ऊ० ९. ३. ११) यौधाजये (ऊ० ७. २. ५) । अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

यौधाजयमध्यास्यायाम् । एकोऽध्यास्यायामेवान्ततः इति वचनात् ॥ ३ ॥

व्रतं पृष्ठम् ॥ ४ ॥

वक्ष्यमाणं व्रतसंज्ञं होतुः पृष्ठमित्यर्थः ॥ ४ ॥

त्रयोदश परिमादो ब्राह्मणक्लृप्ताः ॥ ५ ॥

---

5. MyBKAT पञ्चविंशति° for पञ्चविंश

17. LCV[1-2] रौरवं च श्रोणन्त इति यौधाजयम् for रौरवयौधाजये

प्राणेन पुरस्तादित्यादिब्राह्मणेन (तां०ब्रा० ५. ४. १-१३) त्रयोदश परिमात्संज्ञकानि पृष्ठाङ्गत्वेन कल्प्तानीत्यर्थः । एतेषां पृष्ठाङ्गत्वं पृष्ठस्य पञ्चविंशसंपत्तिसिद्ध्यर्थमुक्तम् । तथा चोपग्रन्थ:-शिरःपक्ष-पुच्छानां परिमाद्भिस्त्रयः पञ्चविंशा (उ०ग्र०सू० १. २) इति । तदर्थ-
5 मेवैषां परिसामत्वेऽपि सकृद्गानं सूत्रे विहितम् ॥ ५ ॥

इन्द्रमिद्गाथिनो बृहत् (सा० ७९६-८) इन्द्रो दधीचो अस्थभिर् (सा० ९१३-५) उदु्घेदभि श्रुतामघम् (सा० ८००-२) इति त्रिवृच्छिरो गायत्रम् । पञ्चदशं रथन्तरं (सा० ६८०-१ ; (र० १. १. १) दक्षिणः पक्षः । सप्तदशं बृहद् (सा० ८०९-
10 १० ; र० १. १. ५) उत्तरः । एकविंशं भद्रं (सा० १११०-२ ; र० १. १. २०) पुच्छम् । तदिदास भुवनेषु ज्येष्ठम् (सा० १४८३-५) इति पञ्चविंश आत्मा राजनम् (र० २.२.११) ॥६॥

इति । व्रतसंज्ञकं पृष्ठमुक्तम् । पृष्ठहोमे महाव्रतं पिबतु सोम्यम् इति विशेषः । महाव्रतमिति व्रत इति वचनात् । गायत्ररथन्तर-
15 बृहद्राजनानि पिबतु सोम्यं मध्वायुर्दधन्ति यज्ञपताविति वा । यावन्ति पृष्ठस्थानि स्युः सर्वाण्येव प्रसंचक्षीत । पिबतु दधादिति च यथार्थमूहेदिति वचनात् । पूर्वं तु गौतमीयं मतम् । इन्द्रमिद्गाथिन इति तृचत्रयम् , रथन्तरबृहद्भद्राणां तृचत्रयम् , तदिदासेति तृचं
19 सदस्येव जपेयुः । अथवा तानि तत्तत्स्तोत्रदेश एव जपेयुः ।

---

1. T. after त्रयोदश ins. सामानि
3. MyBKA after पञ्चविंश ins. स्तोम
13. MyBKA TV[2] व्रतसंज्ञं, V[1] ब्रह्मसंज्ञं for व्रतसंज्ञकं ; MyBKA पृष्ठहोत्रं महाव्रतं पिबतु सोम्यमिति पृष्ठहोमविशेषः for पृष्ठहोमे ··· विशेषः
15. MyBKAT after बृहद् ins. भद्र
16. V[1-2]T पृष्ठस्थानानि for पृष्ठस्थानि ; MyBKA. Om. च
18. V[1] तृचास्त्रयः for तृचत्रयम् ; CV[1-2] तृचं for तृचत्रयं
19. V[1-2]C MyBKAT. Om. तानि ; CMyBAK. Om. तत्

अङ्गानां मुख्यदेशत्वात्। बृहद्रथन्तरयोस्तु ऋक्जपानन्तरं यथायोगं दशव्याहृतिजपो यस्ते गोष्विति जपश्च कार्यः। व्यैति वै खलु गायत्रं बृहद्रथन्तरयोर्जपान्त्रते (उ०प्र०सू० ३.५) इत्युपग्रन्थवचनात्। अथोपाकृते पृष्ठे युक्त्वा स्तोमं परिमादो गायेदिति भाडितायनो मन्यते। ऋग्जपं कृत्वा प्रतिगृह्य तृणे अयुक्त्वेति गौतमशाण्डिल्यौ 5
धानंजय्यश्च। ऋग्जपं कृत्वा प्रागेव स्तोत्रोपकरणादित्येके। पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रीयं महाग्निचयनमुत्तरेण गत्वा प्राणप्रभृतिभिरुपतिष्ठेरन्। सर्वाणि सामान्युद्गाता सकृत् सकृत् गायेत्। निधनं प्रस्तोतृप्रतिहर्तारावनूपेयाताम्। मध्येनिधनेष्वपि सामसु मध्येनिधनान्यनूपेयाताम्। आद्यन्तस्तुब्धेषु परिमात्सु पदाय 10
पदाय स्तोभेत्। अग्निचयनस्य पुरस्तात् प्रत्यङ्मुखास्तिष्ठन्तः प्राणेन साम्नाहवनीयमुपतिष्ठेरन्। तस्य वसिष्ठस्त्रिष्टुबिन्द्र इति ऋषयः। हाउहाउहाउ श्वासं कृत्वा आयुः सत्यमित्यादिस्तोभान् पदाय पदाय ब्रूयात्। तेनैव पथा प्रत्यावृज्य पुच्छस्य पश्चात् तिष्ठन्तोऽपानेन साम्ना पुच्छमुपतिष्ठेरन्। वसिष्ठस्त्रिष्टुबिन्द्रः। 15
हाउहाउहाउ निरुच्छ्वासं कृत्वा आ नो आयाहीत्येत्यादि पदाय पदाय स्तोभेत्। हाउ ३। हिं हिं हिं। इहा। हिं इति व्रतपक्षयोः पूर्वेण 17

---

2. MyBKA. Om. कार्यः

3. MyBAK जपा घृते, T. जपाव्रते for जपान्त्रते

4 MyBK. Om भाडितायनो मन्यते। ऋग्जपं कृत्वा ··· अमुक्त्वेति

5. CV[1-3] after तृणे ins. स्तोमम् ; CV[1-2] after अयुक्त्वा ins. परिमादो गायेत्

9. V[1] om. मध्ये ··· अनूपेयाताम्

10. V[1-2] परिमासु for परिमात्सु

12. MyBAK. Om. तस्य ··· दक्षिणं पक्षमुपतिष्ठेरन् (L. 15) ; T. Om. तस्य ··· ब्रूयात् (L. 14) ; T. before वसिष्ठः ins. तयोः

13. C. after श्वासं ins. समिरामं त्रिः

16. V[1] त्रिरुच्छ्वासं for निरुच्छ्वासं ; C. after निरुच्छ्वासं ins. त्रिः

17. T. कहिक इहा, V[1] हाउ३हिंहिं हाउ इहा for हाउ३हिं हिं हिं३हा

साम्ना दक्षिणं पक्षमुपतिष्ठेरन् । उत्तरेण साम्नोत्तरम् । प्रजापति-
स्त्रिष्टुबिन्द्रः । पदाय पदाय स्तोभेत् । प्राङ्मुखा एव प्रजापतेर्हृदयेनापि
कक्षमुपतिष्ठेरन् । पश्चिमेन पक्षावपि कक्षावित्युक्तम् । तस्य ऋषिः
प्रजापतिः । देवता च । छन्दो नास्ति । एहृदयमिति निरुक्तमन्त-
5 र्निधनम् । प्रजारूपमित्यादि निधनम् । विश्वे देवा इति वासिष्ठस्य
निहवेन चात्वालमुपतिष्ठेरन् । वसिष्ठो जगती विश्वेदेवाः । आइही-
त्यादि पदाय पदाय स्तोभेत् । चात्वालमुपस्थायोत्तरेणाग्नीध्रीयं गत्वा
तस्य पश्चात् प्राङ्मुखास्तिष्ठन्तोऽपि चात्वालस्थानस्था एव प्रत्यङ्मुखाः
सत्रस्यर्ध्याग्नीध्रीयमुपतिष्ठेरन् । तस्य ऋषयो देवताश्च विश्वेदेवाः । अगन्म
10 ज्योतिरित्यादिभ्यो देवतापदेभ्यः प्रत्येकम् औहोवेति स्तोभेत् । तेषां
पदवत्प्रवृत्तेः । अगन्म ज्योतिः । अमृता अभूम । अन्तरिक्षं
पृथिव्या अध्यारुहाम । दिवमन्तरिक्षादध्यारुहाम । अविदाम देवान् ।
समु देवैरगन्महि । सुवर्ज्योतिरिति निधनानि । तस्योत्तमं निधनं
यावदुच्छ्वासं ब्रूयुः । हाउ स्वरता ब्रह्माण इन्द्रमिति श्लोकेन साम्ना
15 हविर्धाने उपतिष्ठेरन् । पुरस्तात् प्रत्यङ्मुखाः । हाउ अभिस्वरतेति
अनुश्लोकेन च पश्चात् प्राङ्मुखाः । तयोः प्रजापतिः ऋषिः ।
द्विपदादित्रिष्टुप् छन्दः । इन्द्रो देवता । तत एवेक्षमाणा औहोइनाके
सुपर्णमिति यामेन छन्द्वेष्वधीयमानेन मार्जालीयमुपतिष्ठेरन् । यम
ऋषिः । त्रिष्टुप् छन्दः । सुपर्णवरुणयमा देवताः । आयुर्नवस्तोभयोः
20 पूर्वेण साम्ना उपतिष्ठेरन् । पुरस्तात् प्रत्यङ्मुखाः । उत्तरेण पश्चात्

---

5. MyBKAT. Om. प्रजारूपमित्यादि निधनम्

9. L. after विश्वेदेवाः ins. जगती

11. MyBAK. Om. अगन्म ··· प्रवृत्तेः

13. CTLV[1-2] स्वर् for सुवर्

14. LV[2] ब्रह्माणा, T ब्राह्मणम् for ब्रह्माण

17. BMyTKA द्विपदा for द्विपदादि ; BMyKA. Om. छन्दः

18. BMyKA. Om. यामेन

प्राङ्मुखाः उपतिष्ठेरन् । हाउहाउहाउवा । विश्वतो दावन्नित्यायुर्नवस्तोभे ।
प्रजापतिर्द्विपदा विष्टारपङ्क्तिरिन्द्रः । तयोरन्तर्निधनान्युक्तानि ।
अन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तः ऋश्यस्य साम्ना गार्हपत्यमुपतिष्ठेरन् ।
तस्यैव पश्चात् प्राङ्मुखा वा । गार्हपत्यः शालामुखीयः । हरी त इन्द्र
इति ऋश्यस्य साम्नः कश्यपोऽनुष्टुबिन्द्रः । ऋष्यास इन्द्रेत्यादि 5
निधनम् । अत्र सूत्रम्—इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः (ला० श्रौ०
३.९.२२) इति इन्द्र तसरपूतेति संबुद्ध्य तं ब्रूयुरित्यर्थः । निदानं तु
ह्रस्वं प्रत्यक्षं द्राघितं परोक्षम् (नि० सू० ६. ७) इत्यादि । एवं
परिसाङ्क्षिश्चरित्वा राजानं संनाहयेयुः । चर्मप्रतिमोकव्यतिरिक्तं
खड्गधनुरादिबन्धनं कारयेदुद्गाता । तस्य राज्ञो द्व्यवराध्यौं द्वौ 10
रथावनुयायिनौ स्याताम् । राज्ञोऽन्ये पूर्वेण देवयजनं संनह्येरन् ।
राजा च सचिवाश्च दक्षिणेन देवयजनं परीयुः । पूर्वेण
पत्नीशालामुद्गाता गत्वा दक्षिणे वेद्यन्ते प्राचो दर्भान् संस्तीर्य
तेष्वेनं प्राङ्मुखमुपवेशयेत् । अथास्मै कवचं प्रतिमुञ्चेत् । उत्तिष्ठ
राजन्निति गोप्तेत्यन्तेनान्यस्मिन् वा प्रतिमुञ्चति । राजान- 15
मनुमन्त्रयेतानेन मन्त्रेण । अथोद्गाता पश्चिमेन पर्याहीत्युक्तो राजा
सचिवैः सह देवयजनस्य पश्चिमेन प्रदक्षिणं परिगच्छेत् ।
उद्गाता पूर्वेण पत्नीशालां प्रत्याव्रज्योत्तरस्मिन् वेद्यन्ते पूर्वेणाग्नीध्रीयं
राजानमवस्थाप्य ब्रूयात् । हस्तत्रमित्यादि चतुर्थमित्यन्तम् ।
तस्यार्थः । हस्तत्राणं चर्म हस्ते बधान । उद्गतज्यं धनुः कुरु । 20

---

1. TMyB °स्तोभयोः, MyK °स्तोभो, A °स्तोभा for °स्तोभे
6. L. gives in the margin परोक्ष्यं as a variant for प्रत्यक्षं
7. V[1-2]. Om. निदानं तु ; L. निधनं for निदानं
12. LC. परियायुः, V[1]. परीययुः V[2]. पर्ययुः for परीयुः
19. LCV[2]. °त्रयम्, T °त्राणम् T. °त्रम्
20. T. उद्गताज्यं, LC. उज्यं for उद्गतज्यं

श्रीनिषूनयोमयानुपकल्पयस्व । चतुर्थमिषुं यमेव कंचनानियमेन कल्पयस्वेति प्रतिधत्स्व काण्डधनुषीति ब्रूयात् । प्रतिद्धानं राजानमनुमन्त्रयेत वैणावतायेति धारयात्रेत्यन्तेन । सहला तिष्ठेति च ब्रूयात् । राजा च धनुषः काण्डमनुपनीयानुयायिनामन्यतमं
5 रथमातिष्ठेत् । यजमानपरिचारका उत्तरेणाग्नीध्रीयं पूर्वापरे चर्मणी विबध्नीयुः । दक्षिणेन रथपथं शिष्ट्वा । अथोद्गाता राजानं ब्रूयात् । प्रदक्षिणं देवयजनं परीयादित्यादि विस्रम्भयेयुरित्यन्तम् । तस्यार्थः । देवयजनं प्रदक्षिणं परिगच्छन्नेव चर्मणोः पूर्वं चर्मागमनेषु विध्येत् । कथमेकैकेनायोमयेनेषुणोत्तरोत्तरम् प्रथमस्योपरि द्वितीयम्
10 तस्योपरि तृतीयम् अनतिपातयन् अतिशयपतनमकुर्वन् अपरस्मै चर्मणे सचिवाय यथासौकर्यमस्येयुः । तृतीयेनेषुणा विध्योदङ् प्रयायाः सचिवैः सह । तथा चतुर्थमिषुं यां दिशं मन्येथास्तां प्रत्यस्येरव ब्रह्मद्विषो जहीति । गां दृष्ट्वा अवतिष्ठेथाः । तत्र क्वापि गतः संनाहं कुर्युरिति । ततोऽन्यं ब्राह्मणं प्रतिप्रदक्षिणं
15 देवयजनं परीयादित्यादि प्रैषार्थः । हिंकारवेलायामिमं राजानं कारयेत्युक्त्वा उद्गाता भूमिदुन्दुभिमाव्रजेत् । पश्चादाग्नीध्रीयस्य श्वभ्रं

---

1. $V^{1-2}$LC. अनुकल्पयस्व for उपकल्पयस्व ; T. नियमेन, BKAMy येन केन च for यमेव कंचन

4. $V^{2}$T. उपनीय for अनुपनीय

6. $V^{1-2}$C. after दक्षिणेन ins. एव and L. एवं ; L$V^{1-2}$. तं for राजानं

8. T. चर्मण: for चर्मणोः

9. $V^{1}$ अयस्मयेन for अयोमयेन

10. MyBKA. अतिशयं कुर्वन्, T. अतिशयमकुर्वन्, $V^{1}$, अतिपतनमकुर्वन् for अतिशयपतनमकुर्वन्

12. LC$V^{1-2}$ प्रयायात् for प्रयायाः

14. L$V^{1-2}$C त्वाविगतसंनाहं, T. त्वाविगत: संनाहं MyKA. क्वापि गतः for क्वापि गतः संनाहं ; C. Om. प्रतिप्रदक्षिणं; $V^{1}$MyBAKT. प्रदक्षिणं, $V^{2}$ प्रतिदक्षिणं for प्रतिप्रदक्षिणं ; MyBKA. पर्यीहि for परीयात्

16. MyBKA$V^{1-2}$C. Om. उद्गाता

दुन्दुभ्याकृतिकमर्धमन्तर्वेदि अर्धं बहिर्वेदि खातं भवति । स भूमिदुन्दुभिः आर्षभेणोत्तरलोम्ना चर्मणा आच्छादितः स्यात् । तं च त्वं वागसीत्यादिभिस्त्रिभिः मन्त्रैः प्रतिमन्त्रमुद्गातारो वलधानेनाहन्युः । अन्यं वा घ्नन्तमेतैर्मन्त्रैरनुमन्त्रयेरन् । ऐकाहिकव्रते आहीनिकव्रते च त्वं वागसीत्यादिमन्त्रे सत्रशब्दस्थाने यज्ञशब्दः प्रयोक्तव्यः । 5 यज्ञे अनन्दिषुरिति अनुमन्त्र्याप उपस्पृश्य यथैतं प्रत्यावृज्य पश्चात्तिष्ठन्तश्चित्यमग्निमुपतिष्ठेरन् । नमस्ते गायत्र्यादिना शिरः ; नमस्ते रथन्तरायेति दक्षिणं पक्षम् , नमस्ते यज्ञायज्ञीयायेत्यादिना पुच्छम् , नमस्ते वामदेव्यायेत्यादिना मध्यम् उपतिष्ठेरन् । ब्राह्मणे पक्षान्तरत्वेन यज्ञायज्ञीयं पुच्छं वामदेव्यं चात्मा विहितमिति 10 तल्लिङ्गाभ्यां मन्त्राभ्यां पुच्छमध्ययोरुपस्थानम् । सूत्रकारेणोक्तम्—यदा तु भद्रराजने पुच्छात्मने तदा नमस्ते भद्रायेति पुच्छं नमस्ते राजनायेति मध्यं चोपतिष्ठेरन् । अथ सर्वमग्निं नमस्ते गायत्रायेत्यादि मध्यमित्यन्तम । तेन समस्तेन मन्त्रेण तस्मै त इति धेहीत्यन्तेनोपस्थाय सदः प्रविशेयुः । तत्र सर्वे सहर्त्विजो 15 महाव्रतेन स्तुवीरन् इति ब्राह्मणेनोक्ते विहृत्य स्तवनपक्षे अग्न्युपस्थानानन्तरमेव सदःप्रवेशः । तस्मिन् हि पक्षे सदस्येव शिरःप्रभृतिभिः सर्वैः स्तवनम् । उद्गातैव सर्वेणोद्गायेदित्यस्मिंस्तु पक्षे हविर्धाने शिरसा स्तुत्वेत्यादिक्रमेण सदः प्रविशेयुः । तत्रायं प्रयोगः । शिरःपक्षपुच्छानां भेदेन कुशाविधानम् । कुशाविधान- 20 वसनानि च भिन्नानि भिन्नानि । अग्न्युपस्थानं कृत्वा हविर्धानस्य पूर्वया द्वारा प्रपद्य हविर्धानमध्ये सोमपात्राणामुत्तरतः इन्द्रमिद्गाथिनो बृहद् इन्द्रो दधीचो अस्थभिर्-उद्धेदभि श्रुतामघम्—इति 23

---

6. My य एतं, KA. ययेतं, V[1]TB. यथेतं for यथैतं

12. T. पुच्छात्मनो, BMyK. पुच्छात्माने for पुच्छात्मने

15. V[1] महर्त्विजो for सहर्त्विजो

16. V[1-2]. after इति ins. आदि

22. L. after उत्तरतः ins. स्तोत्रवत् उपविश्य

गायत्रेणानिरुक्तेन त्रिवृत्स्तोमेन स्तुवीरन् । इन्द्रमिद्गा-चतुर्ऋचे अन्त्याया उद्धारः । संधिषामवत्परिवर्तिन्या विष्टुत्या कुशाविधानम् । गायत्रादीनां शिरःप्रभृतिसंज्ञया पक्षिरूपं वर्णयति श्रुतिः । शिरः-संज्ञकस्य गायत्रस्य पुष्कलो गायत्रीन्द्र इत्यृष्यादयः । यजमान-
5 वाचनम् । अच्छिद्रजपाश्च राजनेन स्तुते सर्वेषां तन्त्रेण कर्तव्यम् । न तु तत्तत्स्त्युत्यनन्तरम् । एवं हविर्धाने शिरसा स्तुत्वा संरब्धाः प्रत्यञ्च एयुरपरया द्वारा । ते दक्षिणेन मार्जालीयधिष्ण्यं परीत्य पश्चान्मैत्रावरुणधिष्ण्यस्योपविश्य रथन्तरेण पञ्चदशेन स्तुवीरन् । स्तुत्वा वरचोदना । तथा चोपग्रन्थः—
10 अकेवलस्तोत्रे वै खलु बृहद्रथन्तरे व्रते धर्माल्लभेते-(उ० प्र० सू० ३. ५)तेति उदञ्चः सर्पेयुर्जघनेन होतुर्धिष्ण्यम् पश्चाद्ब्राह्मणाच्छंसिनो धिष्ण्यस्योपविश्य बृहता सप्तदशेन स्तुवीरन् । ते येनैव प्रसर्पेयुस्तेन पुनः निःसृप्य हविर्धानस्य पूर्वया द्वारा निष्क्रम्योत्तरेणा-ग्नीध्रीयं परीत्य पश्चाद्गार्हपत्यस्योपविश्य पुच्छेनैकविंशेन स्तुवीरन् ।
15 एकविंशं भद्रं पुच्छमिति । भद्रेण स्तवनम् । ते येनैव निःसर्पेयुः तेन पुनः प्रसृप्योत्तरेणाग्नीध्रीयं परीत्य हविर्धानस्य पूर्वया द्वारा
1 प्रपद्य संरब्धाः प्रत्यञ्च एयुः । ते दक्षिणेन धिष्ण्यान् परीत्य

---

3. T. संज्ञायाः for संज्ञया ; MyBKA. °रूपायति for °रूपं वर्णयति

4. V[1]. before यजमान ins. अत्र

5. MyBKA. °जपश्च° for जपाश्च

6. TL. तत्र तत्र for तत्तत्

7. MyBKA. ईयुः for एयुः

10. MyBKA लभते for लभेत ; MyBK व्रतै [ र ], L. व्रत° for व्रते; T. धर्म ल° for धर्माल्ल°

12. MyBKA. Om. बृहता ... गार्हपत्यस्योपविश्य (L. 14)

13. MyBKA. निःसर्पेयुः for प्रसर्पेयुः ; MyBKA प्रसृप्य for निःसृप्य

16. V[1-2]BTKA. after तेन add : पथा

17. C. प्रविश्य for प्रपद्य ; MyBKAT T. ईयुः for एयुः, L. प्रत्येयुः, C. प्रत्येवायुः for प्रत्यञ्च एयुः

पश्चान्मैत्रावरुणस्य धिष्ण्यं गत्वा यथायातमुपविशेयुः । अथापरया द्वारौदुम्बरीमासन्दीं मौञ्जेन पूर्वं कृतबन्धनां सदसि प्रविशेयुः यजमानपरिचारकाः । उदुम्बराभावे यज्ञियस्य वृक्षस्य पलाशव्यतिरिक्तस्यासन्दी कर्तव्या । मुञ्जाभावे दर्भरशनया वा बन्धनं कर्तव्यम् । आसन्द्याः प्रादेशमात्राः पादाः कार्याः । अरत्निमात्राणीतराण्यङ्गानि । एवंभूतामासन्दीं दक्षिणेनौदुम्बरीं हृत्वा तस्या उत्तरतो निदध्युः । तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पृशोऽस्याः पादान् कृत्वा कूर्चावधस्तादुपोह्याभिमृशेत् । बृहद्रथन्तरे ते पूर्वौ पादाविति पूर्वपादद्वयम् । श्यैतनौधसे अपरौ । वैरूपवैराजे अनूची इति प्राचीनफलकद्वयम् । शाक्वररैवते तिरश्ची इत्युदीचीनफलकद्वयम् । एवं पृथगङ्गान्यभिमृश्य विवयनं मौञ्जरज्जुभिर्बन्धनम् । आलभ्य जपेदृचः । प्राञ्च आ ता ना इति यज्ञायज्ञीयमित्यन्तम् । तत्र विवयनानां यथालिङ्गमालम्भः कार्यः । तामासन्दीमुखेनोरसा वाहुभ्यां च स्पृष्ट्वारोहेत् । वसवस्त्वेत्यादिभिश्चतुर्भिर्मन्त्रैः साम्राज्यायेत्यन्तैरारोहणम् । आरुह्य जपेत् । स्योनामासदं सुखदामासदं नमस्तेऽस्तु मा मा हिंसीरिति । एवमारोहत्युद्गातरि प्रस्तोतृप्रतिहर्तारौ ब्रह्मा च गृहपतिश्चाहीनपक्षे सत्रे सर्वे कूर्चानारोहेयुः । आसन्द्या व्याख्यातं द्रव्यं वाणस्य । वाणशब्देन वीणाविशेष उच्यते । स उदुम्बरस्य यज्ञियवृक्षस्य वा कर्तव्यः । तस्य

---

1. My. Om. धिष्ण्यं···यज्ञियस्य वृक्षस्य (L. 3)
4. MyBKAT दार्भं, CV[1-2] दर्भाङ्क for दर्भरशनया वा
8. T. कूर्चान् for कूर्चौ°
10. MyBAK. तिरश्चीन इति for तिरश्ची इति
11. MyBKA विवायनं मौञ्जी° for विवयनं मौञ्ज°
12. LV[2]C. यज्ञीयम् for यज्ञायज्ञीयम्
19. MyBT. V[1]. Om. सः; V[1] औदुम्बरस्य for उदुम्बरस्य; MyBKA. यज्ञवृक्षस्य for यज्ञियवृक्षस्य

दण्डस्याधस्ताद्भागे परिमण्डलाकारं दण्डपरिमाणात् स्थविष्ठं वक्ररूपं
बिलं भवति । तस्मिन् प्रदेशे लोहितेनानडुहेनोत्तरलोम्ना चर्मणा
प्रच्छादितो भवति वाणः । तस्योपरि भागे दश छिद्राणि
भवन्ति । तेषूपर्युपरि दश तन्त्र्यो बद्धाः स्युः मौञ्ज्यो दार्भ्यो
5 वा । यद्वा । दशानामपि छिद्राणां मध्ये शततन्त्र्यो बद्धाः स्युः ।
कथम् । चतुस्त्रिंशन्मध्यमे । त्रयस्त्रिंशावभितः । तदग्रे त्वेकैकशो
बन्धनं कर्तव्यम् । तास्त्रैधं विभज्य भूर्भुवःस्वरित्येकैकया
व्याहृत्योत्तरोत्तरयोदूहेत् । भूरिति त्रयस्त्रिंशतमुदूहेत् । भुवरिति
चतुस्त्रिंशतमुदूहेत् । स्वरिति त्रयस्त्रिंशतमुदूहेत् । एतच्चोदूहनं
10 पक्षद्वयेऽपि कार्यम् । तं वाणमभिमृशेत् । वदोवदेति वाणेत्यन्तेन ।
शिथिलांस्तन्तूनायच्छेत् । एभिर्नो वाणेत्यशीमहीत्यन्तेन । वाक् सर्वं
मनो ज्योतिर्मनो भद्र इति जपित्वा वाणमिन्द्रणतये-
षिकया वेतसशाखया च सपलाशया मूलदेशे वादयेत् । या स्वयं
वक्रा सेन्द्रणता । प्राणाय त्वेत्यूर्ध्वमुल्लिखेत् । अपानाय त्वे-
15 त्यवाञ्चमवलिखेत् । व्यानाय त्वा व्यानाय त्वेति त्रिःसंलिख्योदञ्चं
वाणं प्रोहेत् । इमं वाणमुल्लिखन्नास्वेति ब्राह्मणमुक्त्वा आहत-
दुन्दुभीन् प्रवदन्तु । वीणा इति ब्रूयात् । अलाबुवीणां वक्राकपि-
18 शीर्ष्ण्यौ च पूर्वस्यां द्वारि बहिस्सदसं वीणावादिनो वादयेयुः ।

---

1. $V^2$. स्थविष्ठ for स्थविष्ठं; $V^2$. चक्र for वक्र
3. MyBKA. वाणा, $V^{1-2}$. वाणं for वाणः
8. LCMyBKA. उत्तरोत्तरि for उत्तरोत्तरया
10. T. ततं for तं
12. $V^1$. इन्द्रण्यतया, $V^2$ इन्द्रसातया, MyBKA. इन्द्र तया for इन्द्रणतया (could it be इन्द्रेण नतया ?)
13. MyBKA धू for या
15. $V^2$C. Om. अपानाय त्वेत्यवाञ्चमवलिखेत् ; L. after अवाञ्चम् ins. प्रतिलोमम् ; L. उल्लिखेत् for अवलिखेत् ; $V^1$. Om' अवलिखेत्
16. LC$V^2$ प्रवाहयेत् for प्रोहेत् ; L. in the margin : प्रोहेदित्यर्थः
17. B. Om. पूर्वस्यां...वक्रा कपिशीर्ष्ण्यौ (p. 151, L. 2)

अलाबुवीणा प्रसिद्धा । वक्रा सप्ततन्त्रीका वेत्रवीणेत्युच्यते ।
कपिशीर्ष्णी मर्कटशीर्ष्णी । वक्राकपिशीर्ष्ण्यौ दुन्दुभींश्च प्रतिमन्त्रयेत
यो वक्रायामित्यादि वदेत्यन्तेन । महावीणापिशीलवीणे च अपरस्यां
द्वार्यन्तर्बहिर्वा वादयेयुः । चतुर्दशतन्त्रिका अलाबुवीणा महावीणा ।
शूर्पा वीणा पिशीलवीणा । कृष्णतन्त्रिका कनकतन्त्रिका वा । 5
ते च प्रतिमन्त्रयेत । अलाबवी पिशीली चेत्यादि महयिष्यत
इत्यन्तेन । पश्चिमेनोद्गातॄन् पत्न्यः एकैका द्वे द्वे वीणे काण्डवीणां
पिच्छोरवीणां च व्यत्यासं वादयेयुः । काण्डवीणा शरमयी । 8

---

1. MyKA. सप्ततन्त्रिकालरु°, T सप्ततन्त्री[ काले ] रु°, V[1] सप्ततन्त्रिका यन्त्र°, C. सप्ततन्त्रीका लेत्र° V[2]. सप्ततन्त्रिका लेत्र° for समतन्त्रीका वेत्र°

2. V[1-2] कपिशीर्ष्णिकर्मदशीर्ष्णी, T. कपिशीर्ष्णीवकर्मदशीर्ष्णी, C. कपिशीर्ष्ण्यी कर्मदशीर्ष्ण्यी, MyKA कपिशीर्ष्णा कर्मदशीर्ष्णा for कपिशीर्ष्णी मर्कट-शीर्ष्णी

3. C. V[1-2]. Om. यो वक्रायाम्......ताश्च प्रतिमन्त्रयेत (p. 152, L. 2) My BKA. °वीणा for °वीणे; L. Om. च

4. L. Om. वादयेयुः; MyKATB महावीणा भ्रमरी (T. भ्रामरी) चतुर्दश-तन्त्रिका for चतुर्दश... ...महावीणा

5. MyBTKA. Om. शूर्पा वीणा ; L. Om. कृष्णतन्त्रिका कनकतन्त्रिका वा ; MyBKA कृत° for कृष्ण°

6. MyBKAT. अलाबुवीणापिशीलवीणे for ते; MyKA. Om. मन्त्रयेत। ...पिच्छोरां (p. 152, L. 1) ; BT. अलाबवीति for अलाबवी पिशीली चेत्यादि

7. BT. द्वे द्वे वीणा काण्डवीणां पिच्छोरां (पिच्छोराणां B) च व्यत्यासमेकैका पत्नी वादयेत् for पत्न्यः......वादयेयुः

8. MyBKA पिच्छोराणां for पिच्छोरवीणां ; MyBTKA. प्रसिद्धा for शरमयी

पिच्छोरा वैणवी । मयूरपुच्छमयी वा । काण्डमयीवादनेन पिच्छोरा-
मुपमुखं वादयेत् । अनयोरपघाटिलेति संज्ञा । ताञ्च प्रतिमन्त्रयेत ।
यां पत्न्यपघाटिलामिति त्वगित्यन्तेन सर्वमनुवीक्षमाणो जपेत् ।
आक्रन्द्य उलूलय इति गीयत इत्यन्तेन । अथ जपेदुद्गाता सुपर्णो-
5 ऽसीति यजमानानित्यन्तम् । एकयजमानके स्वर्गमयिष्यन्निमं
यजमानमित्यूहः कार्यः । ब्राह्मणः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुख
उपविशेत् । सोऽभिगर इत्युच्यते । वृषलोऽपरस्यां द्वारि प्राङ्मुख
उपविशेत् । सोऽपगरः । स शूद्रो ब्रूयान्नारात्सुरिमे सत्रिण इति ।
अरात्सुरित्यभिगरो ब्रूयात् । एकाहेऽहीने च नारात्सीदयं यजमान
10 इत्यपगरः । अरात्सीदित्यभिगरः । दक्षिणेन मार्जालीयं
वैश्योऽन्तर्वेदि दक्षिणामुखस्तिष्ठेत् । बहिर्वेदि शूद्र उदङ्मुखस्तिष्ठेत्
वैश्याभावे यःकश्चार्यो वर्णः । तौ श्वेतं परिमण्डलं
चर्म प्रतिव्यायच्छेताम् । शूद्रः पूर्वो व्यायच्छेत् । आर्यः
(अर्यः?) पश्चात् । पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेत् ।
15 बहिर्वेदि पुंश्चली व्यभिचारिणी स्त्री दक्षिणामुखी तिष्ठेत् । सा
ब्रह्मचारिणं ब्रूयात् । दुश्चरितिन्नवकीर्णिन्निति । ब्रह्मचारी च तां
प्रतिब्रूयात् । धिक्त्वा जाल्मीति शिश्नप्राणे जनीत्यन्तम् । पुनः
18 पुंश्चली पूर्ववत् । ब्रह्मचारी च । पुनः पुंश्चली पूर्ववत् ।

---

1. MyBKA. वेणुकीका वेणुमयी (KMy. वेणुमधि) for वैणवी ; MyBTKA Om. मयूरपुच्छमयी वा ; BMyKAT. Om. काण्डमयीवादनेन and Transp. पिच्छोरां after उपमुखं
2. L. Om. वादयेत् My BKAT. वादनेन काण्डमयीम् । ता अप (T. तामप) घाटिला इत्याचक्षते । तं पत्न्योप- (BMyKA. पत्न्य उप-) घाटिलाभिरुपगायन्तीति श्रुतेः, for अनयोरपघाटिलेति संज्ञा
4. My BKAT. इत्यन्तं for इत्यन्तेन and om. अथ
6. LC. after ब्राह्मणः ins. अभिगरः
7. LV[1]. after वृषलः ins. अपगरः
8. V[1-2]. ब्रूयात् अरात्सु° for ब्रूयान्नारात्सु°
9. LC My BKA Om. न
11. K. Om. शूद्रः······बहिर्वेदि (L. 15)
15. LC. दुश्चरितन्, V[1-3] T दुश्चिरिन् for दुश्चारतिन्

ब्रह्मचारी च। सर्वेषामभिगरापगरादीनां कर्मणि निष्ठिते अभिगरो-
ऽरात्सुरिमे सत्रिण इति ब्रूयात्। एकयजमाने त्वरात्सीदयं
यजमान इति चर्ममण्डलं मुक्त्वा शूद्रः प्रद्रवेत्। तं तेनैव
चर्मणा वैश्यस्ताडयेत्। यथाकामं पुंश्चलीं ब्रह्मचारी परुषं वदेत्।
पश्चिमेनाग्निध्रीयं बहिर्वेदि परिश्रिते मिथुनौ संभवेताम्। यौ 5
वर्णौ लभेरन्। संभवो मैथुनम्। गृहपतेर्दास्योऽभीष्टा वा स्त्रियः
पञ्चावराध्यार्ः पञ्चशतं पराध्यार्ः पञ्चविंशतिर्वा नवान् कुम्भानुदकैः
पूरयित्वा प्रदक्षिणं मार्जालीयं परीयुः हैमहा इदं मध्विदं मध्विति
वदन्त्यः। ताभ्योऽपि वीणा वादयेयुः। सदसो व्यतिरिक्तासु
सर्वासु स्रक्तिषु दुन्दुभीनावध्नीयुः। वेदवेदाङ्गेतिहासपुराणादिवाचो 10
लौकिकानि वाद्यादिघोषांश्च यथालाभमुत्तरोत्तरि व्याहरेयुः।
राजनस्य हिंकारं प्रति अभिगरप्रभृतयः स्वं स्वं कर्म कृत्वा
गच्छेयुः। ब्राह्मणमुक्त्वेमं हिंकारवेलायां कारयेदित्युक्तम् देवयजन-
प्रदक्षिणादिगोदर्शनान्तं हिंकारवेलायां कुर्यात्। आ स्तोत्रान्तात्
कुम्भिन्यः सर्वे च घोषा वीणादयो वर्तन्ते। अथ राजनव्रतम्। 15
पञ्चविंशस्तोमः। पञ्चविंश आत्मा राजनमिति वचनात्। राजनं 16

---

5. $V^{1-2}$ संभवेयातां, C. संभवे तौ for संभवेताम्

6. MyBKA after वर्णौ ins. न; MyBKA. अपीष्टाः, T $V^{1-2}$ अधीष्टाः, C. अधीष्ठाः for अभीष्टाः, B. Cm. वा

9. B. वदन्त्याभ्योऽपि, MyKA. वदन्त्यान्नाभ्योऽपि for वदन्त्यः। ताभ्योऽपि; B.MyKA. सदसोऽव्यतिरिक्तासु सर्वासु सृक्तिषु for सदसो व्यति…… स्रक्तिषु

11. L. Corrects उत्तरोत्तरं

13. L. before देव ins. यत्तत्

15. B MyKATC$V^{1-2}$. Om. अथ राजनव्रतम्। पञ्चविंशस्तोमः

16. C T. राजानमिति for राजनमिति; T MyBKA. राजान for राजनं

पञ्चविंशं विदुः। इन्द्रस्त्रिष्टुबिन्द्रः। भक्तथ उक्ताः। उत्तमायां स्तोत्रीयायां प्रस्तुतायां पादौ प्रसारयेत्। निधनवेलायां भूमौ प्रतिष्ठापयेत्। यजमानवचनात् ऋग्जपान्तं कृत्वा आह्रियमाणे भक्षे प्रतिलोमैरारोहणीयैर्मन्त्रैरवरोहयेत्। विश्वे त्वा देवा आनुष्टुभेन
5 छन्दसावरोहन्तु। तानन्ववरोहामि साम्राज्यायेति प्रथमो मन्त्रः। आदित्यास्त्वा जागतेन छन्दसावरोहन्तु तानन्ववरोहामि स्वाराज्यायेति द्वितीयः। रुद्रास्त्वा त्रैष्टुभेन वैराज्यायेति तृतीयः। वसवस्त्वा गायत्रेण राज्यायेति चतुर्थः। एतैश्चतुर्भिरवरुह्य जपेत्। मही द्यौरिति भरीमभिरित्यन्तम्। अतिग्राह्याणां भक्षणम् त्रिष्टुप्-
10 छन्दसा पूर्वं चमसेभ्यः। अथ नाराशंसभक्षणम्॥ ६॥

व्रतसंज्ञकात् पृष्ठादन्येषां स्तोमक्लृप्तिमाह—

पञ्चविंशमितरत् सर्वम्॥ ७॥

इति॥ ७॥

वामदेव्यं (ऊ० १. १. ५) मैत्रावरुणसाम त्रिककुकेषु महिषो
15 यवाशिरम् (सा० १४८६-८) इति पञ्चनिधनं वामदेव्यं (र० २. २. १२) ब्रह्मसाम (र० २. २. १२) स्वासु कालेयम् (ऊ० १. १. ७)॥ ८॥

इति पृष्ठानि॥

अथ आसीना वामदेव्यादिभिः स्तुवीरन्। वामदेवो-
20 ऽतिच्छन्दा इन्द्रः॥ ८॥

---

1. BMyKATV[1-2]. कर्तव्यम् for विदुः
2. BMyKA. Om. पादौ प्रसारयेत्। निधनवेलायां
3. LV[1-2]C वचनादि for °वचनात्; MyBKACV[1-2]. Om. कृत्वा LV[2]. आह्लीयमाणे. C. आहूयमाणे for आह्रियमाणे, T. आह्रियमाणपक्षे, MyBKA. प्रीयमाणपक्षे for आह्रियमाणे भक्षे
9. LC. °मभीत्यन्तं, V[2] °महीत्यन्तम् for °मभिरित्यन्तम्
11. V[1-2] C. °संज्ञा; MyBKAT. °संज्ञात् for संज्ञकात्

**अथार्भवः—**

परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं च स्वाशिरामर्कश्च (र० २. २. १३) च। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९.१.२०)। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवितं (ऊ० ४. १. १३) च मधुश्चुन्निधनं च (ऊ० ८. २. १५) श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १.१.१२)। सूर्यवतीषु कावम् (ऊ० ९. २. ११) अन्त्यम् ॥ ९ ॥

[ इत्यार्भवः पवमानः ]

गौरीवितमेकस्याम्। आर्भवे चेदेकोऽनुष्टुभी-(ला० श्रौ० ६. ३. २५)ति वचनात्। एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यादि-(ला० श्रौ० ६.३.१२)ति च ॥ ९ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ १० ॥

इलान्दं वा। इलान्दमग्निष्टोमसाम कार्य-(तां० ब्रा० ५.३.१)मिति श्रुतेः। सतवश्यावीयानि सामानि व्रत (नि० सू० ५. १) इति निदानवचनाच्च। अग्निः सिद्धा विष्टारपङ्क्तिः अग्निरित्यृष्यादयः। भक्तयस्तु पूर्वमेवोक्ताः। आद्येनानुगानेन कुशास्तरणम्। इलान्दपक्षे अनुष्टुभि श्यावाश्वस्थाने यज्ञायज्ञीयं कार्यम्। अथ यत्रान्यदग्निष्टोमसाम भवति तद्यज्ञायज्ञीयमनुष्टुभि भवति (नि० सू० ६. ३) इति निदानम्। अग्निष्टोमान्ते स्तोमविमोचनाद्यप्सुषोमान्तम्। अत्र विश्वजित्पृष्ठ्य-दशरात्रमहाव्रतेषु अस्तूयमानमपीन्द्रक्रतुं न आभरेति ब्राह्मणाच्छंसिनानु-

---

15. MyBKA. Om. स.

17. $V^{1-2}$. अद्येऽनुगाने, MyBKA. आद्येऽनुगान्ते, T आद्येऽनुगानेन for आद्येनानुगानेन

21. $V^{3}$ L. स्त्रयमपि, $V^{1}$ स्वयमपि, T. अस्तूयमानेऽपि, C. स्तूयमपि for अस्तूयमानमपि

शंसयेत् । सर्वत्रेन्द्रक्रतुं ब्राह्मणाच्छंसिनोर्ध्वं विषुवतः प्रागतिरात्रादि-(ला० श्रौ० ३. ६. १९)ति वचनात् ॥ १० ॥

इति महाव्रतम् ॥

---

## उदयनीयः

5 अथोदयनीयातिरात्रस्य तस्य सर्वत्र सत्रस्यर्द्ध्यादि । तस्य क्लृप्तिमाह—

क्लृप्त उदयनीयोऽतिरात्रो यथा प्रायणीयो यथा प्रायणीयः ॥ १ ।

इति । तस्य स्तोमविमोकादिदधिभक्षणान्ते कृतेऽवभृथमभ्यवेयुः । तदुक्तम्—उदयनीयेऽतिरात्रे संस्थितेऽवभृतमभ्यवेयु( ला० श्रौ० ४.

10 ४. १०)रिति । उदवसनीयान्तेऽन्यानृत्विजो वृत्वा पृथक् पृष्ठ-शमनीयैर्यजेरन् । उक्तः पृष्ठशमनीयः ॥ १ ॥

इति उदयनीयः ॥ १२ ॥

इति वामनाचार्यसूनुः कुशिकान्वयसंभवो वरदराजः ।
संवत्सरकल्पव्याख्यां चक्रे सह प्रयोगेण ॥
15 गवामयनभेदा ये स्तोत्रोक्तास्तेषु केचन ।
विनियोगज्ञापनार्थमूहसाम्नामिहोदिताः ॥
ये त्वन्ये विस्तरभयादत्रास्माभिर्न दर्शिताः ।
ते सूत्र एव द्रष्टव्याः प्रीयतां पुरुषोत्तमः ॥

इति आर्षेयकल्पसूत्रव्याख्यायां श्रीवामनार्यसुतवरदराजकृतायां

20 द्वितीयोऽध्यायः ॥ २ ॥

---

5. L. सर्वं for सर्वत्र ; V[1] Om. तस्य ; MyKBAT. Om. तस्य सर्वत्र

8. V[1-2] BKAT. विमोचनादि for विमोकादि ; V[1-2] MyKBATC. भक्षान्ते for भक्षणान्ते

12. KAB Om. इति; My. Om. इति वामनाचार्यं, B. वामनार्यस्य for वामनाचार्य°

13. TMyKAB. Om. °कल्प°

16. LV[1-2] यत् for ये; L. अत्र ग्रन्थे for अत्रास्माभिः

# तृतीयोऽध्यायः

# एकाहः

अथ ये ब्राह्मणेऽध्यायैश्चतुर्भिः षोडशादिभिः ।
एकाहा विहितास्तेषां क्लृप्तिस्त्रिभिरिहोच्यते ॥ १ ॥

## ज्योतिष्टोमः 5

आरम्भकालदीक्षोपसद्दिवसदक्षिणादिकं सूत्रे उदगयनपूर्वपक्षे- (ला० श्रौ० ८. १. १)त्याद्यैः पटलैश्चतुर्भिरुक्तम् । तत्रौद्गात्रतन्त्रं प्रवक्ष्यतेऽस्माभिरत्र । न त्वन्यत् । तद्ध्यापस्तम्बाद्यैरध्वर्युप्रत्ययं कथितम् । तत्र तावत् प्रजापतिर्वा इदमेक आसीत् (तां० ब्रा० १६. १. १) इत्यनुवाकोक्तस्य ज्योतिष्टोमस्य क्लृप्तिमाह— 10

क्लृप्तो ज्योतिष्टोमः ॥ १ ॥

प्रजापतिरकामयत बहु स्यां प्रजायेति । स एतमग्निष्टोममपश्यत् (तां० ब्रा० ६. १. १) इत्यादि ब्राह्मणेन ज्योतिष्टोमोऽग्निष्टोमसंस्थः क्लृप्त इत्यर्थः । तस्यैवैकाहप्रकरणे प्रथमं संस्थात्वविधानं दक्षिणाविधानं च ब्राह्मणेन क्रियते । तदुक्तम्—शेषविधेः पुनराम्नान- 15 ( ला० श्रौ० ९. ६. २३ )मिति । तस्य च प्रयोगः प्रागेवास्माभिर्दर्शितः ॥ १ ॥

इति ज्योतिष्टोमः ॥ १ ॥

## गौः

अथैष गौर् ( तां० ब्रा० १६. २. १ ) इत्यनुवाकेन गौरुक्तः। 20
तस्य क्लृप्तिमाह— 21

6. V[1]. नात्र for तत्र; V[3] CLT. तत्रोद्गात्र° for तत्रौद्गात्र°

गौः ॥ १ ॥

वार्कजम्भस्य लोके दैर्घश्रवसम् (ऊ० ५. २. ४)। दैर्घश्रवसस्य बार्हदुकृथम् ( ऊ० ९. ३. ७ ) । स्वासु श्यैतम् ( सा० ८११-२ ; ऊ० २. १. ३ ) । गौरीवितस्य श्यावाश्वम् (ऊ० १. 5 १. ११) । उद्वंशीयस्य नार्मेधम् (ऊ० १. १. १७) । यदि रात्रिः ॥ २ ॥

समानमितरं सांवत्सरिकेण ॥ ३ ॥

इति । गौर्गवामयने द्वितीयाध्यायोपान्त्यखण्डेन क्लृप्तः । तत्र चावृत्तस्याभिप्लवस्य यत् षष्ठमहो राथन्तरम् तस्य 10 राथन्तरेणायुषा संनिपाते जामिता स्यादिति तत्परिहारार्थमायुषो माध्यंदिने बृहन्निधनं वार्कजम्भं कल्पितम् । उक्तं हि निदाने— अथ यत्र समानसामान्ते संनिपातस्तज्जामीत्याचक्षते । यत्र वा समान-पृष्ठेऽहनी (नि० सू० १. १२) इति। तत्रैतान्यष्टौ जामिकरणानि । सौभरं प्रत्नवत्यो बृहदित्येषोऽभिव्याहारो वार्कजम्भं बृहन्निधनम् । 15 बृहन्निधनानीत्याह रथन्तरसंनिपातेष्विति च । ईनिधनं तु वार्क-जम्भम् । द्वयोः साम्नोर्विप्रयोगो मा भूदिति । आयुःसहचरस्य गोर्माध्यंदिने कृतम् । ऐकाहिके त्वायुषि जाम्यभवात् बृहन्निधनं वार्कजम्भमुद्धरिष्यत इति गोष्टोमे तत्सहचरमीनिधनमप्युद्धृत्य तस्य स्थाने दैर्घश्रवसं नित्यं कर्तव्यम् । असंचाराय च तस्य 20 बार्हदुकृथम् । इन्द्रक्रतोर्गवामयनोत्तरपक्षप्रयुक्तत्वादिह स्वासु

---

9. L $V^{1-2}$.C. Om. अभिप्लवस्य

13. MyKA. एतान् न जामि°, BL. एतान्य जामि° for एतान्यष्टौ जामि°

14. My BKA. प्रयत्नवत्यो for प्रत्नवत्यो

15. T. वार्कजम्भयोः for वार्कजम्भम्। द्वयोः

16. MyBKA. विप्रकर्षो for विप्रयोगो

19. My BKAT. Om. तस्य

श्यैतम् । गौरीवितस्य सत्रप्रयुक्तत्वात् तस्य स्थाने प्राकृतं श्यावाश्वमेव । यदि गोष्टोमोऽतिरात्रसंस्थः स्यात् तदौद्वंशीयस्य नार्मेधं विच्छन्दस ऋचो भवन्ति । अहोरात्रयो रूपमिति तस्य रात्र्यनुरूपत्वश्रवणात् । अन्यत्सर्वं गवामयनिकेन गवा सममित्यर्थः । तस्येयं क्लृप्तिः—पवस्व वाचो अग्रियो-(सा० ७७५-७) दविद्युतत्या रुचा-(सा० ६५४-५) पवस्वेन्दो वृषा सुतो-(सा० ७७८-८०) वृषा सोम द्युमाँ असि-(सा० ७८१-३) पवमानस्य ते कव-(सा० ६५७-९) इति बहिष्पवमानम् । अग्निन्दू-मित्रं वयम्-इन्द्रमिद्गा-चतुर्ऋचम् । इन्द्रे अग्ने-(सा०७९०-८०२)त्याज्यानि । अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं ( ऊ० ९. २. ३ ) च । परीतोषी-(सा० १३१३-५)ति समन्तं (ऊ० ९. १. ३) प्रथमायाम् । दैर्घश्रवस-(ऊ० ५. २. ४) बार्हदुक्थे (ऊ० ४. २. १३) तिसृषु । यौधाजय-(ऊ० १. १. ३)मध्यास्यायाम् । अयं सोम (सा० १४७१-३) इति पार्थ-(ऊ० ९. २. ५)मन्त्यम् इति माध्यंदिनः । बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० २. १. ३) च कालेयं ( ऊ० १. १. ७ )चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे (ऊ० ४. १. १०) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९. १. २०) । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावश्वान्धीगवे (ऊ० १. १. ११-२) । सूर्यवतीषु काव-(ऊ० ९. २. ११)मन्त्यमित्यार्भवः । यज्ञायज्ञीय-(ऊ० १. १. १४)माग्निष्टोमसाम । साकमश्वं (ऊ० १.१.१५) सौभर-(ऊ०१.१.१६)-मुद्वंशीय-(ऊ०६.१.८)मित्युक्थानि । अतिरात्रपक्षे नार्मेध-(ऊ० १. १. १७)मुक्थानामन्त्यम् । पञ्चदशं बहिष्पवमानम् । त्रिवृन्त्याज्यानि । सप्तदशं माध्यंदिनं सवनम् । एकविंशं तृतीयं सवनम् । सोक्थम् । पञ्चदशी रात्रिस्त्रिवृत्संधिरिति स्तोमक्लृप्तिः ॥

4. LC. राज्यानु° for रात्र्यनु°

5. C MyBKA. अस्य for तस्य

यद्यप्यतिरात्राणामहीनप्रकरणे ब्राह्मणाम्नानात्तत्रैवाभिधानं युक्तम् , तथापि प्रातिस्विको विशेषो लाघवार्थमिह कथ्यते । सामान्यतस्त्वाहीनिकी रात्रिस्तत्र वक्ष्यति । तत्रानुक्तं सर्वं ज्योतिष्टोमवत् ॥ ३ ॥

इति गौः ॥ २ ॥

---

5 आयुः

अथैष आयु(तां० ब्रा० १६. ३)रित्यनुवाकेनायुरुक्तः ।

आयुषः ॥ १ ॥

वार्कजम्भस्य लोके मैधातिथम् (ऊ० ९. ३. ६) । मैधातिथस्य रौरवम् (ऊ० ७. १. १३) । स्वासु नौधसम् (सा० ६८५-10 ६ ; ऊ० १. १. ६) । गौरीवीतस्य श्यावाश्वम् (ऊ० १. १. ११) । उद्वंशीयस्य नार्मेधम् (ऊ० १. १. १७) । यदि रात्रिः ॥ २ ॥

समानमितरं सांवत्सरिकेण ॥ ३ ॥

इति । गवामयने ज्योतिष्टोममाज्यबहिष्पवमान-(आ० क० २. 15 ८. १)मित्यनुवाकेनायुः क्लृप्तः । तस्यैकाहिकस्योक्ते द्रव्यविकारे । निदानं पूर्वानुसारेण सुगमम् । उप-द्वि-पवे-(सा० ६५१-९)ति बहिष्पवमानम् । अग्न-आ नो मित्र-आयाहि-इन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि ॥ उच्चा त (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च अभिसोमास (सा० ८५६-७) 20 इति द्विहिंकारं (ऊ० ४.२.७) प्रथमायाम् । मैधातिथं (ऊ० ९.२.६) तिसृषु । रौरवं (ऊ० ७.१.१३) तिसृषु । यौधाजय-(ऊ० १.१.३)- 22 मध्यास्यायाम् । औशन-(ऊ० १. १. ४)मन्त्यम् ॥

---

13. Cf. आ. क. २. ८.

15. KA. क्लृप्तिः for क्लृप्तः ; MyKA. after क्लृप्तः । ins. गायत्रञ्चामहीयवं च

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेय-(ऊ० १. १. ७)मिति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९२ ६)ति सफपौष्कले (ऊ० १. १. ९-१०)। 5 पुरोजिती-(सा० ६९७-९)ति श्यावाश्वान्धीगवे (ऊ० १.१.११-२)। काव-(ऊ० १. १. १३)मन्त्यम् ॥

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम ॥

प्रमंहिष्ठीयं (ऊ० २. २. ५)हारिवर्ण-(ऊ० २. २. ५)मुद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि। प्रमंहिष्ठीयस्य ककुप् छन्दः। हारि- 10 वर्णस्योष्णिक्। अतिरात्रश्चेदायुः। तदोद्वंशीयस्य स्थाने नार्मेधम् (ऊ० १. १. १७) ॥

त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि ॥

सप्तदशं माध्यंदिनं सवनम्। एकविंशं तृतीयसवनम्। सोक्थम्। पञ्चदशी रात्रिः। त्रिवृत्संधिरिति स्तोमः। उक्तस्य 15 ज्योतिर्गौरायुरिति त्रिकस्य त्रिकद्रुका इति संज्ञा। एते वै त्रिकद्रुका स्तोमाः (तां० ब्रा० १६. ३. ८) इति श्रुतेः ॥ ३ ॥

इति आयुः ॥ ३ ॥

---

## अभिजित्

अथाभिजिद्विश्वजितौ प्रजापतिः प्रजा असृजते-(तां० ब्रा० १६. 20 ४. १)त्यनुवाकेनोक्तौ। विश्वजिदुत्तराभ्यां चानुवाकाभ्याम्। तत्राभिजितः क्लृप्तिमाह—

अभि प्र गोपतिं गिरे-(सा० १४८९-९१)त्यभिजितो ब्रह्मण आज्यम्। यद्यतिरात्रः ॥ १ ॥ 24

---

15. MyBKA. स्तोमस्य क्लृप्तिः for स्तोमः, T. उक्थस्य for उक्तस्य

ब्रह्मशब्देन ब्राह्मणाच्छंसी गृह्यते । तदनुशंसनीयत्वात् । तृतीयस्याज्यस्य तेन संबन्धः । अत्र निदानम्—अभिजितोऽतिरात्री भवतो ब्रह्मण आज्यमुद्धरति । आर्षभस्तोत्रीयं मा चीचरन् (नि॰सू॰ ६. ४) इति ॥ १ ॥

5 सामतृचस्य लोके श्यावाश्वम् (ऊ॰ १. १. ११) ॥ २ ॥

इति । गौरीवित-( ऊ॰ ३. २. १४ )मेकस्याम् । मधुश्चुन्निधन-(ऊ॰ ३.२.१५)मेकस्याम् । श्यावश्व-(ऊ॰ १.१.११)मेकस्याम् इति योऽयं सामतृचः तिसृषु स्तोत्रीयासु क्रमात् क्रियमाणैरेकच्चैः सामभिः कल्पितस्तृचः तस्य स्थाने श्यावाश्व-(ऊ॰१.१.११)मित्यर्थः । अत्र

10 च यद्यतिरात्र इत्यनुषज्यते तेनाग्निष्टोमातिरात्रयोर्द्वयोरपि श्यावाश्वमेव । गौरीवितं हि सत्रप्रयुक्तम् ॥ २ ॥

प्रमँहिष्ठीयं ( ऊ॰ २. २. ६ ) हारिवर्णं ( ऊ॰ २. २. ६ ) नार्मेधम् (ऊ॰ १. १. १७) ॥ ३ ॥

[ इत्युक्थानि ॥ ]

15 प्रत्यस्मै पिपीषत (सा॰ १४४०-१३) इति नानदं षोडशिसाम (ऊ॰ १०. १. १) । रात्रिः संधिः ॥ ४ ॥

समानमितरं सांवत्सरिकेण । ५ ।

18 उक्थादिकं साम स्यादतिरात्रविषयम् ॥

---

1. My BKAT. गण्यते for गृह्यते
3. V² स्तोत्रीयममासंवीवरम्, V¹. स्तोत्रीयमतासंचीरवरम्, C. स्तोत्रीयमासंचरम् for स्तोत्रीयं मा चीचरन्
4. L. after इति ins. संचरेदिति धानंजय्यः
8. B. Om. योऽयं···अग्निष्टोम° (L. 9)
10. T. नानुषज्जते, MyKA. ननुष्यते for अनुषज्यते
11. V¹⁻²C Om. हि
16. Cf. आ. क. २.१

तत्राग्निष्टोमस्येयं क्लृप्तिः । पवस्व वाचो अग्रियः (सा० ७७५) पुनानो अक्रमीदभि-(सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७) इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे ( सा० ७९०-२ ) आ नो मित्रावरुणा-(सा० ६६३-५ ) अभि त्वा वृषभा सुत ( सा० ७३१-३ ) इन्द्राग्नी आगतं सुतम् (सा० ६६९-७१) इत्याज्यानि ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च सत्रासाहीयं (ऊ० ८. २. १२) च । पुनानः सोमे-(सा० ७७५-६)त्यभीवर्तः रौरवयौधाजये (ऊ० १. १. २-३) । अभि वायु-(सा० १४२६-८)मिति पार्थ-(ऊ० ८.२.१४) मन्त्यम् ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं ( ऊ० १. १. ६ ) च कालेयं ( ऊ० १. १. ७ ) चेति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १. १. ८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९)सुज्ञाने (ऊ० २. १. ७) । पुरोजिती-(सा० ६९७-९)ति श्यावाश्वन्धीगवे (ऊ० १. १. ११) । यज्ञायज्ञीयं (ऊ० १. १. ४) च बृहच्चाग्नेयं ( ऊ० ९. १. १७ ) काव-( ऊ० १. १. १३ ) मन्त्यम् ॥

यज्ञायज्ञीस्यर्क्षु रथन्तर-(र० १. १. ६)मग्निष्टोमसाम । अतिरात्रपक्षे अभि प्र गोपतिं गिरेति तृतीयमाज्यम् । प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं ( ऊ० २. २. ६ ) नार्मेध-( ऊ० २. १. १७)मित्युक्थानि । प्रत्यस्मै पिपीषत (सा० १४४०-३) इति नानदं (ऊ० १०. १. १) षोडशिसाम । तस्यानुष्टुप् छन्दः । षोडशिसाम्ना स्तोष्यमाण इत्यादिना षोडशिधर्मा उक्ताः । ततोऽतिरात्रिः । संधिश्च । सर्वस्तोमस्य सतः आवृत्तस्तोमाश्चतुष्प्रणया

इत्यग्निष्टोमस्य स्तोमक्लृप्तिः। एकविंशान्युक्थानि सषोडशिकानि। पञ्चदशी रात्रिस्त्रिवृत्संधिरित्यतिरात्रस्य ॥ ५ ॥

इति अभिजित् ॥ ४ ॥

---

## विश्वजित्

5 विश्वजितः क्लृप्तिमाह—

विश्वजितः ॥ १ ॥

पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय (ऊ० ९. २. ७) श्रुध्ये (ऊ० ९. १. २०)। सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९. १. २०) यद्यतिरात्रः ॥ २ ॥

10 सामतृचस्य लोक आन्धीगवम् (ऊ० १. १. १२)। ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ३ ॥

समानमितरं सांवत्सरिकेण ॥ ४ ।

इति । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय-(ऊ० ९. २. ७) श्रुध्ये (ऊ० ९. १. २०) इति सिद्धानुवादः । सफश्रुध्ये यद्यतिरात्र 15 इति विशेषविवक्षायाम् अत्र निदानम्—सफश्रुध्ये यद्यतिरात्र इति तु भवत्यतिरात्रः। सन् कृत्स्नीभवति । सफीभवति । तस्मात् सफीभवतः सफं वा विच्यावयिष्य-(नि० सू० ६. ६)दिति । तत्राग्निष्टोमस्येयं क्लृप्तिः । उप त्वा जा-( सा० १५७०-२ )जनीयन्तो-( सा० १४६० ) उत नः प्रियाप्रियासु ( सा० १४६१ ) 20 तत्सवितुर्वरेण्यम् (सा० १४६२) सोमानां स्वरणम् ( सा० १४६३ )

---

12. Cf. आ. क. २.६

15. MyBKAT. विवक्षया for विवक्षायाम्

16. Om. सन्

17. V[1]. नावित्युपयामीत्, MyBKA नाविद्युपविषीत् C. नातिध्युष उपपिमित्, T. नाविद्युपयिषीति for वा विच्यावयिष्य

अग्न आयूंषि पवसे (सा० १४६४) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । अन्त्यवर्जमेकर्चाः । देवताभेद उक्तः ॥

सुषमिद्धो (सा० १३४७-५०) ता नः शक्तं-(सा० १४६५-७) युञ्जन्ति ब्रध्नम् (सा० १४६८-७०) तमीडिष्व यो ऽर्चिषे-(सा० ११४९-५१) त्याज्यानि ॥ 5

अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ९.२.३) च । परीतो षिञ्चता सुते-(सा० १३१३-५)ति कालेय-(ऊ० ९. २. ४)माद्यायाम् । रथन्तर-(ऊ० २. ४. ३)दैर्घश्रवसे(ऊ० ५. २.४) तिसृषु । यौधाजय-(ऊ० १. १. ३)मध्यास्यायाम् । अयं सोम (सा० १४७१) इति पार्थ-(ऊ० ९. २. ५)मन्त्यम् ॥ 10

वैराजं (र० ५.२.१४) च महानाम्न्यश्च वैरूपं (ऊ० ४.१.२०) च रेवत्य-(र० १.२.७)श्चेति पृष्ठानि । उक्ताः पृष्ठधर्माः ॥

परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रसंहिते (ऊ० ९. २. ६) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय-(ऊ० ९. २. ७) श्रुध्ये ( ऊ० ९. १. २० ) । पर्यूष्वि-(सा० 15 १३६४-६)ति वामदेव्यम् (ऊ० ९.२.८) । पुरोजिती-(सा० ६९७-९) त्यान्धीगवं (ऊ० १. १. १२) च । यज्ञायज्ञीयं (ऊ० १.१.१४) च । परि प्रधन्वे-(सा० १३६७-९)ति द्विपदासु वारवन्तीयम् (ऊ० ९. २. १०) । सूर्यवतीषु (सा० १३७०-२) काव-(ऊ० ९. २. ११)मन्त्यम् ॥ 20

त्वमग्ने यज्ञाना-( सा० १४७४-६ )मिति बृहद-( र० २. ४. ५ )ग्निष्टोमसाम ॥ साकमश्वसौभर नार्मेधानि (ऊ० १. १. १५-७) 22

---

18. MyBKA. Om °सु वारवन्तीयम् ̇ अग्निष्टोमसाम

22. MyBKA. before साक° ins. सफं; T. after अग्निष्टोमसाम ins. सर्वस्तोमस्य तच्चतुरावृत्तस्तोमाः त्रिःप्रणयाः इति, अतिरात्रस्य तु सत्रासाहीयस्थाने सफं ; MyBKAT. साकमश्वं सौभरं नार्मेधमिति for साक°···नार्मेधानि

उक्थानि। रात्रिः संधिः । एकविंशान्युक्थानि सषोडशिकानि । पञ्चदशी रात्रिः । त्रिवृत्संधिः । अन्यत्सर्वमग्निष्टोमवत् । विश्वजिदभिजिद्भ्यां यमाभ्यां वा यजेतेति पक्षद्वयम्। तदुक्तम्—विश्वजिदभिजिद्भ्यां यमाभ्यां यजमान (ला० श्रौ० ८. १. १९)
5 इत्यादि ॥ ३ ॥

इति विश्वजित् ॥ ५ ॥

---

## महाव्रतम्

अथ महाव्रतस्य सर्वजिदपरनामधेयस्य पञ्चविंशोऽग्निष्टोम (तां० ब्रा० १६. ७) इत्यनुवाकोक्तस्य क्लृप्तिः ॥

10 व्रतस्य ॥ १ ॥

आ नो विश्वासु हव्यम् (सा० १४९२-३) इति श्यैतं ब्रह्मसाम (ऊ० १०. १. २)। गौरीवितस्य लोके औदलम् (ऊ० १०. १. ३) ॥ २ ॥

समानमितरं सांवत्सरिकेण ॥ ३ ॥

15 इति। संवत्सरद्वितीयाध्यायान्त्यखण्डेन महाव्रतं क्लृप्तम् । तस्यैकाहिकस्य पञ्चनिधनं वामदेव्यमपनीय तस्य स्थाने आ नो विश्वासु हव्य-( सा० १४९२-३ )मिति श्यैतं ( ऊ० १०. १. २ ) ब्रह्मसाम कार्यम् । अत्र निदानम्—ऐकाहिकाद् व्रतात् पञ्चनिधनं वामदेव्यमपनयती-(नि०सू० ६. ७)त्यादि। पुरोजिती-(सा० ६९७-९)ति
20 गौरीवितस्थाने तस्यामेवौदलम् (ऊ० १०. १. ३)। अन्यत् सर्वं
21 समम्। महाव्रतस्य पृष्ठ्ये उपाकृते (ला० श्रौ० ३. ९. १) इत्यादि-

---

1. MyBKAT. after उक्थानि add : गौरीवितं षोडशिसाम ;
   T. त्रिणवप्रथमं द्वे एकविंशकसषोडशिके for एकविंशान्युक्थानि सषोडशिकानि
10. MyBKA. महाव्रतस्य for व्रतस्य
14. Cf आ. क. २.६

पटलद्वयोक्ताः पृष्ठधर्मा अत्रापि कर्तव्याः । सह धर्मैः सर्वत्र पृष्ठ्यः स्याद्दशमव्रते चे-(ला० श्रौ० ३. ६. १६-७)ति वचनात् ॥

इति महाव्रतम् ॥ ६ ॥

---

## प्रथमः साहस्रः

अथ चत्वारः साहस्रा निकायिनः । तेषां प्रथमो- 5
ऽथैष ज्योतिर् (तां० ब्रा० १६. ८. १) इत्यनुवाकेनोक्तः । तस्य क्लृप्तिमाह—

पवस्व वाचो अग्रियो (सा० ७७५ ७) दविद्युतत्या रुचा (सा० ६५४-६) पवमानस्य ते कवे (सा० ६५७-९) । १ ॥

इति बहिष्पवमानम् ॥ 10

अग्न आ याहि वीतये (सा० ६६०-२) इति राथन्तरम् । त्रीणि बार्हतानि ॥ २ ॥

इत्याज्यानि ॥

अग्न आ याहि वीतये (सा० ६६०-२)मित्रं वयं हवामहे (सा० ७९३-५) इन्द्रमिद्गाथिनो बृहत् (सा० ७९६-९) इन्द्रे अग्ना (सा० 15
८००-२) इत्याज्यानि ॥ २ ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ९. २. ३) च । परीतो षिञ्चता सुतम् (सा० १३१३-६) इति समन्तं च (ऊ० ९. १. १३) रथन्तरं च (र० २. २. ६) दैर्घश्रवसं (ऊ० ५. २. ४) च यौधाजयं 20
(ऊ० ७. २. ५) चायं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥ ३ ॥

इति माध्यंदिनः पवमानः ॥ 23

---

1. MyBKAT Om. अत्र; L. corrects कर्तव्याः as कार्याः

19. L. एकस्याम् for च after समन्तं

20. L. after च ins. तिसृषु; C. दैर्घश्रवसे तिसृषु for दैर्घश्रवसं च

समन्तं (ऊ० ९. १. ३) प्रथमायाम्। यौधाजय-(ऊ० ७. २. ५.)मध्यास्थायाम्। रथन्तरस्य ककुबुत्तरा बृहती छन्दः ॥ ३ ॥
बृहच्च (र० १. १. ५) वामदेव्यं च (ऊ० १. १. ५) स्वादोरित्था विषूवत (सा० १००५-७) इति श्यैतम्
5 (ऊ० १०. १. ४)। स्वासु कालेयम् (१. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥

श्यैतस्य पङ्क्तिश्छन्दः। ४।

स्वादिष्ठया मदिष्ठया (सा० ६८९-९१) इति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति
10 सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १. १. १२)। सूर्यवतीषु कावम् (९. २. ११) अन्त्यम्। ५ ॥

इत्यार्भवः पवमानः ॥

15 यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

स्तोमक्लृप्तिमाह—

त्रिवृद्बहिष्पवमानम्। पञ्चदशात्रिवृन्त्याज्यानि। सप्तदशो मध्यंदिनः पवमानो होतुश्च पृष्ठम्। पञ्चदशं मैत्रावरुणस्य। पञ्चविंशं ब्राह्मणाच्छंसिनः। सप्तदशमाच्छावाकस्यैकविंश आर्भवः। एकविंशो-
20 ऽग्निष्टोमः ॥ ७ ॥
21 प्रथममाज्यं पञ्चदशम्। द्वितीयं त्रिवृत्। तृतीयं पञ्चदशम्।

---

16. MyBKAT. Om. स्तोमक्लृप्तिमाह

17. A[3] KAMyB. पञ्चदशानि, TA[2]CV[1-2] पञ्चदशं त्रिवृन्ति for पञ्चदशात्रिवृन्ति; L. पञ्चदशं होतुराज्यं त्रिवृन्मैत्रावरुणस्य पञ्चदशं ब्राह्मणाच्छंसिनस्त्रिवृदच्छावाकस्य for पञ्चदशात्रिवृन्त्याज्यानि

21. L. delete : प्रथममाज्यं···प्रयोगः

चतुर्थे त्रिवृत्। इत्येवं व्यत्यासेन पञ्चदशत्रिवृतोराज्येषु प्रयोगः। तथा चोक्तमुपग्रन्थे—यत्र हि त्रिवृत् पञ्चदश इति वामनन्ति बृहद्रथन्तर-पृष्ठयः षडह इति वा व्यत्यासप्रयोग एव तत्र भवती-(उ०ग्र०सू०२. १)ति। स्पष्टमन्यत्। पञ्चदशस्य विष्टुतिरुच्यते। ब्राह्मणे येषां स्तोमानां विष्टुतिराम्नाता तेषां सूत्रे जातिसंहारो युग्मायुक्संहार इति द्वौ पक्षावुक्तौ तस्य यावभित (ला० श्रौ० ६. ५. २२-३०) इत्यादिना। तत्र जातिसंहारे एकविंशादाद्यः पर्याय आहर्तव्यः। त्रिणवाद् द्वौ समौ। तेषामेककनीयस्त्वादेकविंशस्य मध्ये कार्यः। त्रिणवस्य पर्यायौ प्रथमोत्तमौ। तद्यथा– नवभ्यो हिंकरोति। स तिसृभिः स पञ्चभिः स एकया। सप्तभ्यो हिंकरोति। स एकया। स तिसृभिः। स तिसृभिः। नवभ्यो हिंकरोति। स पञ्चभिः। स एकया। स तिसृभिः। इति। युग्मायुक्संहारे तु द्वौ पर्यायौ चतुर्विंशादाहर्तव्यौ। त्रिणवादेकः। तेषां चैकज्याय-स्त्वात्त्रिणवस्य मध्ये कार्यः। चतुर्विंशस्य पर्यायौ प्रथमोत्तमौ। तद्यथा। अष्टाभ्यो हिंकरोति। स तिसृभिः। स चतसृभिः। स एकया। नवभ्यो हिंकरोति। स एकया। स तिसृभिः। स पञ्चभिः। अष्टाभ्यो हिंकरोति। स चतसृभिः। स एकया। स तिसृभिरिति। तदुक्तम्— त्रयोदशत्रयोविंशयोः पञ्चविंशे च

---

6. MyKAB. युक्तौ for उक्तौ; L. corrects द्वौ पक्षावुक्तौ as पक्षद्वयमुक्तं; CV[1-2]MyBKAT. यावभितोऽनन्तरौ समौ तयोः पर्यायात् (V[1-2]T पर्यायान्) संहरेत् for तस्य यावभितः

7. MyBKACT. after संहारे ins. पञ्चविंशस्य

8. V[1-2]C after तेषां ins. उक्तश्च; V[1-2]C MyBKAT. एकविंशः (V[1-2]CT. °विंश-) पर्यायः पञ्चविंशस्य मध्यमः for एकविंशस्य मध्ये

9. MyBKATCV[1-2] त्रिणवस्य for त्रिणव

12. L. corrects. युग्मायुक्…आहर्तव्यौ as युग्मायुक्संहारपक्षे द्वौ चतुर्विंशात्

14. MyBKATCV[1-2] त्रिणवपर्यायः पञ्चविंशस्य मध्यमः कार्यः। चतुर्विंशपर्यायौ (MyBKA. चतुर्विंश, T. चतुर्विंशस्य) आद्यन्तौ for त्रिणवस्य…प्रथमोत्तमौ

मध्यमः पर्यायो ज्यायानेकः। ज्यायःसु कनीयानेकः। कनीयःसु तथैकान्नत्रिंशैकत्रिंशयो(ला० श्रौ० ६. ७. ५-६)रिति ॥ ७ ॥

इति प्रथमः साहस्रः ॥७॥

---

## द्वितीयः साहस्रः

5 अथैष सर्वज्योतिर् (तां० ब्रा० १६. ९. १) इत्यनुवाकेन द्वितीयः साहस्र उक्तः।

एषैवोत्तरस्य क्लृप्तिः ॥ १ ॥

तस्य त्रिवृद् बहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशो माध्यंदिनः पवमानः। त्रीणि च पृष्ठानि। पञ्चविंशं

10 ब्राह्मणाच्छंसिनः। सप्तदश आर्भवः। एकविंशोऽग्निष्टोमः ॥ २ ॥

इति स्तोमक्लृप्तावेव विशेषः। शेषं पूर्ववत् ॥ २ ॥

इति द्वितीयः साहस्रः ॥८॥

---

## तृतीयः साहस्रः

अथैष विश्वज्योतिर् (तां० ब्रा० १६. १०. १) इत्यनुवाकेन विहितं

15 तृतीयं साहस्रं कल्पयति।

अग्निं दूतं वृणीमहे (सा० ७९०-२) इत्युभयान्याज्यानि ॥१॥

आयन्तीयं ब्रह्मसाम (ऊ० २.२.९)। यस्ते मदो वरेण्य (सा०८१५-७) इति गायत्र-मौक्षे (ऊ०४.१.१०)। आन्धीगवादुत्तरमाथर्वणम् (र० ३.

19 १. १)। साकमश्वं(ऊ० १. १. १५) सौभरं (ऊ० १.

---

11. L. Om. एव; L. after विशेषः ins. न चान्यत्; L. supra पूर्ववत् writes प्रथमवत्

14. MyBKAT·CV[1-2] Om. अनुवाकेन; V[1-2] Om. विहितं

१. १६ ) त्रैककुभं ( ऊ० ६. १. ७ ) चोद्वंशीयम् (ऊ० ६. १. ८) इत्युक्थानि ॥ २ ॥

चतुर्विंश आर्भव एकविंशोऽग्निष्टोमः सोक्थ्यः ॥ ३ ॥

समानमितरं पूर्वेण सस्तोमम् ॥ ४ ॥

उभयान्याज्यानीत्यस्यार्थो निदानकारेणोक्तः पूर्वे बार्हते । उत्तरे राथन्तरे इति शौचिवृक्षिः । एकदेवत्ये बार्हते । द्विदेवत्ये राथन्तरे । इति धानंजय्यः ( नि० सू० ६. ८ ) इति । पूर्वेणेति द्वितीयेन साहस्रेन । तत्रेयमस्य क्लृप्तिः— 5

पवस्व वाचो अग्रियो ( सा० ७७५-७ ) दविद्युतत्या रुचा (सा० ६५४-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानं त्रिवृत् ॥ 10

अग्निं दू-(सा० ७९०-२)मित्रं वयम्-( सा० ७९३-५ ) आयाहि-सुषमा-( सा० ६६६-८ ) इन्द्राग्नी आगतम् ( सा० ६६९-७१ ) इत्याज्यानि ।

अग्निं दूतम्-आ नो मित्रावरुण-इन्द्रमिद्गाथिन इन्द्राग्नी(सा० ७९०-८०२)ति वा पञ्चदशान्याज्यानि ॥ 15

अस्य प्रत्ना-द्युत-(सा० ७५५-७)मिति गायत्रामहीयवे (ऊ० ९. २. ३) । परीतो षिञ्च-(सा० १३१३-५) समन्तं (ऊ० ९. १. ३) प्रथमायाम् । रथन्तरं (र० २. ४. ३) तिसृषु । दैर्घश्रवसं (ऊ० ५. २. ४) तिसृषु । यौधाजय-(ऊ० १. १. ३)मध्यास्यायाम् । 20 अयं सोम (सा० १४७१-३) पार्थ-(ऊ० ९. २. ५)मन्त्यम् । इति सप्तदशो माध्यंदिनः पवमानः ॥ 22

---

1. LV[2] च for वा

8. Om. अस्य

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ९) च कालेयं (ऊ० १. १. ७)चेति पृष्ठानि। त्रीणि पृष्ठानि सप्तदशानि। पञ्चविंशं ब्रह्मसाम ॥

यस्ते मदो वरेण्य (सा०८१५-७) इति गायत्रमौक्षे (ऊ० ४.१.१०)। 5 पवस्वेन्द्रमच्छे(सा० ६९२-७)ति सफ-(ऊ० १. १. ९)श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती(सा० ६९७-९)ति श्यावाश्वं (ऊ० १. १. ११) चान्धीगवं (ऊ० १. १. १२) चाथर्वणं (र० ३. १. १) च। सूर्यवतीषु (सा० १३७०-२) काव-(ऊ० ९. २. ११)मित्यार्भवः चतुर्विंशः ॥

10 यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम ॥ ५ ॥

एकविंशं साकमश्वं (ऊ० १. १. १५) सौभरं (ऊ० १. १. १६) त्रैककुभं (ऊ० ६. १. ७) चोद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि एकविंशानि। त्रैककुभस्योष्णिक् छन्दः ॥ ४ ॥

इति तृतीयः साहस्रः ॥६॥

---

15 चतुर्थः साहस्रः

यो वा अग्निष्टोमे( ता० ब्रा० १६. ११. १ ) इत्यनुवाकोक्तं साहस्रोत्तममाह—

उपास्मै गायता नर (सा० ६५१) उपोषु जातमप्तुरम् (सा० ७६२) पवस्व वाचो अग्रियः (सा० ७७५)
20 दविद्युतत्या रुचा (सा० ६५४-६) पवमानस्य ते कवे (सा० ६५७-९)। १॥

इति बहिष्पवमानम् ॥

दविद्युतत्या-पवमानस्य ते कव (सा० ६५४-९) इति तृचौ। शिष्टा एकर्चाः। उत्तमौ तृचौ बहिष्पवमाने साहस्रोत्तमे चातुर्मास्येषु
25 (ला० श्रौ० ६. ३. ७-८) इति वचनात् ॥ १ ॥

---

12. V¹BKA. वा. for च

अग्न आयाहि वीतये (सा० ६६०-२) पुरूरुणा चिद्धयस्ती-
(सा० ९८५-७)न्द्रमिद्गाथिनो बृहद् (सा० ७९६-८) इन्द्रे
अग्ना नमो बृहद् (सा० ८००-२) ॥ २ ॥

इत्याज्यानि ॥

उच्चा त (सा० ६७२-४) इति गायत्रं चामहीयवं 5
च (ऊ० १. १. १)। पवस्व मधुमत्तम (सा० ६९२-३)
इतीडानां संक्षार एकस्याम् (ऊ० १०. १. ५)। प्रत्नं
पीयूषं पूर्व्यं यदुक्थ्यम् (सा० १४९४-६) इति यौधाजयं
तिसृषु (ऊ० १०. १. ६)। पुनानः सोम धारये-(सा० ६७५-६)ति
रौरवमेकस्याम् (ऊ० १. १. २)। रथन्तरं तिसृषु (र० १. 10
२. १०)। शिशुं जज्ञानं हर्यतम् (सा० ११७५-७) इति
वामदेव्यम् (ऊ० १०. १. ७) अन्त्यम् ॥ ३ ॥

[इति माध्यंदिनः पवमानः ॥]

इडानां संक्षारस्योष्णिक् । यौधाजयस्य सतो बृहती ।
रथन्तरस्य ककुबुत्तरा बृहती ॥ ३ ॥ 15

बृहत्पृष्ठं (र० १. १. ५) वामदेव्यस्यर्क्षु स्वारं सौपर्णम्
(सा० ६८२-४ ; ऊ० १०. १. ८)। श्रायन्तीयं च
(ऊ० ५. २. ९) कालेयं (ऊ० १. १. ७) च ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्र-संहिते 20
(ऊ० १. १. ८)। परि प्र धन्वे-(सा० १३६७-९)न्द्रमच्छे-(सा०
६९४-६)ति सफ-(ऊ०१०. १. ९) श्रुध्ये (ऊ० ९.१.२०)।
पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वा-(ऊ०
१. १. ११)न्धीगवे (ऊ० १. १. १२)। सूर्यवतीषु कात्रम्
(ऊ० ९. २. ११) अन्त्यम् ॥ ५ ॥ 25

[इत्यार्भवः पवमानः ॥] 26

7. LCMyV[1-2] संक्षारम् for संक्षारः

परि प्र धन्वेति द्विपदा। सफश्रुध्ये एकर्चयोः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम(ऊ० १. १. १३) ॥ ६ ॥

अथ स्तोमः—

त्रिवृद् बहिष्पवमानम्। पञ्चदशानि त्रीण्याज्यानि। त्रिवृन्मैत्रा-
5 वरुणस्य। सप्तदशो माध्यंदिनः पवमानो होतुश्च पृष्ठम्।
पञ्चदशं मैत्रावरुणस्य। पञ्चविंशं ब्राह्मणाच्छंसिनः। सप्त-
दशमाच्छावाकस्य। सप्तदश आर्भवः। एकविंशोऽग्निष्टोमः ॥ ७ ॥

इति चतुर्थः साहस्रः ॥१०॥

---

## प्रथमः साद्यस्क्रः

10 अथ चत्वारः साद्यस्क्राः। श्येनेनैकत्रिकाभ्यां सह षट्
साद्यस्क्रा इति शौचिवृक्षिः। दीक्षाप्रभृति सद्यः सर्वं कुर्युः।
प्रथमद्वितीययोः श्येनस्य च साद्यस्क्रेष्वग्निष्टोमीयस्य पशोः स्थाने
अग्निषोमीयेष्टिर्विहिता। तत्र वपाकालायाः सुब्रह्मण्यायाः लोपः।
तत्र प्रथमः साद्यस्क्रः आदित्याश्चाङ्गिरसश्च (ता० ब्रा० १६. १२. १)
15 इत्यनुवाकेन विहितः। तस्य क्लृप्तिमाह—

उपास्मै गायता नरः (सा० ६५१-३) पवमानो आजीजनद्
(सा० ८८९-९१) पवमानस्य ते कवे (सा० ६५७-९) ॥

इति बहिष्पवमानम् ॥ १ ॥

इममूषु त्वमस्माकम् (सा० १४९७-९) मित्रं वयं हवामहे-(सा०
20 ७९३-५)ऽहमिद्धि पितुः परी-(सा० १५००-३)यं वामस्य
मन्मनः (सा० ९१६-८) ॥ २ ॥

इत्याज्यानि ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रमेकस्याम्।
24 आमहीयवमेकस्याम् (ऊ० १. १. १)। शाक्वर-

---

3. LV¹⁻² Om. अथ
13. My. Om. अग्निषोमीया

वर्णमेकस्याम् (ऊ० १०. १. ११)। पुनानः सोम धारये-(सा० ६७५-६)ति वैष्टम्भमेकस्याम् (ऊ० १०. १. १२)। कालेयमेकस्याम् (ऊ० १०. १. १३)। यौधाजयमेकस्याम् (ऊ० १. १. ३)। औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं च (र० १. १. १) वामदेव्यं च (ऊ० १. १. ५) श्रायन्तीयस्यर्क्षु सौभरम् (ऊ० १०. १. १४) कालेयस्यर्क्षु वारवन्तीयम् (ऊ० १०. १. १५) ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्रं च स्वाशिरामर्कः (र० ३. १. २)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफा-(ऊ० १. १. ९)यास्ये (ऊ० १०. १. १६)। पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १. १. १२)। कावम् (ऊ० १. १. १३) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

**काववर्जं सर्वे एकर्चाः ।** संभवति स्तोमेऽन्त्यं सर्वत्र तृचे (ला० श्रौ० ६. ४. २) **इति वचनात्** ॥ ५ ॥

यज्ञायज्ञीय-(ऊ० १. १. १४)ग्निष्टोमसाम ॥ ६ ॥

**सर्वाणि स्तोत्राणि त्रिवृन्ति ।** उभौ त्रिवृतौ (आ० क० ३.१२) **इति वक्ष्यमाणत्वात्** । साद्यस्क्रेण (ला० श्रौ० ८. ३. २) **इत्यादि-सूत्रोक्तम् आध्वर्यवत्वादिह सर्वं नोक्तम्** ॥ ६ ॥

**इति प्रथमः साद्यस्क्रः ॥११॥**

---

## द्वितीयः साद्यस्क्रः

एतस्यैवैकविंशम् (ता० ब्रा० १६. १३. १) **इत्यनुवाकेन द्वितीयः साद्यस्क्र उक्तः ।**

एषैवोत्तरस्य क्लृप्तिः ॥ १ ॥

इति । प्रथमस्य या क्लृप्तिः सैव द्वितीयस्येत्यर्थः ॥ १ ॥

विशेषमाह—

तस्यैवैकविंशमग्निष्टोमसाम ॥ २ ॥

5 प्रथमद्वितीययोः स्तोमक्लृप्तिमाह—

उभौ त्रिवृतौ ॥ ३ ॥

इति ॥ ३ ॥

इति द्वितीयः साद्यस्क्रः ॥१२॥

---

## तृतीयः साद्यस्क्रः

10 अथैषोऽङ्गिरसामनुक्रीर् (तां० ब्रा० १६. १४. १) इति तृतीयः। एकरात्रीणो द्व्यहीनोऽनुक्रीर् (ला० श्रौ० ८. ४. ३)इति सूत्रम्। एकया रात्र्या द्वाभ्यां चाहोभ्यां निर्वर्त्यंत इत्यर्थः। तस्य क्लृप्तिमाह—

शाक्वरवर्णात् पूर्वं स्वारम् सौपर्णम् (ऊ० १०. १. १०)
15 आयास्यस्य लोके पौष्कलम् (ऊ० १. १. १०)। श्यावाश्वात् पूर्वमैडमायास्यम् (ऊ० १०. १. १७) ॥ १ ॥

चतुर्विंशावुत्तरौ पवमानौ तृचक्लृप्तौ ॥ २ ॥

18 समानमितरं पूर्वेण सस्तोमम् ॥ ३ ॥

---

6. LCV[1-3] Om. उभौ त्रिवृताविति

10. LCV[1-2]. Om. अथैषो°...तस्य क्लृप्तिमाह (L. १३)

11. K. एककंरात्रिणो A एककरात्रिणो for एकरात्रीणो ; K. after एकरात्रीणो adds: दितीयसाद्यस्क्रं तृतीयसाद्यस्क्रः ; My द्विहीनो°, T. द्व्यहीनो° for द्व्यहीनो°

12. My निर्वर्तितः निर्वर्त्यंते

17. V[1] चतुर्विंशात् for चतुर्विंशौ ; L. तृचः क्लृप्ते for तृचक्लृप्तौ

इति। उपास्मै (सा० ६५१-३) पवमानो अजीजनद् (सा० ८८९-९१) पवमानस्य ते कव-(सा० ६५७-९) इति बहिष्पवमानं त्रिवृत्। इममूषु त्वमस्माकं (सा० १४९७-९) मित्रं वयं हवामहे (सा० ७९३-५) अहमिद्धि पितुः परि(सा० १५००-२) इयं वामस्य मन्मनः (सा० ९१६-८) इत्याज्यानि त्रिवृन्ति। उच्चाते (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च स्वारं सौपर्णं (ऊ० १०. १. १०) च शाक्वरवर्णं (ऊ० १०. १. ११) च। पुनानः सो-(सा० ६९५-६) वैष्टम्भं (ऊ० १०. १. १२) च कालेयं (ऊ० १०. १. १३) च यौधाजयं (ऊ० १. १. ३) चौशन (ऊ० १. १. ४)मन्त्यम्। इति माध्यंदिनः चतुर्विंशः। तृचाः सर्वे ॥ 10

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयस्यर्क्षु सौभरं (ऊ० १०. १. १४) कालेयस्यर्क्षु वारवन्तीय-(ऊ० १०. १. १५)मिति पृष्ठानि त्रिवृन्ति॥

स्वादिष्ठये-(सा० ६८९-१)ति गायत्रं च स्वाशिरामर्कः (र० ३. १. २)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफपौष्कले (ऊ० १. १. ९-१०) । पुरोजिती व (सा० ६२७-९) इत्यैडमायास्यम् (ऊ० १०. १. १७) । श्यावाश्वान्धीगवे (ऊ० १. १. ११-२)। काव-(ऊ० १.१.१३)मन्त्यम्। इत्यार्भवः चतुर्विंशः। सर्वे तृचाः॥

यज्ञायज्ञीयम-(ऊ० १. १. १४)ग्निष्टोमसामैकविंशम्॥ ३॥

इति तृतीयः साद्यस्क्रः॥ १३॥ 20

---

## चतुर्थः साद्यस्क्रः विश्वजिच्छिल्पाख्यः

अथैष विश्वजिच्छिल्पम् (तां० ब्रा० १६. १५) इति चतुर्थः। स चैकरात्रीणो द्व्यहीनः द्विरात्रीणस्त्र्यहीन इति धानंजय्यः। 23

---

6. LCV[1-2]. Om. स्वारं

दैक्षं प्रथममहः। क्रयप्रभृत्युपवसथान्तं द्वितीयम्। सौत्यमुत्तमम्। तस्य कल्पः—

रथन्तरदैर्घश्रवसे अन्तरैडमायास्यमेकस्याम् (ऊ० ७. १. १४) संहितादुत्तरं जराबोधीयम् (ऊ० १०. १. १८)। समानमितरं

5 विश्वजितैकाहिकेनाग्निष्टोमेन ॥ १ ॥

अष्टादशावुत्तरौ पवमानौ। एकविंशं होतुः पृष्ठम्। एकविंशोऽग्निष्टोमः। त्रिवृदितरं सर्वम् ॥ २ ॥

इति। ऐकाहिकेनेति सांवत्सरिकस्य व्यावृत्तिः। अग्निष्टोमेनेति अतिरात्रविच्छेदः॥

10 उप त्वाजा-(सा० १५७०-२)जनीयन्त (सा० १४६०-२) इत्यादि पवमानस्य ते कवे (सा० ६५७-९) इत्यन्तं बहिष्पवमानं त्रिवृत्। सुषमिद्धे-(सा० १३४७-९)त्यादीनि तमीडिष्वे-(सा० ११४८-५१)त्यन्तानि आज्यानि त्रिवृन्ति॥

अस्य प्रत्नामनुद्युतं (सा० ७५५-७) गायत्रं चामहीयवं

15 (ऊ० ९. २. ३) च। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति कालेय-(ऊ० ९. २. ४)माद्यायाम्। रथन्तरं (र० २. ४. ३) तिसृषु। ऐडमायास्य-(ऊ० ७. १. ४)माद्यायाम्। दैर्घश्रवसं (ऊ० ५. २. ४) तिसृषु। यौधाजय-(ऊ० १३. १. ५) मध्यास्यायाम्। अयं सोम (सा० १४७१-३) इति पार्थ (ऊ०

20 ९. २. ५)मन्त्यम्। इति माध्यंदिनोऽष्टादशः॥

वैराजं (र० १. १. १०) होतुः पृष्ठमेकविंशम्। महानाम्न्यो वैरूप-(र० १. १. ११)रेवत्य (र० १. २. ७) इत्युत्तराणि पृष्ठानि

23 त्रिवृन्ति॥

---

8. $V^{1-2}$T. सांवत्सरिक for सांवत्सरिकस्य ; MyKA. आवृत्तिः for व्यावृत्तिः

12. L.$CV^{1-2}$. इत्यादि for इत्यादीनि

16. MyBKA. Om. रथन्तरं तिसृषु। ऐडमायास्यमाद्यायाम्

परि स्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं च संहितं (ऊ० ९. २. ६) च जराबोधीयं (ऊ० १०. १. १८) च। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय-(ऊ० ९. २. ७)श्रुध्ये (ऊ० ९. १. २०)। पर्यूष्वि-(सा० १३६४-६)ति वामदेव्यम् (ऊ० ९. २. ८)। पुरोजिती व (सा० ६९७-९) इति आन्धीगवं (ऊ० १. १. १२) च यज्ञायज्ञीयं (ऊ० ८. २. १६) च। परि प्र धन्वे-(सा० १३६७-९)ति द्विपदासु वारवन्तीयम् (ऊ० ८. २. १०)। सूर्यवतीषु(सा० १३७०-२) काव-(ऊ० ८. २. ११) मन्त्यम्। इत्यार्भवोऽष्टादशः। वामदेव्ययज्ञायज्ञीयवारवन्तीयकावानि तृचेषु। शिष्टान्येकर्चेषु। वामदेव्यं तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीय-प्रभृतीनि च त्रीणी-(ला० श्रौ० ६. ४. १)ति वचनात्। तत्र गायत्रसंहितजराबोधीयानि सामतृचः। त्रीनेकतृचे नानास्तोत्रीयास्विति वचनात्॥

त्वमग्ने यज्ञाना-(सा० १४७४-६)मिति बृहद्-(र० २. ४. ५) ग्निष्टोमसामैकविंशम्। छन्दोदेवताः विश्वजित्येवोक्ताः। पृष्ठधर्माश्च पृष्ठे॥

इति चतुर्थः साद्यस्क्रः ॥१४॥

---

## श्येनः

अथैष श्येनोऽभिचरन् यजेते-(ष० विं० ब्रा० ३. ८. १)ति षड्विंशब्राह्मणे श्येन उक्तः। तस्य क्लृप्तिमाह—

पवमानस्य जिघ्नतः (सा० १३१०-२) पुनानो अक्रमीदभि (सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७-९)॥ १॥

इति बहिष्पवमानम्॥

---

11. LCV[1-2]. अत्र for तत्र
12. MyBKA. तृचम् for तृचे

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) मित्रं हुवे पूतदक्षम् (सा० ८४७-९) उ त्वा मन्दन्तु सोमाः (सा० १३५४-६) ता हुवे ययोरिदम् (सा० ८५३-५) ॥ २ ॥

इत्याज्यानि ॥

5 अर्षा सोम द्युमत्तम ( सा० ९९४-६ ) इति गायत्रमेकस्याम् । वार्षाहरमेकस्याम् ( र० ३. १. ३ ) । शाक्वरवर्णमेकस्याम् (ऊ० १०. १. १९) । पुनानः सोम धारये-( सा० ६७५-६)ति वषट्कारणिधनमेकस्याम् ( ऊ० १०. १. २० ) । रौरवमेकस्याम् (ऊ० १. १. २) । यौधाजयमेकस्याम् (ऊ० १.

10 १. ३) । औशन-(ऊ० १. १. ४)मन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

गायत्रीबृहत्यौ सामतृचौ ॥ ३ ॥

रथन्तरं च (र० ३. १. ५) वामदेव्यं च ( ऊ० १. १. ५ ) बृहच्च (र० ३. १. ६) कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

15 इति पृष्ठानि ॥

रथन्तरबृहती पराचीषु कार्ये । तथा चैकाहेष्वधीमहे । श्रुतिश्चात्र पराचीषु रथन्तरं भवती-(ष० विं० ब्रा० ४. २. १०)ति ॥ ४ ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रवार्षाहरे (र० ३. १. ४) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति

20 सफौ-(ऊ० १. १. ९)पगत्रे(ऊ० १०. २. १) । पुरोजिती वो अन्धसः (सा० ६९७-९) इति नानदा-( ऊ० २. २. १८ ) न्धीगवे (ऊ० १. १. १२) । कावम् ( ऊ० १. १. १३ )

23 अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ]

---

12. MyBKA. °बृहती for °बृहत्यौ

17. LV², राथन्तरं for रथन्तरं

क्षावर्जमेकर्चाः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

स्तोमक्लृप्तिमाह—

त्रिवृतः पवमानाः । अग्निष्टोमसाम च । तिसृभिराज्यपृष्ठानि ॥ ७ ॥

इति । एकस्यै हिंकरोति । स प्रथमया । एकस्यै हिंकरोति 5
स प्रथमया । एकस्यै हिंकरोति स प्रथमयेति त्रिकस्तोमस्य
विष्टुतिः । एकस्यै हिंकरोति । स प्रथमया । एकस्यै हिंकरोति ।
स मध्यमया । एकस्यै हिंकरोति स उत्तमयेति वा । तदुक्तम्—
एकिन्यावर्तिस्थानगते त्रिष्पुरस्ताद्धिंकारं शाण्डिल्यः त्रिके च प्रथमया
स्तोमपूरणम् । तृचेन धानंजय्यः सकृच्चैकिनि हिंकारम् (ला० श्रौ० 10
६. ६. १२-३) इति । विष्टावाभावात् तृचभागस्थाने कुशाविधानम् ।
एकः पर्यायः । एकस्यै हिंकरोति स प्रथमया । तिसृभ्यो
हिंकरोति स मध्यमया । पञ्चभ्यो हिंकरोति स उत्तमयेति त्रिवृतो
विष्टुतिः । इषोर्व्यत्यासमिषुभ्याम् । तयोः पूर्वा श्येनस्याग्निष्टोमसामनी-
(ला० श्रौ० ६. २. ७-८)ति वचनात् । व्रातीनानां यौधानां पुत्रा 15
अनूचाना अभिचारणीयायामृत्विजः प्रचरन्ति । अर्हतामेव पुत्रा
इति धानंजय्यः । ते च लोहितोष्णीषा लोहितवाससो निवीताः
प्रचरन्ति । गृहीतकाण्डा आरोपितधन्वानश्च दक्षिणावेलायां 18

---

4. KAMyT. चतस्रस्तिसृभिः, B. चतसृभिस्तिसृभिः for च । तिसृभिः
6. BV[1-2]C प्रथमयेति प्रथमयैकत्रिक°, My. प्रथमेति प्रथमैकत्रिक° for प्रथमया... प्रथमयेति त्रिक°.
9. LV[2]. हिंकारः for हिंकारं ; CMyBATV[1-2] त्रिकेति for त्रिके
10. V[1]. Om. हिंकारम् ; MyBKACV[1-2]. after हिंकारम् add : इति
12. MyBKA. एकपर्यायाद्वा, T. एकः पर्यायवाद्वा for एकः पर्यायः
15. LV[1-2]C. व्रतीनां for व्रातीनानां ; My यौधाजयानां for यौधानाम् ; My पुत्रान् for पुत्रा
16. LV[1-2]C. Om. प्रचरन्ति ; LV[2]C. अर्हतामेति for अर्हतामेव
17. KAV[1-2]MyB °वाससा for वाससो
18. KMyBA. after प्रचरन्ति ins. इति

दक्षिणार्थानां गवां लोहितं जनयेयुः । तीक्ष्णैः कण्टकैर्वितुदेयु-
रिति तत्रोपायः सूत्रान्तरोक्तः (Cf. आप० श्रौ० २२. ४. २५)।

श्येनेषुवज्रसंदंशा अभिचारप्रयोजनाः ।
सहैव तद्विष्टुतिभिरुद्धृताः पञ्चविंशकात् ॥
5 षड्विंशब्राह्मणेऽधीताः पुरुषैरिह गम्यते ।
कल्पे तत्तत्प्रदेशेषु तेषां क्लृप्तिर्विधानतः ॥७॥

इति श्येनः ॥१५॥

---

## एकत्रिकः

अथैष एकत्रिक (तां० ब्रा० १६. १६) इत्यनुवाकेनैकत्रिक
10 उक्तः । एकत्रिके सद्यः सत्रं कुर्युः । एकदीक्षस्त्र्युपसत्कः इति गौतमः
(ला० श्रौ० ८. ५. १८)। तस्य क्लृप्तिमाह—

उपास्मै गायता नर (सा० ६५१) इत्येकया
बहिष्पवमानम् ॥ १ ॥

सा चैका रेतस्यैव कार्या । रेतस्यैकत्रिकस्य बहिष्पवमान-
15 (ला० श्रौ० ६. ३. ४)मिति वचनात् ॥

साद्यस्क्राण्याज्यानि ॥ २ ॥

इममूषु त्वमस्माकम् (सा० १४९७-९) मित्रं वयं हवामहे
(सा० ७९३-५) अहमिद्धि पितुः परि-(सा० १५००-२) इयं
19 वामस्य मन्मनः (सा० ९१६-८) इत्याज्यानि ॥ २ ॥

---

3. LV[1-2]C. °यज्ञ° for °वज्र°

6. V[1-2]. कल्पेन for कल्पे तत् ; V[1-2]C. क्लृप्ति for क्लृप्तिर्

10. V[1]C. °सक्तः for सत्कः

इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रम् पुनानः सोम धारये-(सा० ६७५-६)ति उत्सेधः (ऊ० ६. १. ११)। औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

एकर्चाः सर्वे ॥ ३ ॥ 5

रथन्तरं च (र० १. १. १) वामदेव्यं च (ऊ० १.१.५)। श्रायन्तीयस्यर्क्षु निषेधः (ऊ० १०. २. २)। स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥

अथार्भवः— 10

अया रुचा हिरण्या (सा० १५९०-२) इति गायत्रपार्श्वम् (ऊ० १०. २. ३) ॥ ५ ॥

[इत्यार्भवः पवमानः ॥]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

आख्यासिद्ध एवास्य स्तोम इति दर्शयति— 15

एकत्रिकः स्तोमः ॥ ७ ॥

एतदेव व्याचष्टे—

एकयाथ तिसृभिः ॥ ८ ॥

इति। बहिष्पवमानम् एकया स्तोत्रीयया। प्रथमं तिसृभिः। द्वितीयमेकया। तृतीयं तिसृभिरिति। एवं व्यत्यासेन एकत्रिकौ 20 स्तोमावित्यर्थः। एकस्यै हिंकरोति। स प्रथमयेति एकस्तोमस्य 21

---

7. V[1-2] ऋचि for ऋक्षु

14. KA समाख्या for °साम।। आख्यासिद्धः

15. B समाख्यासर्वः, V[1-2]CT समाख्यासिद्धः for आख्यासिद्धः; My. Om. आख्यासिद्धः

विष्टुतिः । स च हिंकारस्त्रिर्वा । सकृदेव वा । त्रिकस्य-
विष्टुतिरुक्ता ॥ ८ ॥

इति एकत्रिकः ॥ १६ ॥

---

## प्रथमो व्रात्यस्तोमः

5 अथ व्रात्यस्तोमाश्चत्वारो निकायिनः । व्रात्या उपनयनादि-
संस्कारहीनाः । तेषां प्रायश्चित्तार्था इमे । व्रात्यस्तोमैः यक्ष्यमाणाः
अनन्यपूर्वाम् असमानगोत्रां भार्यात्वेन अमन्त्रकं परिगृह्य पृथक्-
पृथगग्नीनाधाय यज्ञसाधनानि च संपाद्य दीक्षेरन् ।
ज्योतिष्टोमेनानिष्ट्वेति निदानकारस्य मतम् । इष्ट्वैवेति सूत्रकारस्य ।
10 य एषामध्ययनकुशलो बन्धुमानर्थवान् स गृहपतिः । भक्षांश्च
तमनु भक्षयेयुः । देवा वै स्वर्गं लोकमायन् ( तां० ब्रा० १७.
१. १) इत्यनुवाकेन प्रथमो व्रात्यस्तोमश्चतुष्षोडशिसंज्ञ उक्तः ।
तस्य कल्पः—

ज्योतिष्टोमं बहिष्पवमानम् ॥ १ ॥

15 अग्ने विश्वेभिरग्निभिः ( सा० १५०३-५ ) आ नो मित्रावरुणा
(सा० ६६३-५) आ त्वेता निषीदते-(सा० ७४०-२)न्द्राग्नी
आगतं सुतम् (सा० ६६९-७१) ॥ २ ॥

इत्याज्यानि ॥

उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं
20 चामहीयवं (ऊ० १. १. १) च । पवस्व मधुमत्तम (सा०

---

7. V[1]. अनन्यपूर्वाः समानगोत्राः ; AMyK अनन्यगोत्राः समानगोत्राः, B. अनन्यगोत्रामसमानगोत्राम्, V[2]. अनन्यपूर्वमसमानगोत्राः, L. अनन्यपूर्वां समानगोत्राम् for अनन्यपूर्वां असमानगोत्रां ; A. प्रतिगृह्य for परिगृह्य°

10. K. व्रषभक्षाश्च तमनुभक्षा, A. वृषभक्षाश्च तमनुभक्षं, My व्रषभाक्षश्च तमनुभक्षां, B. भक्षाश्च तमनुभक्षं, V[1-2] भक्षाश्च तमनु for भक्षांश्च तमनु

12. L, चतुष्टोम, V[1-2] चतुष्टोमः for चतुः

६९२-३) इति कालेयम् (ऊ० १०. २. ५)। त्वे सोम प्रथमा वृक्तबर्हिष (सा० १५०६-८) इति यौधाजयम् (ऊ० १०. २. ६)। पुनानः सोमं धारये-(सा० ६७५-६ )ति रौरवम् (ऊ० १. १. २) औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥ 5

[ इति माध्यंदिनः पवमानः ॥ ]

**कालेयमेकर्चे**। ककुब्यत्र मध्यंदिन एकर्चः। तस्यामन्यत्रोत्तमाद् व्रात्यस्तोमा-(ला० श्रौ० ६. ४. ७)दिति **वचनात्**। त्वे सोमे-(सा० १५०६-८)ति **सतो बृहती** ॥ ३ ॥

रथन्तरं च (र० १.१.१) वामदेव्यं (ऊ० १.१.५) चाधाहीन्द्र गिर्वणः (सा० ७१०-२) एन्दुमिन्द्राय सिञ्चते-(सा० १५०९-११)ति द्यौतान-(ऊ० १.०.२.८)मारुते(ऊ० १०.२.९) ॥ ४ ॥ 10

इति पृष्ठानि ॥

**द्यौतानस्य ककुप् प्रथमाथोष्णिक् अथ पुरउष्णिगनुष्टुबिति छन्दांसि। मारुतस्योष्णिक्** ॥ ४ ॥ 15

स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १. १. ८)। परि प्र धन्व (सा० १३६७-९) नदं व ओदतीनाम् (सा० १५१२) इति सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० १०. २. ११)। पर्यूष्वि-(सा० १३६४-६)ति मरुतां संस्तोभः (र० ३. १. ७)। पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १. १. १२) कावम् (ऊ० १. १. १३) अन्त्यम् ॥ ५ ॥ 20

[ इत्यार्भवः पवमानः ॥ ] 23

14. V¹⁻²C. प्रथमोष्णिक्, T. प्रथमदेवोषोष्णिक् for प्रथमाथोष्णिक्

परि प्र धन्वेति अक्षरपङ्क्तिः । नदं व इत्युष्णिक् । पर्यूष्वित्यनुष्टुप् पिपीलिकामध्या । अत्र चतुर्ष्वेकर्चेषु कर्तव्येषु द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणे-( ला० श्रौ० ६. ३. २६ )ति वचनात् ककुप्स्थानापन्नायां द्विपदायां क्रियमाणं सफमारभ्य चतुर्णामेकत्वे प्राप्ते
5 मरुताँ संस्तोभस्यारण्येगेयत्वेनापचितत्वात् तृचे कार्यं । गायत्रं चैकर्चे । प्रथमातिक्रमे हेत्वभावादिति गायत्रसंहितसफश्रुध्यश्यावश्वान्येकर्चानि इत्येकं मतम् । गायत्रमुख्यत्वात् तृच एव कार्यमिति । सफादीनि चत्वारि नैरन्तर्येणैकर्चानीत्यपरम् । तदुक्तम्—
गायत्रमेकर्चे धानञ्जय्यः । तृचे मरुतांसंस्तोभं विपरीतं शाण्डिल्यः (ला० श्रौ०
10 ६.४.८-९) इति ॥ ५ ॥

देवो वो द्रविणोद ( सा० १५१३-४ ) इति यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १०. २. १२) ॥ ६ ॥

## अथ स्तोमविधिः

त्रिवृद् बहिष्पवमानम् । पञ्चदशानि त्रीण्याज्यानि । षोडशमच्छा-
15 वाकस्य । षोडशो माध्यंदिनः पवमानः । सप्तदशानि त्रीणि पृष्ठानि । षोडशमच्छावाकस्य । षोडश आर्भवः । एकविंशोऽग्निष्टोमः ॥ ७ ॥

इति । षोडशस्तोमस्यैवं विष्टुतिः । पञ्चभ्यो हिंकरोति । स तिसृभिः । स एकया । स एकया । पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया । षड्भ्यो हिंकरोति ।
20 स द्वाभ्याम् । स एकया । स तिसृभिरिति । षड्भ्यो हिंकरोति ।
21 स एकया । स द्वाभ्याम् । स तिसृभिरिति वा । तदुक्तम्—

---

2. V[1]. एकैकर्चेषु for एकर्चेषु ; MyBKA. Cm. कर्तव्येषु
4. T. क्रियमाणायां for क्रियमाणं
5. LTC. कार्यः for कार्यं
6. MyBKA. कारणाभावात् for हेत्वभावात्
7. CBKAMyT. after एकर्चानि add : तृचानि
14. MyBKA. अच्छावाकसाम for अच्छावाकस्य
17. B. Om. षोडशस्तोमस्य ... अग्निष्टोमः (p. 187, L. 21)
18. My. Om. पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया

दाशरात्रिकेभ्य एकया ज्यायःसु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत् ।
ब्रह्मायतनीया तु तेषु क्षत्रायतनीया वे-(ला०श्रौ०६.६.१७-८)ति प्रथमायाः
प्रयोगे भूयिष्ठे ब्रह्मायतनीया । मध्यमायाः क्षत्रायतनीयेति ॥ ७ ॥

इति प्रथमो व्रात्यस्तोमः ॥ १७ ॥

---

## द्वितीयः षट्षोडशी वा व्रात्यस्तोमः 5

अथैष षोडशी(तां०ब्रा० १७.२)ति विहितं द्वितीयं व्रात्यस्तोममाह—

एते असृग्रमिन्दवो (सा० ८३०-२) यवं यवं नो अन्धसे-(सा० ९७५-८ )ति पुरस्तात् पर्यायस्य तृचचतुर्ऋचे । आयुष उक्थानि ॥ १ ॥

षोडशाः पवमानाः । अच्छावाकसामानि चैकविंशोऽग्निष्टोमो द्वे चोक्थे ॥ २ ॥ 10

समानमितरं पूर्वेण सस्तोमम् ॥ ३ ॥

इति । पर्यासो बहिष्पवमानस्योत्तमस्तृचः । उपास्मै गायता नरो दविद्युतत्या रुचा ( सा० ६५१-६ ) एते असृग्रमिन्दवो (सा० ८३०-२) यवं यवं नो अन्धसा-( सा० ९७५-८ )पवमानस्य ते 15 कवे (सा० ६५७-९) इति बहिष्पवमानम् । अथाग्निष्टोमसामान्तं पूर्ववत् । प्रमंहिष्ठीयं हारिवर्ण-(ऊ० २. २. ५.६)सुद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि । षोडशं बहिष्पवमानम् । पञ्चदशानि त्रीण्याज्यानि । षोडशमच्छावाकस्य । षोडशो माध्यंदिनः पवमानः । सप्तदशानि त्रीणि पृष्ठानि । षोडशमच्छावाकस्य । षोडश आर्भवः । 20 एकविंशोऽग्निष्टोमः । द्वे चोक्थे । षोडशमच्छावाकस्येति स्तोमक्लृप्तिः ॥ ३ ॥

इति द्वितीयः व्रात्यस्तोमः ॥ १८ ॥ 23

---

2. V[1-2]. प्रथमायां for प्रथमायाः
3. LCV[1-2] ब्रह्मायतनीयाः for ब्रह्मायतनीया ; LCV[1-2]. Om. मध्यमायाः ; LCV[1-2]T च for इति
20. MyBKAT. अच्छावाकसाम for अच्छावाकस्य
21. TMyKA अच्छावाकसाम for माच्छावाकस्य

## तृतीयो द्विषोडशी व्रात्यस्तोमः

अथैष षोडशी-(तां० ब्रा० १७. ३. १)त्युक्तं व्रात्यस्तोममाह—

इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं चामहीयवं (ऊ० १०. २. ४) च। पवस्व मधुमत्तम (सा० 5 ६९२-३) इति कालेयम् (ऊ० १०. २. ५)। त्वं सोम प्रथमा वृक्तबर्हिष (सा० १५०६-८) इति दैर्घश्रवसम् (ऊ० १०. २. ७)। पुनानः सोम धारये-(सा० ६७५-६)ति रौरव-(ऊ० १. १. २) यौधाजये (ऊ० १. १. ३)। श्रुध्यस्य लोके मरुताँ संस्तोभो (र० ३. १. ८) मरुतां संस्तोभस्य श्यावाश्वम् (ऊ० 10 ६. १. १८)। पुरोजिती वो अन्धस (सा० ६९७-९) इति आन्धीगवम् (ऊ० १. १. १२) ॥ १ ॥

त्रिवृतावुत्तरौ पवमानौ ॥ २ ॥

समानमितरं प्रथमेन व्रात्यस्तोमेन सस्तोमम् । ३ ॥

इति। उप-द्वि-त्वे-(सा० ६५१-९)ति त्रिवृद् बहिष्पवमानम्। 15 अग्ने विश्वेभिर् (सा० १५०३-५) आ नो मित्रावरुणा (सा० ६६३-५) आ त्वेता निषीदत (सा० ७४०-२) इन्द्राग्नी आगतं सुत-(सा० ६६९-७१)मित्याज्यानि । त्रीणि पञ्चदशानि। अन्त्यं षोडशम्। इन्द्रायेन्दो (सा० १०७६-८) इति गायत्रं चामहीयवं (ऊ० १०. २. ४) च। पवस्व मधुमत्तम (सा० ६९२-३) इति 20 कालेयम् (ऊ० १०. २. ५)। त्वे सोम (सा० १५०६-८) इति दैर्घश्रवसम् (ऊ० १०. २. ७)। पुनानस्सो (सा० ६७५-६) रौरवयौधाजये (ऊ० १. १. २-३)। स्वास्वौशन-(ऊ० १. १. ४) 23 मन्त्यम्। इति माध्यंदिनस्त्रिवृत्। अन्त्यवर्जमेकर्चाः ॥

---

23. MyBKAT, after माध्यंदिनः ins, पवमान;

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) चाधाहीन्द्र गिर्वणः (सा० ७१०-२) एन्दुमिन्द्राये-(सा० १५०९-११)ति द्यौतानमारुते (ऊ० १०. २. ८-९)। इति पृष्ठानि। त्रीणि सप्तदशानि। उत्तमं षोडशम्। स्वादिष्ठये-(सा० ६८८-९१)ति गायत्रसंहिते (ऊ० १. १. ८)। परि प्र धन्वे(सा० १३६७-९)ति सफम् (ऊ० १०. १. ९)। नदं व ओ-(सा० १५१२)मरुतां संस्तोभः (र० ३. २. ८)। पर्यूष्व-(सा० १३६४-६)ति श्यावाश्वम् (ऊ० ६. १. १८)। पुरोजिती-(सा० ६९७-९)ति आन्धीगवम् (ऊ० १. १. १२)। काव-(ऊ० १.१.१३)मन्त्यम्। इत्यार्भवस्त्रिवृत्। अन्त्यवर्जमेकर्चाः। छन्दांसि प्रथमवत्। देवो वां द्रविणोदा (सा० १५१३-४) इति यज्ञायज्ञीय-(ऊ० १०. २-१२)मग्निष्टोमसामैकविंशम् ॥ ३ ॥

इति तृतीयो व्रात्यस्तोमः ॥ १८ ॥

---

## चतुर्थो व्रात्यस्तोमः (शमनीचामेढ्राणां स्तोमः)

अथैष शमनीचामेढ्राणां स्तोमः (तां० ब्रा० १४. ४. १)। इत्युक्तं चतुर्थव्रात्यस्तोममाह—

अप्रियवती प्रतिपत्। पूर्वस्य प्रातःसवनम् ॥ १ ॥

पवस्व वाचो-(सा० ७७५-७) दविद्युतत्या-(सा० ६५४-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्ने विश्वेभिर् (सा० १५०३-५) आ नो मित्रावरुणा (सा० ६६३-५) आ त्वेता निषीदते-(सा० ७४०-२)न्द्राग्नी आगतं सुत-(सा० ६६९-७१)मित्याज्यानि ॥ १ ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं च (ऊ० १. १. १)। पवस्व मधुमत्तम (सा० ६९२-३) इति कालेयम् (ऊ० १०. २. ५)। त्वे सोम प्रथमा वृक्तबर्हिषे (सा० १५०६-८) इति दैर्घश्रवसम् (ऊ०

१०. २. ७) । पुनानः सोम धारये-( सा० ६७५-६ )ति रथन्तरं ( ऊ० ४. १. ४ ) गौरव-(ऊ० १. १. २)यौधाजये (ऊ० १. १. ३)। वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ २ ॥

5 [ इति माध्यंदिनः पवमानः ]

सर्वे तृचाः ॥ २ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) चाधाहीन्द्र गिर्वण (सा० ७१०-२) एन्दुमिन्द्राय सिञ्चते-(सा० १५०९-११)ति द्यौतान-(ऊ०१०.२.८)मारुते (ऊ०१०.२.९) ॥ ३ ॥

10 इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठया ( सा० ६८९-९१ ) इति गायत्र-संहिते (ऊ० १. १. ८) । जराबोधीयं (ऊ० १०.२.१०) च स्वाशिरामर्कः (र० ३. १. २) । परि प्र धन्व-(सा० १३६७-९) नदं व ओदतीनाम् (सा० १५१२) इति सफ-(ऊ० १०.
15 १. ९)श्रुध्ये (ऊ० १०. २. ११) । पर्यूषु (सा० १३६४-६) इति मरुतां संस्तोभः (र० ३. १. ७) । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० (१. १. १२) । आथर्वणं (र० ३. १. १) बृहच्चाग्नेयं(ऊ० ८. २. ७) कावम् (ऊ० १. १. १३) अन्त्यम् ॥ ४ ॥

20 [ इत्यार्भवः पवमानः ।। ]

सफश्रुध्ये एकर्चे । शिष्टास्तृचः । छन्दांस्युकृतानि ॥ ४ ॥

देवो वो द्रविणोदा ( सा० १५१३-४ ) इति यज्ञायज्ञीय-मग्निष्टोमसाम (ऊ० १०. २. १२) ॥ ५ ॥

अथ स्तोमकल्पः—

25 द्वे त्रिवृती स्तोत्रे । द्वे पञ्चदशसप्तदशे । द्वे एकविंश-

2. LCMyBKAV[1-3]T. Om, रथन्तरं

चतुर्विंशे । द्वे चतुश्चत्वारिंशाष्टाचत्वारिंशे । द्वे त्रिणवत्रयस्त्रिंशे । द्वे द्वात्रिंशे ॥ ६ ॥

इति । द्वात्रिंशे तिस्रो विष्टुतीः कुर्यादिति धानंजय्यः । तासां पर्यायकृतिप्रयोगौ चतुश्चत्वारिंशेन व्याख्यातौ (ला० श्रौ० ६. ७. १८-९) इति सूत्रम् । तत्र प्रथमा विष्टुतिर्यथा—एकादशभ्यो हिंकरोति । स तिसृभिः स सप्तभिः स एकया दशभ्यो हिंकरोति । स एकया स तिसृभिः । स षड्भिरेकादशभ्यो हिंकरोति । स सप्तभिः स एकया स तिसृभिरिति । एवमुत्तरेऽपि द्रष्टव्ये । तासां च सवनसमीषन्ती स्तोत्रसमीषन्तीति प्रयोगद्वयं च चतुश्चत्वारिंशवत् । इह तु द्वात्रिंशचतुश्चत्वारिंशयोर्द्वयोरपि प्रथमैकविष्टुतिः कार्या । न तु समीषन्ती । तथा कुर्यादहर्भाजि पथ्याऽन्यत्रे(ला० श्रौ० ६.२.२३-४)ति वचनात् ॥ ६ ॥

इति चतुर्थो व्रात्यस्तोमः ॥ २० ॥

---

## अग्निष्टुत् प्रथमः

अथाग्निष्टुतश्चत्वारो निकायिनः । इन्द्रो वै त्रिशिरसम् (तां० ब्रा० १७. ५. १) इत्यनुवाके सामान्येनाग्निष्टुतां समष्टिर्वर्ण्यते । त्रिवृदग्निष्टोमः (तां० ब्रा० १७. ६) इत्यनुवाकेन प्रथम उक्तः । एतस्यैव रेवतीषु द्वितीयः । ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेतेति तृतीयः । सप्तदशेनाग्निष्टुतां नाद्यकाम इति चतुर्थः ।

---

4. MyBKAT. पर्याय इति for पर्यायकृति
8. MyKA Om. स सप्तभिः ... चतुश्चत्वा° (L. 10)
11. C. प्रथमया for प्रथमा
16. CB. अनुवाकेन for अनुवाके
18. MyBKAT. Om. अग्निष्टुता ... सप्तदशेन(L. 19)

सूत्रे तु षट् पञ्च वाग्निष्टुत इत्यपि पक्षद्वयमुपन्यस्य चत्वार इत्ययमेव पक्षः स्थापितः । षडग्निष्टुतः त्रिवृज्ज्योतिष्टोमश्चाद्यौ स्वर्कवारवन्तीयावित्यादिना । अग्निष्टुत्सु सोमाप्ययनमन्त्रे आप्यायता-मग्नय एकधनविद आ तुभ्यमग्निः प्यायतामा त्वमग्ने प्यायस्वेत्यूहः ।
5 सुब्रह्मण्यायां तु सुब्रह्मण्योमिति त्रिर्वचनानन्तरमाग्नेयो निगदो वक्तव्यः । तत्र गौतमीयं मतम्—अग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरसब्राह्मणाङ्गिरस ब्रुवाणेत्युक्त्वा त्र्यहे सुत्यामग्नयो ब्रह्माण आगच्छतेत्यादि ब्रूयादिति । धानंजय्यमतं तु—अग्न आगच्छ रोहितव आगच्छ
10 भरद्वाजस्याजसहसस्सूनो वारावस्कन्दिन्नुषसोजार आङ्गिरस-ब्राह्मणाङ्गिरसब्रुवाण त्र्यहे सुत्यामागच्छाग्नयो ब्रह्माण आगच्छतेत्यादि ब्रूयादिति । आगच्छतेति पूर्वं देवाह्वानाद्धानंजय्य (ला० श्रौ० १. ३. ४) इति वचनात् । धानंजय्यमतेऽग्नय इत्यस्मात् पूर्व-मागच्छतेति वक्तव्यम् । न तु गौतममते । तत्र पूर्वस्मिन्
15 निगदे विचर्षणेत्यत्र विरमेत् । उत्तरस्मिन् जारेत्यत्र । शेषं प्रकृतिवत् ॥

प्रथममग्निष्टुतमाह—

अग्न आयूंषि पवसे (सा० १५१८-२०) अग्ने पावक शोचिषा-( सा० १५२१-३ )ग्निर्मूर्धा दिवः ककुत् ( सा०
20 १५३२-४ )। १ ॥

21 इति बहिष्पवमानम् ॥

---

1. BMyKAT. Om. तु
3. $CV^{1-2}$. आप्यायनम् for आप्यायताम्
8. MyBTKA. ब्राह्मणः for ब्रह्माण ; T. मागच्छ for आगच्छत
9. $V^1$. °मते for °मतं ; T. रोहितश्व for रोहितव
11. C. Om. आगच्छत
12. L. Strikes ब्रूयादिति ; C. Om. ब्रूयादिति ... इत्यस्मात् (L. 13)

अग्निष्टुतस्तु सर्वेषां स्तोत्राणामाग्निर्देवता ॥ १ ॥

अग्न आयाहि वीतये ( सा० ६६०-२ ) कस्ते जामिर्जनानाम् ( सा० १५३५-७ ) ईडेन्यो नमस्योऽ ( सा० १५३८-४० ) ग्निर्वृत्राणि जङ्घनत् ( सा० १३९६-८ ) ॥ २ ॥

इत्याज्यानि ॥

उच्चे बृहन्तो अर्चय ( सा० १५४१-३ ) इति गायत्रम् एकस्याम् । आमहीयवमेकस्याम् ( ऊ० १०.२.१४ ) । जराबोधीयमेकस्याम् ( ऊ० १०. २. १५ ) । पाहि नो अग्न एकया ( सा० १५४४-५ ) इति यौधाजयं तिसृषु ( ऊ० १०. २. १९ ) । इनो राजन्नरतिः समिद्धः (सा० १५४६-८) इत्यौशनम् ( ऊ० १०. २. २० ) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

एना वो अग्निं नमसा ( सा० ७४९-५० ) कया ते अग्ने अङ्गिरः (सा० १५४९-५१) इति रथन्तरं (र० १. १. २) च वामदेव्यं ( ऊ० ११. १. १ ) च । अग्न आयाह्यग्निभिर् ( सा० १५५२-३ ) अच्छा नः शिरशोचिषम् (सा० १५५४-५) इति नौधस-(ऊ०११.१.२) कालेये (ऊ० ११. १. ३) ॥४॥

इति पृष्ठानि ॥

अदाभ्यः पुर एते-( सा० १५५६-८ )ति गायत्रसंहिते (ऊ० ११. १. ४) । भद्रो नो अग्निराहुतोऽ-(सा० १५५९-६०) ग्ने वाजस्य गोमतः (सा० १५६१-३) इति सफ-(ऊ० ११. १. ५) पौष्कले ( ऊ० ११. १. ६ ) । विशोविशो वो अतिथिम् (सा० १५६४-६) इति श्यावाश्वा-(ऊ० ११.१.८) न्धीगवे (ऊ० ११. १. ९) । समिद्धमग्निम् (सा० १५६७-९) इति यज्ञायज्ञीयम् (ऊ० ११. १. ११) अन्त्यम् ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

**यज्ञायज्ञीयं तिसृषु । शिष्टान्याद्यासु ।** संभवति स्तोमेऽन्त्यम् सर्वत्र तृच (ला० श्रौ० ६.४.२) इति वचनात् । एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यात् । द्वौ तस्यामेवे-(ला० श्रौ० ६. ३. १२)ति च ॥ ५ ॥

उप त्वा जामयो गिर (सा० १५७०-२) इति वायव्यासु वारवन्तीयम-
5 ग्निष्टोमसाम (ऊ० ३. २. ७) ॥ ६ ॥

वायव्यास्विति वचनमुत्तरव्यवहारार्थम् । यस्य वायव्यास्वग्निष्टोम (आ० क० ९. १. ८) इति हि सत्रे वक्ष्यति । सर्वाणि स्तोत्राणि त्रिवृन्ति । उभौ त्रिवृतौ (आ० क० ३. २२. ३) इति वक्ष्यमाणत्वात् ॥ ६ ॥

10 [ इति अग्निष्टुत् प्रथमः ॥ २१ ॥ ]

---

## अग्निष्टुत् द्वितीयः

**प्रथमस्य क्लृप्तिं द्वितीयस्यातिदिशति—**

एषैवोत्तरस्य क्लृप्तिः ॥ १ ॥

**इति । विशेषमाह—**

15 तस्य रेवतीषु वारवन्तीयमग्निष्टोमसाम (ऊ० ३. २. ७) ॥ २ ॥

**इति । तस्येन्द्रो देवता ॥ २ ॥**

**प्रथमद्वितीययोस्तोममाह—**

उभौ त्रिवृतौ ॥ ३ ॥

इति । इतःप्रभृति सुब्रह्मण्यायां देवा ब्रह्माण इति वा ।
20 उत्तरेष्वग्नय इति स्थाने सुब्रह्मण्यायां देवा इति ब्रूयात् । ऐन्द्रत्वादग्निष्टोमसाम्न इत्येके (नि०सू०६.१३) इति निदानवचनात् ॥३॥

22 इति अग्निष्टुत् द्वितीयः ॥ २२ ॥

---

17. MyBKA. स्तोमक्लृप्तिम् for स्तोमम्

21. LCV1-2 Om. इत्येके

## अग्निष्टुत् तृतीयः

**तृतीयमग्निष्टुतमाह—**

उद्धरति जराबोधीयम् । यौधाजयात् पूर्वं रौरवम् (ऊ० १०. २. १६) । पौष्कलस्य लोके श्रुध्यम् (ऊ० ११. १. ७) । श्यावाश्वस्य यज्ञायज्ञीयम् (ऊ० ११. १. १०) । यज्ञायज्ञीयस्य काावम् (ऊ० ११. १. १२) ॥ १ ॥ 5

समानमितरं पूर्वेण ॥ २ ॥

ज्योतिष्टोमाः स्तोमाः ॥ ३ ॥

इति । अग्न आयूंषि पवसे ( सा० १५१८-२० ) अग्ने पावक रोचिषा (सा० १५२१-३) अग्निर्मूर्धा दिवः ककुत् (सा० १५३२-४) 10 इति बहिष्पवमानं त्रिवृत् ॥

अग्न आ याहि वीतये (सा० ६६०-२) कस्ते जामिर्जनानाम् (सा० १५३५-७) ईडेन्यो नमस्योऽ-(सा० १५३८-४०)ग्निर्वृत्राणि जङ्घनत् (सा० १३८६-८) इत्याज्यानि पञ्चदशानि ॥

उच्चे बृहन्तो अर्चय ( सा० ५५४१ ३ ) इति गायत्रं 15 चामहीयवं ( ऊ० १०. २. १४ ) च । पाहि नो अग्न एकये-(सा० १५४४-५)ति रौरव-(ऊ० १०.२.१६) यौधाजये (ऊ० १०. २. १९) । इनो राजन्नरतिर् ( सा० १५४६-८ ) इत्यौशन(ऊ० १०. २. २०)मन्त्यम् । इति पञ्चदशो माध्यंदिनः ॥

एना वो अग्निं नमसा ( सा० ७४९-५० ) कया ते अग्ने 20 अङ्गिर (सा० १५४९-५१) इति रथन्तरं ( र० १. १. २ ) च वामदेव्यं (ऊ० ११. १. १) च । अग्न आयाह्यग्निभिर् (सा० 2

---

8. PT °ष्टोमस्तोमः ; $V^{1-2}$ °ष्टोमस्तोमाः for °ष्टोमाः स्तोमाः ; MyBKA. Om. स्तोमाः

11. MyBKA. Om. त्रिवृत्

14. $LV^{1-2}C$. Om. पञ्चदशानि

19. MyBKA. माध्यंदिनः पवमानः पञ्चदशः for पञ्चदशो माध्यंदिनः

१५५२-३) अच्छा नः शीरशोचिषम् (सा० १५५४-५) इति नौधसकालेये (ऊ० ११. १. २-३)। इति पृष्ठानि सप्तदशानि ॥

अदाभ्यः पुर एते-(सा० १५५६-८)ति गायत्र-संहिते (ऊ० ११. १. ४)। भद्रो नो (सा० १५५९-६०) अग्ने वाजस्ये 5 (सा० ११६१-३)ति सफ-(ऊ० ११. १. ५)श्रुध्ये (ऊ० ११. १. ७)। विशोविशो वो अतिथिम् (सा० १५६४-६) इति यज्ञायज्ञीया-(ऊ० ११. १. १०)न्धीगवे (ऊ० ११. १. ९)। समिद्धमग्निम् (सा० १५६७-९) इति काव-(ऊ० ११. १. १२)मिति सप्तदश आर्भवः। सफश्रुध्ये एकर्चे ॥

10 रेवतीषु (सा० १०८४-६) वारवन्तीय-(ऊ० ३. २. ८) मग्निष्टोमसामैकविंशम् ॥ ३ ॥

इति अग्निष्टुत् तृतीयः ॥ २३ ॥

---

## अग्निष्टुत् चतुर्थः

चतुर्थमग्निष्टुतमाह—

15 अवा नो अग्न ऊतिभिर् (सा० १५२४-६) अग्निं हिन्वन्तु नो धियः (सा० १५२७-३१) इति पुरस्तात् पर्यासस्य तृच-पञ्चर्चे। पाहि नो अग्न एकये-(सा० १५४४-५)ति रौरवं तिसृषु (ऊ० १०. २. १६)। दैर्घश्रवसमेकस्याम् (ऊ० १०. २. १७)। समन्तं विष्टारपङ्क्तौ (ऊ० १०. २. १८)। 20 यौधाजयं तिसृषु (ऊ० १०. २. १९) ॥ १ ॥

समानमितरं पूर्वेण ॥ २ ॥

सर्वः सप्तदशः ॥ ३ ॥

अग्न आयूंषि पवसे (सा० १५१८-२०) अग्ने पावक रोचिषा (सा० 24 १५२१-३) अवा नो अग्न ऊतिभिर् (सा० १५२४-६) अग्निं

---

16. MyBKACV[1-2] तृचे for तृच

हिन्वन्तु नो धियोऽ-(सा० १५२७-३१)ग्निं मूर्द्धा (सा० १५३२-४) इति बहिष्पवमानम् ॥

अग्न आ याहि ( सा० ६६०-२ ) कस्ते जामिर् (सा० १५३५-७) ईडेन्यो नमस्योऽ-(१५३८-४०)ग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) इत्याज्यानि ॥ 5

उत्ते बृहन्तो (सा० १५४१-३) गायत्रं चामहीयवं (ऊ० १०. २. १४) च। पाहि नो अग्न (सा० १५४४-५) इति रौरवं (ऊ० १०. २. १६) तिसृषु। दैर्घश्रवसमेकस्याम् (ऊ० १०. २. १७)। समन्तं (ऊ० १०. २. १८) विष्टारपङ्क्तौ। पाहि विश्वस्माद् (सा० १५४५) इत्यस्यामृचि यौधाजयं (ऊ० १०. २. १९) तिसृषु। इनो राजन्न् ( सा० १५४६-८ ) इति औशन-(ऊ० १०. २. २०)मन्त्यम् ॥ 10

एना वो (सा० ७९९-८००) कया ते अग्न (सा० १५४९-५१) इति रथन्तरं (र० १. १. २) च वामदेव्यं (ऊ० ११. १. १) च। अग्न आयाह्यग्निभिर् (सा० १५५२-३) अच्छा नः शीरशोचिषम् (सा० १५५४-५) इति नौधसकालेये (ऊ० ११.१.२-३) इति पृष्ठानि ॥ 15

अदाभ्यः पुर एते-(सा० १५५६-८)ति गायत्र-संहिते (ऊ० ११. १. ४)। भद्रो नो (सा० १५५९-६०) अग्ने वाजस्ये-(सा० १५६१-३)ति सफ-(ऊ० ११. १. ५)श्रुध्ये (ऊ० ११. १. ७)। विशोविशो वो अतिथिम् ( सा० १५६४-६ ) इति यज्ञायज्ञीया-(ऊ० ११. १. १०)न्धीगवे (ऊ० ११. १. ९)। समिद्धमग्निं समिधा गिरा (सा० १५६७९) इति काव-(ऊ० ११. १. १२) मन्त्यम्। सफश्रुध्ये एकर्चे ॥ 20 24

---

17. B. after पृष्ठानि adds : सप्तदशानि

24. LV[1]C. एकर्चयोः for एकर्चे

रेवतीषु ( सा० १०८४-६ ) वारवन्तीय-( ऊ० ३. २. ८ ) मग्निष्टोमसाम। सर्वाणि स्तोत्राणि सप्तदशानि ॥ ३ ॥

इति अग्निष्टुत् चतुर्थः ॥ २४ ॥

---

## प्रजापतेरपूर्वः

5 अथ चत्वारस्त्रिवृतोऽग्निष्टोमाः। तेषां प्रथमः प्रजापतेरपूर्वः। त्रिवृदग्निष्टोमस्तस्यानिरुक्तं प्रातःसवनम् ( तां० ब्रा० १७. १०. १ ) इत्यनुवाकेनोक्तं कंचिदर्थमर्हन्यो न प्राप्नुयात् स त्रिवृतां प्रथमेन यजेत। तस्यानिरुक्तप्रातःसवनत्वात्। सुब्रह्मण्याह्वाने शक्रागच्छ विश्वे ब्रह्माण इति विशेषः। इन्द्रं शक्रेति ब्रूयात्। विश्वे इति 10 देवान्। अनिरुक्तेऽनिरुक्तप्रातःसवनयोश्चे-(ला० श्रौ० १. ४. ५-६)ति वचनात् ॥

स्तोमक्लृप्तिमाह—

पवस्वेन्दो वृषा सुत (सा० ६७८-८०) एते असृग्रमिन्दवः (सा० ८३०-२) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

15 इति बहिष्पवमानम् ॥

त्रात्यान्याज्यानि ॥ २ ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रमेकस्याम्। आमहीयवमेकस्याम् ( ऊ० १. १. १ )। जराबोधीयमेकस्याम (ऊ० ११. १. १४)। पुनानः सोम धारये-(सा० ६७५-६)ति 20 यौधाजयं तिसृषु (ऊ० १. १. ३)। नौधसस्यर्क्षु अभीवर्तो ब्रह्मसाम (ऊ० ६. २. १४) ॥ ३ ॥

22 समानमितरं ज्योतिष्टोमेन ॥ ४ ॥

---

5. L. after अपूर्वः ins. इति संज्ञः
20. LTC. after तिसृषु ins. स्वासु

इति । पवस्वेन्दो वृषा सुत (सा० ६७८-८०) एते असृग्रमिन्दवः (सा० ८३०-२) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

होता देवो अमर्त्यः (सा० १४७७) ता नः शक्तं पार्थिवस्य (सा० १४६५-७) सुरूपकृत्नुमूतये (सा० १०८७-९) आसुते 5
षिञ्चत श्रियम् (सा० १४८०-३) इत्याज्यानि । अनिरुक्तप्रातः-सवनत्वात् होता देव इत्यत्र देवशब्दस्थाने यज्ञशब्दो वक्तव्यः । तथा चोपहव्यमनिरुक्तमधिकृत्य सूत्रम्—होता देवो महीमित्रस्येत्येते होता यज्ञं महीयज्ञस्येति ब्रूयुर् (ला० श्रौ० ८. ९. ४) इति । उच्चा ते (सा० ६७२-४) इति गायत्रामहीयवे (ऊ० १. १. १) जराबोधीय- 10
(ऊ० ११. १. १४)मिति सामतृचः । पुनानः सोम धारये-(सा० ६७५-६)ति यौधाजयं (ऊ० १. १. ३) तिसृषु । औशन-(ऊ० १. १. ४)मन्त्यम् । रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । नौधसस्यक्ष्वैभीवर्तौ (ऊ० ६. २. १४) ब्रह्मसाम । स्वासु कालेय-(ऊ० १. १. ७)मिति पृष्ठानि ॥ 15

स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १.१.८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-पौष्कले (ऊ० १.१.९-१०) । पुरोजिती वो (सा० ६९७-९) इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२) । काव-(ऊ० १. १. १३)मन्त्यम् । काववर्ज-मेकर्चाः ॥ 20

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४) । सर्वं त्रिवृत् ॥ ४ ॥

इति प्रजापतेरपूर्वः ॥ २५ ॥ 22

---

10. MyBKA. गायत्रं चामहीयवं च for गायत्रामहीयवे

## बृहस्पतिसवः

बृहस्पतिसवो द्वितीयः। त्रिवृदग्निष्टोमस्तस्य प्रातःसवने (तां० ब्रा० १७. ११) इत्यनुवाकेनोक्तः। यं ब्राह्मणाः स्वराजानः पुरस्कुर्वीरन् स बृहस्पतिसवेन यजेते-(ला० श्रौ० ८. ७. ५)त्यादि सूत्रम्। तेन
5 ब्राह्मणस्यैवास्मिन्नधिकारो न राजन्यवैश्ययोः। तस्य क्लृप्तिमाह—

एष एवोत्तरस्य माध्यंदिनः ॥ १ ॥

ज्योतिष्टोमसमानमितरं सर्वम् ॥ २ ॥

इति। योऽयं प्रजापतेरपूर्वस्य माध्यंदिनः पवमानः स एव बृहस्पतिसवस्य। अन्यत् सर्वं ज्योतिष्टोमवदित्यर्थः। उप-दवि-
10 पवे-(सा० ६५१-२)ति बहिष्पवमानम्। अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रमाद्यायाम्। आमहीयवं (ऊ० १. १. १) द्वितीयायाम्। जराबोधीयं (ऊ० ११.१.१४) तृतीयायाम्। पुनानः सोम धारये-(सा० ६७६-७)ति यौधाजयं (ऊ० १. १. ३) तिसृषु। औशन-
15 (ऊ० १. १. ४)मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफपौष्कले (ऊ० १. १. ९-१०)। पुरोजिती वो अन्धस (ऊ०
20 ६९७-९) इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२)। काव-(ऊ० १. १. १३)मन्त्यम्। कावं तिसृषु। शिष्टान्याद्यासु॥

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। सर्वं त्रिवृत्।
23 केचिदत्र कल्पे माध्यंदिनशब्दं माध्यंदिनसवनवाचिनं मत्वा

3. T. बृहत्, V[1]My. पुनः for पुरः
6. MyBKATCV[3]. एषा for एषः
7. TLCV[1-3]. ज्योतिष्टोमम् for ज्योतिष्टोमसमानम्
8. T. BMyKA. योय: for योऽयं ; V[1]. Om. पवमानः
10. T. मित्रावरुण° for मित्रायाहि°
23. LC.V[1-3]. कल्पयन्ति for कल्पे

प्रजापतेरपूर्वस्य माध्यंदिनं सवनं बृहस्पतिसवेऽतिदिश्यते इत्यङ्गीकुर्वाणा नौधसस्यर्क्षु अभीवर्तो ब्रह्मसामेत्याहुः । तदयुक्तम् । यतोऽयं माध्यंदिनशब्दः कल्पे सर्वत्र माध्यंदिनस्य पवमानस्यैव वाचको न तु सवनस्य । तथा हि—सोमः पवते ( सा० ९४३-५ ) जनित्र-(ऊ० ८. २. १)मन्त्यं माध्यंदिनस्य । प्रत आश्विनी-(सा० 5 ८८६-८)रिति लौश-(ऊ० ८. ८. २)मन्त्यम् आर्भवस्य । इत्यादौ तावत् पवमानस्यैव वाचक इति सुस्पष्टम् । तथा द्वितीयमेकस्तोममधिकृत्य वक्ष्यति । गोराज्ये बहिष्पवमानमिन्द्रस्तोमस्य माध्यंदिनः । पुनानः सोम धारयेति बृहती । स्वासु श्यैतम् । समानमितरं प्रथमेन साहस्रेणे-(आ०क० ६. २. १)ति । तत्र स्वासु श्यैतमिति वचनात् 10 अवगम्यते पवमानस्यैवायं वाचक इति । यदि हि सवनस्य वाचकः स्यात्तदा इन्द्रस्तोमे स्वास्वेव श्यैतस्य विधानादिति तेनैव सिद्धत्वाद्वचनमनर्थकं स्यात् । किं च बृहस्पतिसवमेवाधिकृत्य मध्ये पृष्ठ्ये वक्ष्यति—क्लृप्तमा बृहस्पतिस्तोमात् । तस्याभीवर्तो ब्रह्मसामे-(आ० क० सू० १०. १)ति । तत्र यदि पूर्वमेव ब्रह्मसामत्वेन 15 विहितः स्यात्तदा पुनः किं तद्विधानेन ? तस्मात्तन्नौधसमेव ब्रह्मसाम बृहस्पतिसवस्येति सिद्धम् ॥ २ ॥

इति बृहस्पतिसवः ॥ २६॥ 18

---

1. LV[1-2]. अतिदिशन्ति for अतिदिश्यते ; C. Om. अतिदिश्यते ; C. अतिदेशं, L. ते एतमतिदेशम्, for इति ; V[1-3] Om. इति
7. LV[1-3]C. द्वीतीयस्तोमम् for द्वितीयमेकस्तोमम्
9. LV[1-3]C. Om. समानमितरं ... स्वासु श्यैतम्
12. BMyKA. Om. इति
14. BMyKA. तदुक्तम् for क्लृप्तमा ; L. क्लप्तमा° ins. पञ्चदशं ; BMyKAT. °स्तोमाः for स्तोमात्

## इषुः

इषुस्तृतीयः षड्विंशब्राह्मणे विहितः । त्रिवृदग्निष्टोमः । तस्येषुं विष्टुतिं कृत्वा (ष० वि० ब्रा० ३. ९) इत्यनुवाकेन । तस्य कल्पः—

शाक्वरवर्णस्य लोके जराबोधीयम् (ऊ० ११. १. १५) । वषट्कारणिधनस्य सप्तहम् (र० ३. १. ९)। बृहतो वषट्कारणिधनम् (सा० १५७३-४; ऊ० ११. १. १६) ॥ १ ॥

समानमितरच्छयेनेन ॥ २ ॥

पवमानस्य जिघ्नतः (सा० १३१०-२) पुनानो अक्रमीदभि (सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) इन्द्रं हुवे पूतदक्षम् (सा० ८४७-९) उ त्वा मन्दन्तु सोमाः (सा० १३५४-६) ता हुवे ययोरिदम् (सा० ८५३-५) इत्याज्यानि ॥

अर्षा सोम द्युमत्तम (सा० ९४४-६) इति गायत्रं वार्षाहरं (र० ३. १. ३) जराबोधीय-(ऊ० १. १४. ५)मिति सामतृचः । पुनानः सोम धारये-(सा० ६७५-६)ति सप्तहं (र० ३. २. ९) रौरवं (ऊ० १. १. २) यौधाजय-(ऊ० १. १. ३)मिति सामतृचः। औशन-(ऊ० १. १. ४)मन्त्यम् ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च वषट्कारणिधनं (ऊ० १०. १. २०) च कालेयं (ऊ० १. १. ७)चेति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रवार्षाहरे (र० ३. १. ४)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफौपगवे (ऊ० १०. २. १)। पुरोजिती-(सा० ६९७-९)ति नानदा-

(ऊ० २. २. १८)न्धीगवे (ऊ० १. १. १२) । काव-(ऊ० १.१.१३) मन्त्यम् । कावव्यतिरिक्ता एकर्चाः ॥

यज्ञायज्ञीयम-(ऊ० १. १. १४)ग्निष्टोमसाम । सर्वं त्रिवृत् । त्रिवृतः इषुसंज्ञे द्वे विष्टुती षड्विंशब्राह्मणे विहिते । एकस्यै हिंकरोति । स प्रथमये-( ष० विं० ब्रा० ३. ९. )त्यादिना । 5
तयोः प्रथमया प्रथमस्याज्यस्य कुशाविधानम् । द्वितीयया द्वितीयस्य । पुनः प्रथमया तृतीयस्य । इत्येवम् । प्रथमाज्य-प्रभृति व्यत्यस्ताभ्यामिषुभ्यां कुशाविधानम् । इषोर्व्यत्यासमिषुभ्यां (ला० श्रौ० सू० ६.२.७) इति वचनात् । ऋत्विजां लोहितोष्णीषत्वादि सर्वं श्येनवत् ॥ २ ॥ 10

इति इषुः ॥ २७ ॥

---

## सर्वस्वारः अथवा शुनस्कर्णस्तोमः

सर्वस्वारश्चतुर्थः । त्रिवृदग्निष्टोमः स सर्वस्वारः (तां ब्रा० १७. १२. १) इत्यनुवाकेनोक्तः । स एव शुनस्कर्णस्तोम इत्याख्यायते । तस्य कल्पः— 15

प्र सोमासो अधन्विषुः (सा० ९७१-३) प्र स्वानासो रथा इवा-(सा० ११२९-२१)सृग्रमिन्दवः पथा (सा० ११२८-३०) ॥ १ ॥

इति बहिष्पवमानम् ॥

सर्वे तृचाः । सर्वे सर्वस्वारे (ला० श्रौ० सू० ६. ३. ९) इति वचनात् ॥ १ ॥ 20
उप प्रयन्तो अध्वरम् (सा० १३७५-८०. ८२) प्र वो मित्राय 21

---

2. L. °व्यतिरिक्तं for °व्यतिरिक्ताः
7. LV1-2C. प्रथमया for प्रथमा
8. L. V1-2C. Om. कुशाविधानम् । इषोर्व्यत्यासमिषुभ्याम्
19. BKA, Om, सर्वे ; TMyC, Om, second सर्वे

गायत (सा० ११४३-५) प्र व इन्द्राय मादनम् (सा० ७१६-८) प्र वामर्चन्त्युक्थिनः (सा० १५७५. ७-८) ॥ २ ॥

इत्याज्यानि ॥

उपप्रयंचतुर्ऋचस्य तृतीयामृचमुद्धरेत् । प्र वामर्चं चतुर्ऋचस्य
5 द्वितीयाम् । तृतीयां सर्वस्वारस्वरसाम्नोः । प्र वामर्चन्तीति द्वितीयाम् (ला० श्रौ० सू० ६. ४. ११-२) इति वचनात् ॥ २ ॥

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रम् । प्र सोम देववीतये (सा० ७६७-८) इति गौङ्गवं (ऊ० ११. १. १७) । प्र तु द्रव (सा० ६७७-९) इत्यौशनम् (ऊ० १.
10 १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ]

वामदेव्यं (ऊ० १. १. ५) च मैधातिथं (ऊ० ६. १. १५) च हारायणं (ऊ० ११. १. १८) च कौल्मलबर्हिषं (सा० १५८१-२ ; ऊ० ११. १. १९) च ॥ ४ ॥

15 इति पृष्ठानि ॥ ४ ॥

होतुः पृष्ठस्य गायत्री छन्दः । शिष्टानां बृहती ॥ ४ ॥

प्र सोमासो मदच्युतः (सा० ७६९-७१) इति गायत्रं चाशुभार्गवं (ऊ० ११. १. २०) च । अभि द्युम्नं बृहद्यशः
19 (सा० १०११-२) प्र धन्व सोम जागृविर् (सा० ५६७)

---

1. BMyKAT. after गायत ins इति ; BMyKA. Om. प्र व इन्द्राय मादनम्
4. V[1]. Om. प्रवामर्चं ··· स्वरसाम्नोः
5. MyBKA. Om. सर्वं ; MyBKAT. Om. °स्वर°
7. T. after गायत्रम् adds : प्र सोम देववीतये इति गौरीवितम्
8. MyBKA. गौरीवितं for गौङ्गवम्
16. LCV[1-2]TC. गायत्रं for गायत्री

इति सफ-(ऊ० ९. १. १३) सत्रासाहीये (ऊ० ११. २. १)। प्र सुन्वानायान्धसः ( सा० १३८६-८ ) इति श्यावाश्वौ-(ऊ० ११. २. २) दले (ऊ० ११. २. ३) । प्रो अयासीद् (सा० ११५२-४) इति कावम् ( ऊ० ६. २. १० ) अन्त्यम् ॥ ५ ॥ 5

[ इत्यार्भवः पवमानः ]

अन्त्यवर्जमेकर्चाः ॥ ५ ॥

प्र दैवोदासो अग्निर् (सा० १५१७, १५१६, १५१५) इति यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० ११. २. ४)। दैर्घश्रवसं स्वासु यदि जीवेत् ॥ ६ ॥ 10

सोऽयं सर्वस्वारो मरणकामयज्ञः। तस्य सूत्रम्—सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतेत । यथा सौत्येऽहनि प्रेयामि-(ला० श्रौ० सू० ८. ८. १)त्यादि तस्य कृतान्तं दक्षिणे-(ला० श्रौ० सू० ८. ८. ४२) त्यन्तम् । तत्र दीक्षावृद्धिः भक्षणं प्राणभक्षण-मित्यादि मरणोपाय उक्तः । आर्भवे पवमाने स्तूयमाने 15 दक्षिणेनौदुम्बरीं गत्वा कृष्णाजिनमुपस्तीर्य दक्षिणाशिराः प्रावृतो निपद्यत इति मरणकालश्चोक्तः। तदानीं मृतं हविर्भिः सहर्जीषै-राहवनीये प्रहृत्य प्रव्रजेयुरिति शाण्डिल्यः। नेदिष्ठिना समापयेयुः 18

---

8. प्र दैवो॰ inverse order. cf. तृचोत्तमायां प्रतिलोमः ॥ (ला० श्रौ० सू० ६. ३. २)

13. MyBKA. Om. आदि ; MyBKATV[1-2]. कृतान्नं for कृतान्तं ;

14. TV[1-2]BMyKAC. दीक्षायाः for दीक्षा ; MyBK. भक्ष प्राणाः प्राणभक्षम्, T. भक्षाणां प्रणभक्षः, A. भक्षप्रमाणाः प्राणभक्षम् for भक्षणं प्राणभक्षणम् ; C. Om. भक्षणं

17. BMyBKAT. अमृतं for मृतं ; T. जीवैः for ऋजीषैः

18. V[1-2]CMyBAK. before इति ins. शेषम्

इति धानंजय्यः। तत्र शेषसमापनपक्षाश्रयेण कल्पकारोऽग्निष्टोमसाम व्यधात् ॥

दैर्घश्रवसं स्वासु यदि जीवेदिति । उक्ते काले यदि न म्रियेत तदा स्वासु दैर्घश्रवसमग्निष्टोमसाम कार्यम्। किमर्थमिति
5 चेत्। तत्रोक्तं निदानकारेण दैर्घश्रवसं स्वासु यदि जीवेदिति तु भवति। न चेदशकन्मर्तुमुत दीर्घं शृणुयादित्यपि प्रयाणार्थं स्या-( नि० सू० ७. २ ) दिति ॥ ६ ॥

सर्वस्वारः ॥ ७ ॥

सर्वस्वार इति समाख्याकथनं सर्वाणि स्वाराणि अस्येति
10 समाख्ययैवात्र जामिकल्पो न दोषायेति सूचनार्थम् । तथा च सूत्रवचनात्तन्त्रविलोपो यथा जामिकल्पः—सर्वस्वार इति ॥ ७ ॥

प्रजापतेरपूर्वमारभ्य चतुर्णां स्तोमक्लृप्तिमाह—

सर्वे त्रिवृतः ॥ ८ ॥

इति ॥ ८ ॥

15 शान्तिर्वामदेव्यम् । शान्तिर्वामदेव्यम् ॥ ९ ॥

---

5. MyBKA. Om. तु
6. MyB. चैदं कर्तुम्, KA. चैदंशकत्वम्, V[1]. चेदशकर्तुम्, V[2]. चेदशकमर्तुम् , T. चेदंशकन्मर्तु for चेदशकन्मर्तुम् ; T. Om. उत वा ; V[1-3]CyBKAT. M before स्यात् ins. एव
8. T. सर्वः for सर्वे
9. B. Om. समख्याकथनं ··· सर्वस्वार इति ; T. समाख्यातनिधनं, K. समाख्यातनयनं for समाख्याकथनं
10. MyKA. Om. न ; V[1-2]. सूत्रार्थं च for सूचनार्थं ; L. Om. सूचनार्थम् तथा च
11. V[2]IMyBKA. तत्र for °तन्त्र° ; KAMy. after °विलोपो ins. गेयं

शान्तिर्वामदेव्यमिति सूत्रोक्तप्रकारेण मृतस्य दहने कृते परिसाम्नामन्ते शान्तिरूपं वामदेव्यं गेयम्। एतच्च मङ्गलार्थमुक्तं कल्पकारेणेति सर्वं भद्रम् ॥ ९ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायाम् आर्षेयकल्पव्याख्यायाम् एकाहेषु प्रथमः आदितस्तृतीयोऽध्यायः ॥ ३ ॥ 5

---

4. BV[1-2]CLTMyKA इति कल्पव्याख्यायामेकाहेषु प्रथमोऽध्याय आदितस्तृतीयः (MyKAB. व्याख्याने for व्याख्यायाम्) for इति ··· अध्यायः

# चतुर्थोऽध्यायः

# एकाहः

## सौमिकचातुर्मास्यानि—वैश्वदेवम्

त्रिवृदग्निष्टोमो वैश्वदेवस्य लोकः (तां० ब्रा० १७. १३) इत्यनु-
5 वाकेन सौमिकचातुर्मास्यानि सप्तसुत्याविहितानि। तत्र वैश्वदेवस्य
फाल्गुन्यां पौर्णमास्यां दीक्षणम्। तस्य यजनीयेऽहनि सुत्या
विहिता। वरुणप्रघासस्य द्विदिवसस्योत्तरमहराषाढ्यां यजनीयेऽहनि
यथा स्यात्तथोपक्रमः। साकमेधत्रिरात्रस्योत्तरमहः कार्तिक्यां
पौर्णमास्यां यथा स्यात्तथोपक्रमः। पुनः फाल्गुन्यां पौर्णमास्यां
10 शुनासीर्यस्य दीक्षा। तस्य यजनीयेऽहनि सुत्या। तस्यापि
द्व्यहीनत्वात्। तथा च सूत्रम्— फाल्गुन्यां पौर्णमास्यां
चातुर्मास्यान्यारभेत (ला० श्रौ० सू० ८. ८. ४३) इत्यादि। तत्र
वैश्वदेवस्थानीयं त्रिवृदग्निष्टोममाह—

अग्न आयूंषि पवसे (सा० १५१८) उपास्मै गायता
15 नरः (सा० ७६३) उपोषु जातमप्तुरम् (सा० ७६२)
पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे
(सा० ६५७-९) ॥ १ ॥

18 इति बहिष्पवमानम् ॥

---

6. V[1]. Cm. दीक्षणम् ··· तथा च सूत्रम् फाल्गुन्यां पौर्णमास्यां (L 11)
7. My द्व्यहीनत्वस्य, B. द्वा'हत्वात्तस्य, KA. द्व्यहीत्वा तस्य, T. द्व्यहीनत्वात्तस्य for विहिता ; MyBKA. प्रघासवद् for °प्रघासस्य ; MyBKA. उत्तराहर् for उत्तरमहर् ; MyKAB. Om. अहनि
8. MyKABTC. आश्वयुज्यां for कार्तिक्यां
9. T. after तथा ins. एव
18. T. Om. इति बहिष्पवमानम् ॥ ··· ते कवे। (p. 210. L. 7)

उत्तमौ तृचौ । एकर्चा इतरे । उत्तमौ तृचौ बहिष्पवमाने साहस्रोत्तमे चातुर्मास्येषु (ला०श्रौ०सू० ६. ३. ७) इति वचनात् ॥ १ ॥

शग्ध्यूषु शचीपते (सा० १५७९-८०) इत्यभीवर्तो ब्रह्मसाम (ऊ० ११. २. ६) ॥ २ ॥

समानमितरं बृहस्पतिसवेन सस्तोमम् ॥ ३ ॥ 5

इति । अग्न-आ नो मित्र.याहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चाते जातमन्धस ( सा० ६७२-४ ) इति गायत्रमामहीयवं (ऊ० १. १. १) जराबोधीय-(ऊ० ११. १. १४)मिति सामतृचः । पुनानः सोम धारये-(सा० ६७५-६)ति यौधाजयं (ऊ० १. १. ३) तिसृषु । औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ 10

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । शग्ध्यूष्वि-(सा० १५७९-८०)ति अभीवर्तः । स्वासु कालेय-(ऊ० १. १. ७)मिति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-( सा० ६८९-९१ )ति गायत्रसंहिते (ऊ० १. १. ८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-पौष्कले (ऊ० १.१.९-१०) । पुरोजिती-(सा० ६९७ ९)ति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२) । काव-(ऊ० १. १. १३)मन्त्यम् । काववर्जमेकर्चाः ॥ 15

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । सर्वं त्रिवृत् ॥ ३ ॥

इति वैश्वदेवम् ॥ १ ॥ 20

---

1. MyBKA. इतरावेकर्चाविति for एकर्चा इतरे ; MyBKA. उपोत्तमौ for उत्तमौ and Om. बहिष्पवमाने
5. LV[1-2]MyB. स्तोमम् for सस्तोमम्

## वारुणप्रघासिकम्—प्रथममहः

वरुणप्रघासानां लोके द्विदिवः (तां० ब्रा० १७. १३.७) इत्युक्तस्य प्रथममहराह—

इमं मे वरुण श्रुधी हवम् (सा० १५८५ )। उपास्मै गायता नरः ( सा० ७६३ ) उपोषु जातमप्तुरम् (सा० ७६२ ) पवमानस्य ते वयं ( सा० ७८७-६ ) पवमानस्य ते कवे (सा० ६५७-८) ॥ १ ॥

इति बहिष्पवमानम् ॥

अत्रापि पूर्ववदुत्तमौ तृचौ । शिष्टा एकर्चाः । आद्याया वरुणो देवता ॥ १ ॥

संहितस्य लोके हाविष्कृतम् (ऊ० ११. २. ७)। जनुषैकर्चयोः (सा० ७७२-७३) सफ-( ऊ० १. २. १५ ) पौष्कले (ऊ० ६. २. २)। श्यावाश्वस्यौदलम् (ऊ० १०. १. ३) ॥ २ ॥

समानमितरं ज्योतिष्टोमेन ॥ ३ ।

इति । अग्न-आ नो-मित्रायाहीन्द्रग्नी-(सा० ६६०-७१)त्याज्यानि ।

उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं चामहीयवं (ऊ० १. १. १) च । पुनानः सोम धारये-(सा० ६७५-६)ति रौरवयौधाजये (ऊ० १. १. २-३) । औशन-( ऊ० १. १. ४ ) मन्त्यम् ॥

रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) च नौधसं (ऊ० १. १. ६) च कालेयं ( ऊ० १. १. ७ )चेति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये ( सा० ६८६-६१ )ति गायत्र-हाविष्कृते ( ऊ० ११. २. ७ ) । अया पवस्व देवयुः ( सा० ७७२ ) पवते हर्यतो हरिर् (सा० ७७३) इत्येकर्चयोः सफ-(ऊ० १. २. १५)

पौष्कले ( ऊ० ६. २. २ ) । पुरोजिती-(सा० ६६७-६)त्यौदलं (ऊ० १०. १. ३) प्रथमायाम् । आन्धीगवं (ऊ० १. १. १२) तिसृषु । काव-(ऊ० १. १. १३)मन्त्यम् ॥

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम ॥ ३ ॥

स्तोमक्लृप्तिमाह— 5

त्रिवृद्बहिष्पवमानम् । पञ्चदशमितरं सर्वम् ॥ ४ ॥

इति ॥ ४ ॥

इति वारुणप्रघासिकं प्रथममहः ॥ २ ॥

---

## वारुणप्रघासिकम—द्वितोयमहः

अथ द्वितीयमहराह— 10

कया त्वं न ऊत्या ( सा० १५८६ ) पवस्व वाचो अग्रियः (सा० ७७५) पवस्वेन्दो वृषा सुतो ( सा० ७७८ ) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) ॥ १ ॥

इति बहिष्पवमानम् ॥ 15

पूर्ववदन्त्यौ तृचौ । एकर्चा इतरे । आद्याया अग्निर्देवता ॥ १ ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८ ; ८००-२) इत्याज्यानि ॥२॥

अग्निं दूतम् (सा० ७९०-२) मित्रं वयम् ( सा० ७९३-५ ) 18

---

5. V[1-2]LC. स्तोमम् for स्तोमक्लृप्तिम् ; MyBKA. स्तोमक्लृप्तिः for स्तोमक्लृप्तिमाह

10. V[1-2]TCMyBKA. द्विदिवसस्य for अथ

11. MyK. Om. पवस्व वाचो ··· वृणीमहे इति (L. 17)

16. AB. एकर्चावितरौ for एकर्चा इतरे

इन्द्रमिद्गा (सा० ७९६-७९९) चतुर्ऋचम् । इन्द्रे अग्ने-(सा० ८००-२)त्याज्यानीत्यर्थः । चतुर्ऋचेऽन्त्यामुद्धरेत् ॥ २ ॥

अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति गायत्रं च हाविष्मतं (ऊ० ११. २. ८) च । परीतो षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं (ऊ० ९. १. ३) च दैर्घश्रवसं (ऊ० ५. २. ४) चायास्ये (ऊ० ६. १. ४-५) । अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

समन्तमाद्यायाम् । त्रिणिधनमध्यास्यायाम् ॥ ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं च (ऊ० १. १. ५) त्रैशोकं (ऊ० २. २. १३) च वैखानसं (ऊ० ६.१.९) च ॥ ४ ॥

इति पृष्ठानि ॥

त्रैशोकस्यातिजगती छन्दः ॥ ४ ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-संहिते (ऊ० ११. २. ९) । पवस्वेन्द्रमच्छे-(सा० ६९२ ६)ति सत्रासाहीय-(ऊ० ९. २. ७) श्रुध्ये (ऊ० ९. १. २०) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति श्यावाश्व-(ऊ० ११. २. १०) क्रौञ्चे (ऊ० २. १. ९) । धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽन्त्यः ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

सत्रासाहीयश्रुध्ये एकर्चे ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

साकमश्वं (ऊ० १. १. १५) सौभरम् (ऊ० १. १. १६) आष्टादंष्ट्रम् (ऊ० १. १. १२) ॥ ७ ॥

इत्युक्थानि ॥

पूर्वं सकृदुक्थ (उप०प्र० ४.४) इत्युपग्रन्थवचनात् ॥ ७ ॥

स्तोमक्लृप्तिमाह— 5

त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम । सप्तदशमितरं सर्वम् ॥ ८ ॥

इति ॥ ८ ॥

इति वारुणप्रघासिकं द्वितीयमहः ॥ ३ ॥

---

साकमेधस्य प्रथममहः 10

साकमेधानां लोकं त्रिरात्रम् (तां० ब्रा० १७. १३. १२) इत्युक्तस्य त्रिरात्रस्य प्रथममहराह—

उप त्वा जामयो गिरः ( सा० १५७० ) उपास्मै गायता नरः ( सा० ७६३ ) उपोषु जातमप्तुरम् ( सा० ७६२ ) पवमानस्य ते वयम् ( सा० ७८७-९ ) पवमानस्य ते कवे 15 (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अन्त्यौ तृचौ । शिष्टा एकर्चाः । आद्याया अग्निर्देवता ॥ १ ॥

अग्न आयाहि वीतये (सा० ६६०-७१) इत्याज्यानि ॥ २ ॥

प्र सोमासो विपश्चितः ( सा० ७६४-६ ) इति गायत्रम् आश्वम् 20 (ऊ० ६.२.१२) आशुभार्गवम् (ऊ० ११.२.११) प्र सोम देववीतये ( सा० ७६७-८ ) इति पञ्चं ( ऊ० ६.२.१३ ) गौङ्गवं (ऊ० 22

---

4. MyBAT. सर्वं for पूर्वं

5. LV[1-2], Om. स्तोमक्लृप्तिमाह

११. १. १७) यौधाजयम् (ऊ० १. २. १३) औशनम् (ऊ० १. १. ४) अन्त्यम । ३ ॥

[ इति माध्यंदिनः पवमानः ]

रथन्तरं च (र० १. १. १) वामदेव्यं च (ऊ० १.१.५)। इन्द्रमिद्देवतातये (सा० १५८७-८) इति यौक्तस्रुचं (ऊ० ११. २. १२) स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-( सा० ६८६-६१ )ति गायत्रं च स्वाशिरं चार्कः (र० ३. १. २)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-( ऊ० १. १. ६ )पौष्कले ( ऊ० १. १. १० )। प्र-सुन्वानायान्धसः (सा० १३८६-८) इत्यौदल-(ऊ० ११. २. ३) साध्रे(ऊ० ६. २. २०)। औदल-(ऊ० ११. २. ३) गौतमे वा ( ऊ० ११. २. ३ )। कावम् ( ऊ० १. १. ३ ) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (फ० १. १. १४)। ६ ॥

त्रिवृद् बहिष्पवमानम् । पञ्चदशं होतुराज्यम। सप्तदशं मैत्रावरुणस्य। एकविंशम् इतरं सर्वम् ॥ ७ ॥

इति साकमेधस्य प्रथममहः ॥ ४ ॥

---

## साकमेधस्य द्वितीयमहः

इन्द्रायेन्दो मरुत्वते (सा० १०७६ ) पवस्व वाचो अग्रियः ( सा० ७७५ ) पवस्वेन्दो वृषा सुतो ( सा० ७७८ ) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) । १ ॥

इति बहिष्पवमानम् ॥

उत्तमौ तृचौ। एकर्चा इतरे ॥ १ ॥

अग्निं दूतं वृणीमहे (सा० ७६०-८ ; ८००-२) इत्याज्यानि ॥२॥

वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च यौक्ताश्वं चा-(ऊ० ७. १. २)जिगं च (ऊ० ११. १. १४) स्वारं च सौपर्णं (ऊ० ११. २. १५)। पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं च ( ऊ० ६. २. २ ) दैर्घश्रवसं चा-(ऊ० ११. २. १६)यास्ये (ऊ० १. २. २०)। वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

बृहच्च (र० १. १. ५) वामदेव्यं च (ऊ० १. १. ५) श्यैतं च (ऊ० २. १. ३) माधुच्छन्दसं च (ऊ० २. १. ४) ॥ ४ ॥

इति पृष्ठानि ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रम् अग्नेरर्कः (र० १. २. १) सुरूपं (ऊ० ११. २. १७)। त्वं ह्यङ्ग (सा० ६३८-६) पवस्व देववीतये ( सा० १३२६-८ ) इति शङ्कु-(ऊ० ११. २. १८) सुज्ञाने (ऊ० ११. २. १६)। अयं पूषा रयिर्भगः (सा० ८१८-२०) इत्यासितं (ऊ० ११. २. २०) क्रौञ्चं (ऊ० २. १. ६) भर्गः (र० ३. १. २)। वृषा मतीनां पवते (सा० ८२१-३) इति यामम् (ऊ० २.१.१०) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

साकमश्वं (ऊ० १. १. ५) सौभरम् ( ऊ० १. १. १६ ) उद्वंशीयम् (ऊ० ६. १. ८) ॥ ७ ॥

इत्युक्थानि ॥

त्रिवृद् बहिष्पवमानम् । पञ्चदशं होतुराज्यम् । सप्तदशं मैत्रावरुणस्य । एकविंशं ब्राह्मणाच्छंसिनः । त्रिणवमितरं सर्वम् ॥ ८ ॥

इति ॥

इति साकमेधस्य द्वितीयमहः ॥ ५ ॥

---

## साकमेधस्य तृतीयमहः

तृतीयमहराह—

विश्वकर्मन् हविषा वावृधानो (सा० १५८६) दविद्युतत्या रुचै-(सा० ६५४)ते असृग्रमिन्दवो (सा ८३०) राजा मेधाभिरीयते (सा० ८३३-५) इषे पवस्व धारया (सा० ८४१-३) ॥ १ ॥

इति वहिष्पवमानम् ॥

उत्तमौ तृचौ । शिष्टा एकर्चाः । आद्यायास्त्रिष्टुप् छन्दो विश्वकर्मा देवता । अत्र निदानम्—त्रिष्टुभं वैश्वकर्मणिकं करोति न हि गायत्री विद्यते (नि० सू० ७.३) इति ॥ १ ॥

होता देवो अमर्त्यः (सा० १४७७-९) पुरूरुणा चिद्ध्यस्ति (सा० ६८५ ७) तमिन्द्रं वाजयामसी-(सा० १२२२-४)यं वामस्य मन्मन (सा० ९१६-८) ॥ २ ॥

इत्याज्यानि ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं चामहीयवं च (ऊ० १. १. १) जराबोधीयं (ऊ० ११. १. १४)चर्षभश्च पवमानो (ऊ० १२. १. १) गौषूक्तम् (ऊ० १२. १. २) । अभिसोमास आयव (सा० ८५६-८) इति पौरुमद्गं (ऊ० २. १. १४) च गौतमं (ऊ० २. १. १५) चान्तरिक्षं च (र० १.१.६) मैधातिथं (ऊ० ६. ३. ६)

चोत्सेधः ( ऊ० १२. १. ३ ) । तिस्रो वाच (सा० ८५६-६१) इत्यङ्गिरसां संक्रोशोऽ-(ऊ० २. १. १७)न्त्यः ॥ ३॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं च (र० १. १. १) वामदेव्यं च (ऊ० १. १. ५)
श्रायन्तीयं च (ऊ० ५. २. ६) रौरवं च (ऊ०१. १. २) ॥ ४ ॥ 5

इति पृष्ठानि ॥

परि स्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रं संहितं (ऊ० ६. २. ६) वारवन्तीयम् (ऊ० १२. १. ४) । स सुन्वे यो वसूनां (सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये 10 (ऊ० १२. १. ५) । पुरोजिती वो अन्धसः (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. २)न्धीगवे (ऊ० १. १. १२) निषेधः (ऊ० १२. १. ६) च । परि प्र धन्वे-(सा० १३६७-९)ति वाजदाव्र्योऽ-(ऊ० १२. १. ७)या रुचे-(सा० १५९०-२)ति नित्यवत्साः (र० ३. १. १२) धर्ता दिवः (सा० १३२८-३०) 15 इति दीर्घतमसोऽर्कोऽ-(र० ३. १. १०)न्त्यः ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

परि प्र धन्वेति द्विपदा छन्दः । अया रुचेत्यष्टिः ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

प्र मंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) 20 नार्मेधम् (ऊ० १. १. १७) ॥ ७ ॥

इत्युक्थानि ॥ 22

---

5. C. तरणिरिद् गौरवं for रौरवं
13. MyBKAT. Cm. च

गौरीवितं षोडशिसाम (ऊ० ३. १. २)। रात्रिः संधिः ॥ ८ ॥

स्तोमक्लृप्तिमाह—

त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम् । सप्तदशं मैत्रावरुणस्य। एकविंशं ब्राह्मणाच्छंसिनः। त्रिणवमच्छावाकस्य। त्रयस्त्रिंश-
5 मितरम् । साग्निष्टोमसामैकविंशान्युक्थानि षोडशिकानि । पञ्चदशी रात्रिः। त्रिवृत् संधिः ॥ ९ ॥

इति ॥ ९ ॥

इति साकमेधस्य तृतीयमहः ॥ ६ ॥

---

## शुनासीर्यम्

10 शुनासीर्यस्य लोके ज्योतिष्टोमोऽग्निष्टोमः (तां०ब्रा० १७.१३.१५) इत्युक्तं शुनासीर्यमाह—

क्लृप्तो ज्योतिष्टोमः शुनासीर्यस्य लोके ॥ १ ॥

इति । ज्योतिष्टोमोऽग्निष्टोमः । धूर्ज्योतिर्विश्वारूपा न सन्ति । शेषं प्रकृतिवत् । यदाग्निहोत्रं जुहोती-( तां० ब्रा० १७. १४ )
15 त्यनुवाकश्चातुर्मास्यानां स्तुत्यर्थम् ॥

इति शुनासीर्यम् ॥ ७ ॥

17 समाप्तानि चातुर्मास्यानि ॥ ७ ॥

---

12. P. अग्निष्टोमः for ज्योतिष्टोमः ; MyBKA. after ज्योतिष्टोमः ins. तदुक्तं
17. MyBKAT. Om. चातुर्मास्यानि ; C. सप्तसुस्वोक्तानि for समाप्तानि

## उपहव्यः

अथ सप्तदशाः षट् । तेषां प्रथम उपहव्यः सप्तदशोऽग्निष्टोमो देवाश्चासुराश्च (तां० ब्रा० १८. १.) इत्यनुवाकेनोक्तः । तत्र श्रूयते सोऽनिरुक्तमाहरत् ( तां० ब्रा० १८. १. ३ ) इति । तदनिरुक्तत्वं सूत्रकारेण प्रदर्शितम् । उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः 5 स्वस्थानासु । प्रत्यक्षम् अस्वस्थानासु । देवशब्दं सर्वत्र वर्जयेयुः (ला० श्रौ० सू० ८. ६. १-३) इति । अत्रोपहव्यग्रहणमनिरुक्तविधेरुपलक्षणम् । तस्मिन् स्वस्थानानां देवतानां नामधेयानि परोक्षं ब्रूयुः । अस्वस्थानानां प्रत्यक्षम् । देवशब्दं सर्वत्र स्वस्थानासु अस्वस्थानासु च वर्जयेयुरिति । 10

प्राकृतेन प्रकारेण या प्राप्ता यत्र देवता ।
स्वस्थानं(ना ?)सोच्यते तत्र ह्यस्वस्थाना ततोऽपरा ॥

तत्र कस्य देवतानामधेयस्य केन शब्देन परोक्षं कर्तव्यमित्यपेक्षायामुक्तम्—होता देवो मही मित्रस्यत्येते होता यज्ञे मही यज्ञस्येति ब्रूयुरिति इन्दुरित्यत्र सोमम् (ला०श्रौ०सू० ८. ६. ४) इति । 15 होतुराज्ये अग्नेः स्वस्थानत्वात् होता देवो अमर्त्य (सा० 16

---

2. MyBKAV[1-2]T. Om. सप्तदशोऽग्निष्टोमः

4. MyBKA. आहरेत् for आहरत् ; CV[1-2]. Om. इति

5. MyBKA. after ब्रूयुः ins. इति

6. KAMyBT. Om. प्रत्यक्षम् । अस्वस्थानासु

9. BAKMy. after ब्रूयुः ins. इति ; L. अस्वस्थानासु BKMyAT. अस्वस्थानं for अस्वस्थानानाम् ; MyBKAT. Om. स्वस्थानासु

10. C. Om. अस्वस्थानासु

11. My प्रकृतोपकारेण for प्राकृतेन प्रकारेण ; BAK. प्रकृतेन for प्राकृतेन

14. V[1]. Om. होता देवो ··· स्वस्थानत्वात् (L. 16) ; T. यज्ञो for यज्ञे

15. CV[2]MyBKAT. Om. अत्र

१४७७) इत्यग्निवाचिनो देवशब्दस्य स्थाने यज्ञ इति ब्रूयुः ।
मैत्रावरुणाज्ये मित्रस्य स्वस्थानत्वात् महाँ मित्रस्य साधय इत्यत्र
मित्रस्येत्यपोह्य यज्ञस्येति वक्तव्यम् । पवमाने स्वस्थानत्वात्
सोमो य उत्तमं हाविर् (सा० १३१३) इत्यत्र सुषाव
5 सोममद्रिभिर् (सा० १३१३ ) इत्यत्र च सोमशब्दस्थाने इन्दु-
शब्दः प्रयोक्तव्यः । एवमृधक् सोम स्वस्तये (सा० ६५६ )
इत्यादिषु च । परिस्वानश्चक्षसे देवमादनः (सा० १३१५) इत्यत्र
देवनामस्वस्थानेऽपि देवशब्दस्य विश्वशब्देन पारोक्ष्यं कार्यम् ।
विश्व इति देवान् (ला० श्रौ० सू० १. ४. ५) इति वचनात् ।
10 देवतान्तराणां तु कल्पकारविहितास्वृक्षु परोक्षाण्येव नामधेयानि ।
यज्ञायज्ञीये पुनरग्निशब्दस्य पारोक्ष्यं न कर्तव्यम् । स उत्तमे
स्तोत्रे देवो वो द्रविणोदा (सा० १५१३ ) इति देवानभिपर्यावर्तत
(तां० ब्रा० १८. १. ४) इति ब्राह्मणेनोक्तस्तोत्रे देवशब्दप्रयोगाभ्यनु-
ज्ञानात् लिङ्गात् संसदामयने त्वनिरुक्तस्य त्रयस्त्रिंशस्य
15 बहिष्पवमाने स वायुमिन्द्रमश्विन (सा० ११३४) इत्यत्रेन्द्र-
वाय्वादीनामस्वस्थानत्वात् पारोक्ष्यं न कार्यम् । वाजपेये तमीडिष्व
यो अर्चिष (सा० ११४६ ) इति यदैन्द्राग्नमाज्यं तत्रेन्द्राग्नी-
शब्दयोरनिरुक्तगाने नैव पारोक्ष्यं सिद्धम् । ऋग्जपे तु स्तोत्राङ्ग-
19 भूतं पारोक्ष्यं कार्यमेव । स्तोत्रं सामविषयं हीदम् । अत एव

---

5. $V^{1-2}$ after स्थाने add : तद्विभक्तिकः T. तद्विभक्तिः and MyBKA. च विभक्तिः ; MyBKAT. इन्द्र° for इन्दु°

8. MyBKA. परोक्षं , $V^2$. पारोक्षं for पारोक्ष्यं

11. MyBKA. परोक्षं for पारोक्ष्यं

13. T. उत्तमस्तोत्रे , MyBKA. उत्तमे स्तोत्रे, $LV^{1-2}$. उक्तमग्निष्टोमस्तोत्रे for उक्तस्तोत्रे

16. MyBKA. कर्तव्यम् for कार्यम्

19. MyBKATC. स्तोत्र for स्तोत्रं ; MyBKA. हितम् for हीदम्

परिसामसु न भवति। तस्मात् पारोक्ष्यविषये न किञ्चिद्वक्तव्यमवशिष्यते इति सूत्रकारस्याभिप्रायः। सुब्रह्मण्यायास्तु देवताह्वानार्थत्वेन स्तोत्रवत्प्राधान्यात् तत्र पारोक्ष्यं स्यादेव। तथा चोक्तम्—
इन्द्रं शक्रेति ब्रूयात्। विश्व इति देवाननिरुक्तेषु (ला० श्रौ० १. ४. ५) इति ॥ 5

स्तोमक्लृप्तिमाह—

पवस्वेन्दो वृषा सुत (सा० ७७८-८०) एते असृग्रमिन्दवः (सा० ८३०-२) उत नो गोषणिं धियम् (सा० १५६३ ) शशमानस्य वा नरः (सा० १५६४ ) उप नः सूनवो गिरः (सा० १५६५ ) उत्ते शुष्मास ईरते (सा० १२०५-६) पवमानस्य ते कवे (सा० ६५७-६) ॥ १ ॥ 10

इति बहिष्पवमानम् ॥

उत नो गोषणिं धियमित्यादयस्त्रय एकर्चाः। तेषां क्रमेण मरुतः पूषा विश्वेदेवा इति देवताः। तथा च निदानम्—
अथ खल्वाह मारुती भवति पौषी भवति वैश्वदेवी भवतीति। तेनो विद्यादेतद्देवत्या इमा भवन्तीत्येतद्देवेषु सूक्तेषु समाम्नाता (नि० सू० ७. ४) इति ॥ १ ॥ 15

होता देवो अमर्त्यः (सा० १४७७-६) प्र वां महि द्यवि (सा० १५६६-८) अयमु ते समतसि (सा० १५६६-१६०१) गावं उप वदावटे (सा० १६०२-४) ॥ २ ॥ 2

इत्याज्यानि ॥ 21

---

1. V[3]CL. परं for परि; MyBKATV[1-3] परोक्ष for पारोक्ष्य
8. LV[1-3] धियः for धियं

पवमानस्य जिघ्नतः (सा० १३१०-२) इति गायत्रं चामहीयवं च (ऊ० १२. १. ८) परीतो षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं च (ऊ० ६. १. ३) दैर्घश्रवसं च (ऊ० ५. २. ४) बार्हदुक्थं च (ऊ० ६. ३. ७) यौधाजयं च (ऊ० ७. २. ५)। साकमुक्ष (सा० १४१८-२०) इति पार्थम् (ऊ० १२. १. ६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

**समन्त प्रथमायाम्। यौधाजयमध्यास्यायाम् ॥ ३ ॥**

मा भेम मा श्रमिष्मे-( सा० १६०५-१० )ति बृहत् (र० ३. १. १३) स्वासु वामदेव्यम् (ऊ० १. १. ५)। इमा उ त्वा पुरूवसो (सा० १६०७-८) यस्यायं विश्व आर्य (सा० १६०६-१०) इति श्यैतं च (ऊ० १२. १. १०) कालेयं च (ऊ० १२. १. ११) ॥ ४ ॥

इति पृष्ठानि ॥

पवमानो अजीजनद् (सा० ८८६-६१) इति गायत्र-संहिते (ऊ० १२. १. १२)। आ सोता परिषिञ्चत (सा० १३६४-५) गोमन्न इन्द्रो अश्ववद् (सा० १६११-३) इति सफ-(ऊ० १२.१.१३)श्रुध्ये (ऊ० १२.१.१४)। अभी नो वाजसातमम् (सा० १२३८-४०) इति श्यावाश्वा-(ऊ० १२.१.१५)न्धीगवे (ऊ० १२.१.१६)। अञ्जत (सा० १६१४-६) इति कावम् (ऊ० १२.१.१७) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

**सफश्रुध्ये एकर्चे ॥ ५ ॥**

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

**सर्वोऽयमुपहव्यः सप्तदशः। सर्वे सप्तदशा इति वक्ष्यति ॥ ६ ॥**

इति उपहव्यः ॥ ८ ॥

---

## ऋतपेयः

द्वितीयः ऋतपेयः। सप्तदशोऽग्निष्टोमस्तस्य द्वादश दीक्षोपसद (तां० ब्रा० १८. २) इत्यनुवाकोक्तः। तत्र सूत्रम्—ऋतपेये तस्य द्वादश दीक्षोपसद (ला० श्रौ० ८. ६. ७) इत्यादि। अथ कल्पः— 5

द्वितीयस्य स्वरसाम्न आज्यबहिष्पवमानम् ॥ १ ॥
बार्हदुकथस्य लोक आष्टादंष्ट्रम् (ऊ० १२.१.८)। मौक्षस्य हाविष्मतम् (ऊ० २. १. ५)। श्रुध्यस्य सुज्ञानम् (ऊ० २. १. ७) ॥ २ ॥

ऊद्धरत्युक्थानि ॥ ३ ॥ 10

समानमितरं गवैकाहिकेन ॥ ४ ॥

इति। पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा०७७८-८०) वृषा सोम द्युमाँ असि (सा०७८१-३) उत्ते शुष्मास ईरते (सा० १२०५-६) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् ॥ 15

अग्निं दूतम् (सा० ७९०-२) मित्रं वयम् (सा० ७९३-५) इन्द्रमिद्गा (सा० ७९६-९) चतुर्ऋचम्। इन्द्रे अग्ने-(सा० ८००-२) त्याज्यानि। चतुर्ऋचस्य तृतीयामुद्धरेत्। तृतीयां सर्वस्वारस्वरसाम्नो-(ला० श्रौ० ६. ४. ११) रिति वचनात्। अत्र च स्वरसाम्नो निर्देशात्। धिष्ण्योपस्थानं कृत्वा सदःप्रसर्पणकाले ऋतमुक्त्वा 20 प्रसर्पेयुः। इयं भूमिरसावादित्य उदेता प्रातरादित्य इति सोमभक्षणकाले चैतदुक्त्वा प्रकृतमन्त्रेण भक्षणम् ॥ 22

---

19. MyBKAT. Om. च

20. LT. निदेशात् for निर्देशात्

22. MyKA. काण्डे for काले

अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ६. २. ३) च। परीतो षिञ्चता सुत-( सा० १०१३-५ )मिति समन्तं च (ऊ० ६. १. ३) दैर्घश्रवसं ( ऊ० ५. २. ४ ) च आष्टादंष्ट्रं (ऊ० १२. १. १८) च यौधाजयम् (ऊ० ७. २. ५)।
5 अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ६. २. ५) अन्त्यम्। समन्तमाद्यायाम्। यौधाजयमध्यास्यायाम्॥

बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० ६. १. १६ ) च कालेयं ( ऊ० १. १. ७ ) चेति पृष्ठानि ॥

10 यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रं च हाविष्मतं (ऊ० २. १. ५) च। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-( ऊ० १. १. ६ )सुज्ञाने ( ऊ० २. १. ७ ) । पुरोजिती वो अन्धस (सा० ६६७-६) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १. १. १२)। सूर्यवतीषु काव-(सा० १३७०-२; ऊ० ६.
15 २. ११)मन्त्यम्। सफसुज्ञाने एकर्चे ॥

यज्ञायज्ञीयमग्निष्टोमसाम ( ऊ० १. १. १४ ) । सर्वः सप्तदशः ॥

इति ऋतपेयः॥ ६॥

---

## दूणाशः

20 तृतीयो दूणाशः । सप्तदशोऽग्निष्टोमस्तस्य दीक्षणीयायामिष्टौ-(तां० ब्रा० १८. ३) इत्यनुवाकेनोक्तः। तस्य कल्पः—

एते असृग्रमिन्दवः (सा० ८३०-१) उत्ते शुष्मास ईरते (सा०
23 १२०५-६) इति पुरस्तात् पर्यासस्य तृचपञ्चर्चे॥ १॥

11. My. श्यामहीयवं for हाविष्मतं
22. K. Om. उत्ते ··· द्युतस्या रुचा (p. 224. L. 5)

स्वासु श्यैतम् (सा० ८११-२; ऊ० २. १. ३) ॥ २ ॥
समानमितरं प्रथमेन साहस्रेण ॥ ३ ॥

इति। पवस्व वाचो अग्रियो ( सा० ७७५-७ ) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-१) उत्ते शुष्मास ईरते ( सा० १२०५-६ ) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥ 5

अग्न आयाहि वीतये ( सा० ६६०-२ ) मित्रं वयं हवामहे (सा० ७६३-५) इन्द्रमिद्गाथिनो बृहद् (सा० ७६६-६) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२) इत्याज्यानि ॥

अस्य प्रत्ना ( सा० ७५५-७ ) इति गायत्रं चामहीयवं 10 ( ऊ० ६. २. ३ ) च । परीतो षिञ्चता सुतम् (सा० १३१३-५) समन्तं ( ऊ० ६. १. ३ ) च रथन्तरं ( र० २. २. ६ ) च दैर्घश्रवसं ( ऊ० ५. २. ४ ) च यौधाजयं ( उ० ७. २. ५ ) च। अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ६. २. ५) अन्त्यम् ॥ 15

समन्तमाद्यायाम् । यौधाजयमध्यास्यायाम्। बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० १०. १. ४) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठये-( सा० ६८६-९१ )ति गायत्र-संहिते (ऊ० १. १. ८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ६) 20 श्रुध्ये (ऊ० ६. १. २०) । पुरोजिती-(सा० ६९७-९)ति श्यावाश्वा-( ऊ० १. १. ११ )न्धीगवे ( ऊ० १. १. १२ ) । सूर्यवतीषु कावमन्त्यम् (ऊ० ६. २. ११) । सफश्रुध्ये एकर्चे ॥ 23

---

4. K. Om. उत्ते ··· ते कवे

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

सर्वाणि स्तोत्राणि सप्तदशानि ॥ ३ ॥

इति दूणाशः ॥ १० ॥

---

## वैश्यस्तोमः

5 चतुर्थो वैश्यस्तोमः सप्तदशोऽग्निष्टोमस्तस्य प्रातःसवनीयानी-(तां० ब्रा० १८. ४)त्यनुवाकेनोक्तः । तत्र वैश्यस्यैवाधिकारः । न ब्राह्मणक्षत्रिययोः । तस्य कल्पः—

पवमानस्य विश्ववित् (सा० ६५८-६०) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवस्-(सा० ८३०-२) तं त्वा

10 नृम्णानि बिभ्रतं (सा० ८३६-४०) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

विश्वेभिरग्ने अग्निभिः (सा० १६१७-९) मित्रं वयं हवामहे (सा० ७६३-५) इन्द्रं वो विश्वतस्परि (सा० १६२०-२) ता

15 हुवे ययोरिदम् (सा० ८५३-५) ॥ २ ॥

इत्याज्यानि ॥

अभि त्वा शूर नोनुमः (सा० ६८०-१) इति कण्वरथन्तं पृष्ठम् (ऊ० १२. १. १९) । आ नो विश्वासु हव्यम् (सा० १४९२-३) इति सदोविशीयं ब्रह्मसाम (ऊ० १२. १. २०) ।

20 जनुषैकर्चयोः (सा० ७२३-७७२) सफ-(ऊ० १. २. १५)

---

7. LV[1-2]C. क्लृप्तिमाह for कल्पः

17. LC, Om. अभि त्वा··· अयुक्षैकाहिकेनेति (p. 227, L. 5)

पौष्कले (ऊ० ६. २. २) । परि त्यं हर्यतं हरिम् (सा० १३२६-३१ ; ऊ० १२. २. १-२) इत्यनुष्टुप् । पवित्रम् (सा० ८७५-७) इति काव-(ऊ० १२. २. ३)मन्त्यम् ॥ ३ ॥

उद्धरत्युकृथानि ॥ ४ ॥

समानमितरमायुषैकाहिकेन ॥ ५ ॥ 5

इति । उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं चामहीयवं ( ऊ० १. १. १ ) च । अभि सोमास आयवः (सा० ८५६-८) इति द्विहिंकारं वामदेव्यं (ऊ० ४. २. ७) च मैधातिथं (ऊ० ६. ३. ६) च रौरवं ( ऊ० ७. १. १३ ) च यौधाजयं ( ऊ० ८. २. १६ ) चौशनमन्त्यम् ( ऊ० १. १. ४ ) इति 10 माध्यंदिनः । द्विहिंकारं वामदेव्यं प्रथमायाम् । यौधाजयमध्यास्यायाम् । अभि त्वा शूर (सा० ६८०-१) इति कण्वरथन्तरं पृष्ठम् (ऊ० १२. १. १६ ) । स्वासु वामदेव्यम् ( ऊ० १. १. ५ )। आ नो विश्वासु हव्यम् ( सा० १४६२-३ ) इति सदोविशीयं ब्रह्मसाम (ऊ० १२. १. २०)। स्वासु कालेयम् (ऊ० १. १. ७)इति पृष्ठानि। 15 कण्वरथन्तरं सर्वबृहतीषु । तथा च निदानम्—सर्वबृहतीषु नान्यद् बृहद्रथन्तराभ्यामर्हति यत् ककुबुत्तरासु स्यात् (नि० सू० ७. ४) इति ॥

स्वादिष्ठये-(सा० ६८६-९१)ति गायत्र-संहिते (ऊ० १.१.१८) । अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) 20 इति एकर्चयोः सफ-(ऊ० १. २. १५)पौष्कले ( ऊ० ६. २. २ ) 21

---

6. $V^{1-2}$L. after इतिं ins. सदोविशीयं ब्रह्मसाम जनुषैकर्चयोहिकेनेति

8. $V^{1-2}$Γ. Cm. वामदेव्यं

11. $LV^{2}$. द्विहिंकारः for द्विहिंकारं वामदेव्यं ; $LV^{1-2}$MyT. Om. वामदेव्यम्

12. My. after कण्वरथन्तरं ins. अन्त्यं ; $V^{1}$. Om. पृष्ठम् ... कण्वरथन्तरं (L. 16)

14. $LTCV^{1-2}$. Om. ब्रह्मसाम

परि त्यं हर्यतं हरिम् (सा० १४२९-३१) इति श्यावाश्वा-(ऊ० १२. २. १)न्धीगवे (ऊ० १२. २. २)। पवित्रं त (सा० ८७५-७) इति कावम् अन्त्यम् (ऊ० १२. २. ३)॥

यज्ञायज्ञीयमग्निष्टोमसाम (उ० १. १. १४)॥ सर्वः
5 सप्तदशः ॥ ५ ॥

इति वैश्यस्तोमः ॥ ११ ॥

---

## तीव्रसुत्

पञ्चमस्तीव्रसुत् सप्तदश उक्थ्य इन्द्रो वृत्रमहन् (तां० ब्रा० १८. ५) इत्यनुवाकेनोक्तः। तस्य सूत्रम्—स पञ्चमेन तीव्रसुति
10 सोमातिपवितं याजयेद् (ला० श्रौ० ८. १०. ७-१४) इत्यादि। अथ कल्पः—

एते असृग्रमिन्दवस् (सा० ८३०-२) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-९०) इति पुरस्तात् पर्यासस्य तृचपञ्चर्चे॥ श्रायन्तीयं ब्रह्मसाम (सा० १३१९-२०; ऊ० ५. २. ६)।
15 संहितस्य लोके मौक्षम् (ऊ० १२. २. ४) पौष्कलस्य लोके श्रुध्यम् (ऊ० ६. १. २०)। श्यावाश्वस्य यज्ञायज्ञीयम् (ऊ० ८. २. १६)॥ यज्ञायज्ञीयस्यर्क्षु विशोविशीयमग्निष्टोमसाम (ऊ० १२. २. ५)॥ १॥

19 समानमितरमायुषैकाहिकेन ॥ २ ॥

---

8 LC. तीव्रसुतः for तीव्रसुत्

9. LC. तीव्रसुत for तीव्रसुति ; MyBA. अन्यः सोमा इति पवितं (My पवित्रं) for स पञ्चमेन तीव्रसुति सोमातिपवितं

10. C. याजयेयुरिति for याजयेदित्यादि

15. K. ते कव इति for लोके ; MyB?, Om. लोके

इति। उपास्मै गायता ( सा० ६५१-३ ) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः ( सा० ८३०-२ ) तं त्वा नृम्णानि बिभ्रतम् ( सा० ८३६-९० ) पवमानस्य ते कव (सा० ६६७-९) इति बहिष्पवमानम् ॥

अग्न (सा० ६६०-२) आ नो मित्रा-(६६३-५) याहीन्द्राग्नी-(सा० ६६६-८) त्याज्यानि ॥ 5

अत्र सोमभक्षणकाले भक्षावृता चमसानवजिघ्रेयुः। यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः। तानच्छावाकस्य स्तोत्रे भक्षयेयुः। एवं सर्वसवनेषु कर्तव्यम् ॥

उच्चा ते जातम् (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. ७) च। अभि सोमास आयव (सा० ८५६ ८) इति द्विहिंकारं (ऊ० ४. २. ७) च मैधातिथं (ऊ० ९. ३. ६) च रौरवं (ऊ० ७. १. १३) च यौधाजयं (ऊ० ८. २. १९) चौशनमन्त्यम् (ऊ० १. १. ४)। द्विहिंकारमाद्यायाम्। यौधाजयमध्यास्यायाम् ॥ 10 15

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ४. २. ९) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठये-( सा० ६८९-९१ )ति गायत्र-मौक्षे (ऊ० १२. २. ४)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९) श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती-( सा० ६९७-९ )ति यज्ञायज्ञीया-( ऊ० ८. २. १६ )न्धीगवे (ऊ० १. १. १२)। कावम् (ऊ० १. १. १३) अन्त्यम्। यज्ञायज्ञीयस्यर्क्षु विशोविशीय- 20 23

---

1. L. after इति ins. अस्य क्लृप्तिः
7. KMy. भक्षाव्रता for भक्षावृता

मग्निष्टोमसाम (सा० ७०३-४ ; ऊ० १२. २. ५)। प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णम् (ऊ० २. २. ६) उद्वंशीयम् (ऊ० ६. १. ८) इत्युक्थानि ॥

सर्वः सप्तदशः ॥ २ ॥

5 इति तीव्रसुत् ॥ १२ ॥

---

## वाजपेयः

षष्ठो वाजपेयः सप्तदश उक्थ्यः षोडशिमान् सप्तदशी (तां० ब्रा० १८. ६) इत्यनुवाकद्वयेनोक्तः । तस्य सूत्रम्—यं ब्राह्मणाः स राजानः पुरस्कुर्वीरन् स वाजपेयेन यजेते-(ला० श्रौ० 10 ८. ११. १२)त्यादि खण्डद्वयम् । सुब्रह्मण्यायां शक्रागच्छ विश्वे ब्रह्माण इति विशेषः । अनिरुक्तप्रातःसवनत्वात् । स्तोत्रक्लृप्तिमाह—

पूर्वस्य बहिष्पवमानम् । व्रात्यानि त्रीण्याज्यानि । वैश्वजितमुत्तमम् । बार्हदुक्थस्य लोके देवस्थानम् (र० १. २. ३)। रथन्तरं पृष्ठम् (र० १. १. १)। अभीवर्तो ब्रह्मसाम (ऊ० ६. १. १६) । 15 मौक्षस्य लोके स्वाशिरामर्कः (र० ३. १. १४) । श्यावाश्वस्य यज्ञायज्ञीयम् (ऊ० ८. २. १६) त्वं नश्चित्र ऊत्ये-(सा० १६२३-४)ति वारवन्तीयमग्निष्टोमसाम (ऊ० १२. २. ६) ॥१॥

समानमितरं गवैकाहिकेन ॥ २ ॥

गौरीवितं षोडशिसाम (ऊ० ३. १. २) विष्णोः शिपिविष्टवतीषु 20 बृहत् (सा० १६२५-७ ; र० ३. १. १५) ॥ ३ ॥

सर्वे सप्तदशाः ॥ ४ ॥

इति । उपास्मै (सा० ६५१-३) दविद्युतत्या रुचा (सा० 23 ६५४-६) एते असृग्रमिन्दवस् (सा० ८३०-२) तं त्वा नृम्णानि

---

12. LCV², उत्तरम् for उत्तमम्

बिभ्रतम् (सा० ८३६-४०) पवमानस्य ते कवे ( सा० ६५७-६ ) इति बहिष्पवमानम् । ऋधगिन्दो सुवस्तयोमिति विशेषः । इन्दुरिति सोम-(ला०श्रौ०८.६.४)मिति वचनात् । होता देवो अमर्त्यस् (सा०१४७७-६) ता नः शक्तं पार्थिवस्य ( सा० १४६५-७ ) सुरूपकृत्नुमूतये ( सा० १०८७-६) तमीडिष्व यो अर्चिषे-(सा० ११४६-५१) त्याज्यानि । होता 5
यज्ञो अमर्त्योमिति प्रस्तावः । होता यज्ञो महीयज्ञस्येति ब्रूया-(ला०श्रौ० ८. ६.४)दिति वचनात् । उत्तमेत्याज्यक्रग्जपे पारोक्ष्यमिन्द्राग्नीशब्दयोर्न कार्यमिति उपहव्य एवोक्तम् ॥

अथ माध्यंदिनः । अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ६. २. ३) च । परीतो षिञ्चता सुतम् (सा० 10
१३१३-५) इति समन्तं ( ऊ० ६. १. ३ ) प्रथमायाम् । दैर्घश्रवसं (ऊ० ५. २. ४) तिसृषु । देवस्थानं (र० १. २. ३) तिसृषु । यौधाजयमध्यास्यायाम् (ऊ० ७. २. ५) । अयं सोम (सा० १४७१-३) इति पार्थम् ( ऊ० ६. २. ५ ) अन्त्यम् । दक्षिणासु यथालिङ्गं मन्त्रप्रयोगः सूत्रोक्तप्रकारेण कार्यः ॥ 15

रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) चाभीवर्त्तश्च (ऊ० ६. १. १६) कालेयं (ऊ० १. १. ७)चेति पृष्ठानि ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रं च स्वाशिरामर्कः (र० ३. १. १४) । पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति 20
सफ-(ऊ० १. १. ६)श्रुध्ये ( ऊ० ६. १. २० ) एकर्चयोः । 21

---

6. $V^2$LMy. यज्ञे अ° for यज्ञो अ° ; $CLV^{1-2}$. यज्ञे म° for यज्ञो म°

7. MyBA. after जपे ins वा

21. $LV^3$. एकर्चेषु, $V^1$. एकर्चे for एकर्चयोः

पुरोजिती व ( सा० ६९२-६ ) इति यज्ञायज्ञीया-(ऊ० ८. २. १६) न्धीगवे (ऊ० १. १. १२)। सूर्यवतीषु कावम् (ऊ० ६.२.११) अन्त्यमित्यार्भवः ॥

त्वं नश्चित्र ऊत्ये-(सा० १६२३-४)ति वारवन्तीयमग्निष्टोमसाम
5 (ऊ० १२. २. ६)। तस्य सर्वबृहतीकारः ककुबुत्तराकारो वेति पक्षद्वयं वारवन्तीयप्रसङ्गे प्रतिहारव्याख्यायामस्माभिर्दर्शितम् । अत्र च पवमानस्थयज्ञायज्ञीये यज्ञायज्ञीयधर्मा न कार्याः । वारवन्तीये तु कार्याः। प्रतिहारवेलायां पत्न्यवेक्षणम् ॥

साकमश्वं (ऊ० १. १. १५) सौभरम् (ऊ० १. १. १६)
10 उद्वंशीयम् (ऊ० ६. १. ८) इत्युक्थानि । इन्द्र जुषस्वे-(सा० ६५२-४)ति गौरीवितं (ऊ० ३. १. २) षोडशिसाम । षोडशिग्रहावेक्षणादि चमसभक्षणान्तमतिरात्रवत् । निष्क्रमणादि यजमानोपहवान्तं कृत्वा किमित्ते विष्णो (सा० १६२५-७) इति बृहता (र० ३. १. ५) वाजपेयसाम्ना स्तुवीरन्। तस्य भरद्वाज-
15 स्त्रिष्टुप् विष्णुरित्यादयः । षोडशस्तोत्रीयासु भाइः सादा इति पाठः। सप्तदश्यां भाइः सदा इति। उत्तमं न रुह्यादिति आचार्या (नि०सू० २.६) इति निदानवचनात् । भक्ष आहृते श्येन इत्यवेक्ष्येन्द्रविन्द्र-पीतस्येन्द्रियावतस्त्रिष्टुप्छन्दसस्सर्वगणस्येति भक्षणम् । त्रिष्टुप्-
19 छन्दसा वाजपेयसाम्नि भक्षयेदिति वचनात्। अथ स्तोमविमोचना-

---

7. MyT. पवमानस्था for पवमानस्थ

12. MyBIA. °भक्षणम् for भक्षणान्तम् ; MyA. अनिष्क्रमणादि, BT. अनिष्क्रमणादि for निष्क्रमणादि

16. V[1]. Cm. न ; CMyBA. निरुह्यात् , V[2]. न जह्यात् for न रुह्यात् ; V[1-2]C. आचार्यः for आचार्याः

18. MyBA छन्दः for छन्दसः

19. V[1-2]. after साम्नि ins. इति

ह्युदवसनीयान्तं प्रकृतिवत् । संस्थावाजपेयस्तु सूत्रकारेणोक्तः । अनतिरात्रो वा षोडशिमान् ॥ तस्य बृहत्सप्तदशं स्तोत्रं स्यात् । पञ्चदशं स्त्रास्वि-( ला० श्रौ० सू० ८. १२. ६-१० )ति । तत्र षोडशिचमसभक्षणान्तं ज्योतिष्टोमवदविकारेण कृत्वा निष्क्रमणादि-यजमानोपहवान्ते कृते स्त्रासु बृहत्या पञ्चदशस्तोमेन स्तवनम् । 5 केचित्तु किमित्ते इति बृहत्या सप्तदशेन स्तोमेन स्तवनमिच्छन्ति । तत्र मूलं मृग्यम् । अन्यत्तु सर्वं सूत्रत एवावधार्यम् । प्रत्यवरोहणीयेनैवान्ततो यजेतेत्युक्तम् । प्रत्यवरोहणीयमाह—

क्लृप्तो ज्योतिष्टोमः प्रत्यवरोहणीयः ॥ ५ ॥

इति । विश्वरूपाज्योतिर्गानयोर्धूर्गानानां च निवृत्तिः । शेषं 10 प्रकृतिवत् ॥ ५ ॥

इति वाजपेयः ॥ १३ ॥

---

## राजसूयः

अथ राजसूयः । अग्निष्टोमं प्रथममाहरती-(तां० ब्रा० १८. ८. ११)त्यादिभिश्चतुर्भिरनुवाकैरुक्तः । राजा राजसूयेन यजेत । 15 तस्य सप्त सुत्याः । अभ्यारोहणीयः अभिषेचनीयः दशपेयः केशवपनीयः व्युष्टिद्विरात्रः क्षत्रस्य धृतिरिति । फाल्गुनीपक्षस्य प्रथमायां दीक्षेत अभ्यारोहणीयाय ज्योतिष्टोमाय । तस्य क्लृप्तिमाह—

क्लृप्तोऽभ्यारोहणीयः ॥ १ ॥ 20

---

2. C. after स्यात् upto चरन्तम् (p 235, L. 9) blank

5. A. after यजमान ins. वाचन ; LV[1-3] बृहता for बृहत्या

इति । ज्योतिष्टोम इत्यनुवर्तते । स चाग्निष्टोमसंस्थः । अग्निष्टोमं प्रथममाहरती-(तां० ब्रा० १८. ८. १)ति श्रुतेः ॥ १ ॥

इति अभ्यारोहणीयः ॥ १४-१ ॥

---

## राजसूयः—अभिषेचनीयः

प्रत्यवरोहणीयेनेष्ट्वा संवत्सरादूर्ध्वमभिषेचनीयेन यजेत । तस्य ब्राह्मणम्—अथैषोऽभिषेचनीय (तां० ब्रा० १८. ८. २-१८) इत्यादि । स्तोत्रक्लृप्तिमाह—

वायो शुक्रो अयामि त इति तृचः ( सा० १६२८-३० ) षट् संभार्या वैश्वजित्यः (सा० १५७० ; १४६०-४) ॥ १ ॥

इति । उप त्वा जा (सा० १५७०) जनीयन्तो (सा० १४६०) उत नः प्रिया प्रियासु (सा० १४६१) तत्सवितुर्वरेण्यम् (सा० १४६२) सोमानां स्वरणम् (सा० १४६३) अग्न आयूंषि (सा० १४६४) षडृचं संभार्याः । दशतयेभ्यो नानादेशेभ्य आहृत्यात्र संभ्रियन्त इति कृत्वा ॥ १ ॥

पवस्व वाचो अग्रियो ( सा० ७७५-७ ) दविद्युतत्या रुचा (सा० ६५४-६) एतमुत्यं दश क्षिपः ( सा० १०८१-३ ) पवस्वेन्दो वृषा सुत (सा० ७७८-८०) उत्ते शुष्मास ईरते (सा० १२०५-६) पवमानस्य ते कवे (सा० ६५७-६) अध क्षपा परिष्कृतः (सा० १६३१-३) ॥ २ ॥

इति बहिष्पवमानम् ॥

वायो शुक्र ( सा० १६२८-८० ) इत्यनुष्टुप् । अध क्षपा परिष्कृत ( सा० १६३१-३ ) इति च । तमस्य मर्जयामसि (सा०

१६३२) इत्युत्तमा कार्या । तासां मध्यमामुत्तमां कुर्म (नि०सू० ७.५) इति निदानवचनात् । संभार्याणाम् ऋचां क्रमेण अग्निः सरस्वान् सरस्वती सविता ब्रह्मणस्पतिरग्निपवमानाविति देवताः । शिष्टानां सोम एव । रथन्तरवर्णायां द्वादशाक्षराण्यभिष्टोभेत् । चत्वार्येव वा । द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि । सर्वत्र चत्वारीति 5 शाण्डिल्य (ला० श्रौ० सू० ७. ११. ८-६) इति वचनात् ॥ २ ॥

वैश्वजित्याज्यानि ॥ ३ ॥

इति । सुषमिद्धो न आवह ( सा० १३४७-५० ) ता नः शक्तं पार्थिवस्य (सा० १४६५-७) युञ्जन्ति ब्रध्नमरुषं चरन्तम् (सा० १४६८-७० ) तमीडिष्व यो अर्चिषा ( सा० ११४६-५१ ) 10 इत्याज्यानि ॥ ३ ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं चामहीयवं च (ऊ० १. १. १) जराबोधीयं च ( ऊ० ११. १. १४ ) स्वारं च सैन्धुक्षितम् (ऊ० १२. २. ७) । परीतो षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं ( ऊ० ६. १. ३ ) च रथन्तरं 15 ( र० २. १. ६ ) च दैर्घश्रवसं ( ऊ० ५. २. ४ ) च देवस्थानं (र० १. २. ३) च वरुणसाम (ऊ० १२. २. ८) च रौरव-( ऊ० ६. ३. ११ ) यौधाजये (ऊ० ७. २. ५) । वृषा शोण ( सा० ८०६-८ ) इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ ४ ॥ 20

[ इति माध्यंदिनः पवमानः ॥ ]

समन्तमाद्यायाम् । यौधाजयमध्यास्यायाम् ॥ ४ ॥

बृहच्च (र० १. १. ६) वामदेव्यं (ऊ० १. १. ५) च श्यैतं च (ऊ० २. १. ३) कालेयं (ऊ० १. १. ७) च ॥ ५ ॥

इति पृष्ठानि ॥ 25

---

5. MyBAT. Om. द्वादशाक्षराण्यभिष्टोभेत्

यस्ते मदो वरण्य ( सा० ८१५-७ ) इति गायत्र-मौक्षे (ऊ० ४. १. १०)। काक्षीवतं (ऊ० १२. २. ६) च स्वाशिरामर्कः (र० ३. १. ४)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-(ऊ० १. १. ६) दैवोदासे (ऊ० १२. २. १०)। पुरोजिती वो 5 अन्धस (सा० ६६७-६) इति वाभ्रयश्वं (ऊ० १२. २. ११) च। वैतहव्यं (ऊ० १२. २. १२) च सोमसाम (ऊ० १२. २. १३) च त्रासदस्यवं ( ऊ० १२. २. १४ ) चान्धीगवं (ऊ० १. १. १२) च कावमन्त्यम् (ऊ० १. १. १३) ॥ ६ ॥

इत्यार्भवः पवमानः ॥

10 सफदैवोदासे एकर्चे ॥ ६ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ७ ॥
अग्ने त्वं नो अन्तम (सा० ११०७-६) इति सत्रासाहीयं (ऊ० १२.२.१५) सौभरम् (ऊ० १. १. १६) उद्वंशीयम् (ऊ० ६.१.८) ॥ ८ ॥

इत्युक्थानि ॥

15 द्वात्रिंशाः पवमानाः। पञ्चदशान्याज्यानि। सप्तदशानि पृष्ठानि। एकविंशोऽग्निष्टोमः सोक्थः ॥ ८ ॥

इष्टाहोत्रीयमवभृथसाम। समस्यमन्यवे विश इति वा। इष्टाहोत्रीयमभिषेचनीये। समस्येति वे-(ला० श्रौ० सू० २. १२. ४-५)ति वचनात्। अभिषेचनीयेनेष्ट्वा तस्य साक्षादवभृथमकृत्वा तद्दीक्षित 20 एव दशाहे ततो दशपेयेन यजेत। अभिषेचनीयदशपेययोर्मध्ये संसृपेष्टयः सन्ति। तासामन्तेषु सनामग्रहां सुब्रह्मण्यामाह्वयेत्। अभिषेचनीयदशपेयावन्तरेण सदा नामग्रहः ( ला० श्रौ० १.४.७ ) इति वचनात् ॥ ९ ॥

-4 इति अभिषेचनीयः ॥

---

16. MyBV[1]. सोक्थ्यः forसोक्थः

## राजसूयः—दशपेयः

वरुणस्य सुषुवाणस्ये-(तां० ब्रा० १८. ९. १-२)त्यादि दशपेयस्य ब्राह्मणम् । सूत्रं तु–तस्य ब्राह्मणं दश दश चमसमभियन्तीति । सुब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षड् त्वान्ये (ला० श्रौ० सू० ९. २. २९) इत्यादि ॥ 5

स्तोत्रक्लृप्तिमाह—

राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् ( सा० ८३६-४० ) इति पुरस्तात् पर्यासस्य तृचपञ्चर्चे । मैधातिथस्य लोके सदोविशीयम् (ऊ० १२. २. १६)। रौरवस्य मैधातिथम् (ऊ० ६. ३. ६) । श्रायन्तीयं ब्रह्मसाम (ऊ० ५. २. ९)। पौष्कलस्य लोके श्रुध्यम ( ऊ० ९. १. १० ) । श्यावाश्वस्य यज्ञायज्ञीयम् (ऊ० ८.२.१६)। वारवन्तीयमग्निष्टोमसाम स्वासु (सा० १६३४-६ ; ऊ३ १२. २. १७) ॥ १ ॥ 10

उद्धरत्युक्थानि ॥ २ ॥

समानमितरमायुषैकाहिकेन ॥ ३ ॥ 15

सर्वः सप्तदशः ॥ ४ ॥

इति । उपास्मै गायता (सा० ६५१-३) दविद्युतत्या रुचा (सा० ६५४-६) राजा मेधाभिरीयते ( सा० ८३३-५ ) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् ॥ 20

अग्न ( सा० ६६०-२ ) आ नो मित्रा ( सा० ६६३-५ ) आयाहीन्द्राग्नी (सा० ६६६-७१) इत्याज्यानि ॥ 22

---

5. T. स्तोम for स्तोत्र
19. MyBTKA. Om. पवमानस्य ··· चौशनमन्त्यम् (p. 238, L. 4)

उच्चा ते (सा० ६७२) गायत्रं चामहीयवं (ऊ० १.१.१) च। अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) च सदोविशीयं (ऊ० १२. २. १६) च मैधातिथं (ऊ० ६. ३. ६) च यौधाजयं (ऊ० ८. २. १६) चौशनमन्त्यम् (ऊ० १. १. ४)। द्विहिंकारमाद्यायाम्। यौधाजयमध्यास्यायाम्॥

रथन्तरं (र० १. १. १) चं वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ६) च कालेयं (ऊ० १. १. ७)चेति पृष्ठानि॥

स्वादिष्ठया (६८६-४१) इति गायत्र-संहिते (ऊ० १.१.८) पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-(ऊ० १. १. ६) श्रुध्ये (ऊ० ६. १. १०) एकर्चयोः। पुरोजिती वो अन्धस (सा० ६६७-६) इति यज्ञायज्ञीयं (ऊ० ८. २. १६) चान्धीगवं (ऊ० १.१. १२) च कावमन्त्यम् (ऊ० १. १. १३)॥

स्वासु वारवन्तीय-(सा०१६३४-६; ऊ०१२.२.१७)मग्निष्टोमसाम। सर्वोऽयं दशपेयः सप्तदशः॥ ४॥

इति दशपेयः॥ १४-३॥

---

## राजसूयः—केशवपनीयः प्रतीचीनस्तोमापरनामा

अथ केशवपनीयः। तस्य ब्राह्मणम्—यदेषोऽर्वाचीनः स्तोमः केशवपनीयो भवति (तां० ब्रा० १८. १०. १०) इत्यादि। संवत्सरादूर्ध्वं केशवपनीयाय दीक्षेत। तस्य पौर्णमास्यामतिरात्र (ला० श्रौ० सू० ६. ३. १-१६) इत्यादि सूत्रम्। प्रतीचीनः स्तोमः उत्तरः (नि० सू० ७. ६.) इति निदानम्। अथ कल्पः—

22. C. Om. अथ कल्पः ··· बहिष्पवमानम् (p. 239, L. 6)

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥ 5

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८ ; ८८०-२) ॥ २ ॥

इत्याज्यानि ॥

परीतो षिञ्चता सुतम् (सा० १०१३-५) इति समन्तं च (ऊ० ९. १. ३) यशश्चा-(र० १. २. ६)भीशवं च (ऊ० ५.२.६) यौधाजयं च (ऊ० ८. २. ५)। वृषा शोण (सा० ८०६-८) 10 इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ ३ ॥

बृहच्च (र० १. १. ५) पृष्ठम् । त्वमिन्द्र प्रतूर्तिषु (सा० १६३७-८) इति अभीवर्तो ब्रह्मसाम (ऊ० १२.२.१८) ॥४॥

समानमितरमायुषोऽतिरात्रेण ॥ ५ ॥

इति । तत्र माध्यंदिनः । उच्चा ते जातमन्धसः (सा० 15 ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च। परीतो-षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं (ऊ० ९.१.३) च यशश्चा-(र० १. २. ६)भीशवं (ऊ० ५. २. ६) च। यौधाजयं (ऊ० ५. २. ६) च । वृषा शोण (सा० ८०६-८) इति पार्थमन्त्यम् (ऊ० ७. १. ६)। समन्तमाद्यायाम् । यौधाजय- 20 मध्यास्यायाम् ॥ 21

7. LC. अग्न आ नो मित्रायाहीन्द्राग्नी for अग्निं दूतं वृणीमहे

9. LCBMyKA. Om. परीतो ··· मतिरात्रेणेति तत्र माध्यंदिनः (L. 15)

12. T. Om. च

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च ।
त्वमिन्द्र प्रतूर्तिषु (सा० १६३७-८) अभीवर्तः (ऊ० १२. २. १८) ।
स्वासु कालेयम् (ऊ० १. १. ७) इति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १.१.८) ।
5 पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-पौष्कले (ऊ० १. १. ९-१०) ।
पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वान्धीगवे
(ऊ० १. १. ११-२) । काव-(ऊ० १.१.१३)मन्त्यम् । सफपौष्कल-
श्यावाश्वान्येकर्चानि ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ प्रमंहिष्ठीयं
10 (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) नार्मेधम् (ऊ०
१. ८) इत्युक्थानि ॥ षोडशी नास्ति । आयुरतिरात्रे तस्याभावात् ।
रात्रिः संधिश्च प्रकृतिवत् । आयुरतिरात्रस्य यद्यप्यहीनिकीं रात्रिं
वक्ष्यति तथापि एकाहप्रकरणे तस्याप्यक्तत्वात् नात्रातिदेशः ॥ ५ ॥

स्तोमक्लृप्तिमाह—

15 एकविंशं प्रातःसवनम्, सप्तदशं माध्यंदिनं सवनम्, पञ्चदशं
तृतीयसवनम् सोक्थं सरात्रिकम् । त्रिवृत् संधिः ॥ ६ ॥

इति ॥ ६ ॥

इति केशवपनीयः ॥ १४-४ ॥

---

## राजसूयः—व्युष्टिद्विरात्रः

### प्रथममहः

20 उक्तः केशवपनीयः । तस्योदवसानीययेष्ट्वानिष्ट्वा[वा]पौर्णमासेन
21 व्युष्टिद्विरात्राय दीक्षेत । तस्य ब्राह्मणम्—अप्रतिष्ठितो वा एष यो

---

12. LCV[1] यद्यथा for यद्यपि
20. C. °वसानीयेष्ट्वा, MyKA. °वसानीयेनानिष्ट्वा for °वसानीययेष्ट्वा

राजसूयेनाभिषिच्यते (तां० ब्रा० १८. ११. ५-११) इत्यादि ॥

प्रथमस्याह्नः कल्पः—

ज्योतिष्टोममाज्यबहिष्पवमानम् । स्तोमाश्च । अथ यदेव द्विदिवसस्य पूर्वमहस्तदेतत् ॥ १ ॥

इति । उप-द्रवि-रवे-(सा० ६५१-६)ति बहिष्पवमानम् । अग्न आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १. १. १) च । पुनानः सोम (सा० ६७५-६) इति रौरवयौधाजये (ऊ० १. १. २-३) । औशनमन्त्यम् (ऊ० १. १. ४) । रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.७) च कालेयं (ऊ० १. १. ६) चेति पृष्ठानि । स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-हाविष्कृते (ऊ० ११. २. ७) । अया पवस्व देवयुः-रवते हर्यतो हरिर् (सा० ६७२-३) इत्येकर्चयोः सफ-(ऊ० १. २. १५)पौष्कले (ऊ० ९. २. २) । पुरोजिती व (सा० ६९७-९) इत्यौदला-(ऊ० १०. ६. ३)न्धीगवे (ऊ० १. १. १२) । कावमन्त्यम् (ऊ० १. १. १३) । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । ज्योतिष्टोमस्तोमः । इदमहर्दधिभक्षान्तम् । रात्रौ वसतीवरीपरिहरणकाले सनामग्रहणं सुब्रह्मण्याह्वानम् ॥ १ ॥

इति व्युष्टिद्विरात्रस्य प्रथममहः ॥ १४-५ ॥

---

## द्वितीयमहः

द्वितीयस्याह्नः—

पवस्व वाचो अग्रियः (सा० ७७५-७) एष देवो अमर्त्यः (सा०

---

18. MyBKAT. °ग्रहण for °हरण;

१२५६-६५) एष धियो यात्यण्व्या (सा० १२६६-७३) आ ते दक्षं मयो भुवम् (सा० ११३७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

तृचसूक्तानामादिग्रहणेन विधिः ॥ १ ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८; ८००-२) इत्याज्यानि ॥२॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं च हाविष्कृतं (ऊ० ११. २. ८) च जराबोधीयं (ऊ० ९. १. ९) चर्षभश्च पवमानः (ऊ० १२. २. १९) परीतो षिञ्चता सुतम् (सा० १०१३-५) इति समन्तं (ऊ० ९. १. ३) दैर्घश्रवसम् (ऊ० ५. २. ४) उत्सेधोऽ-(ऊ० १२. २. २०) यं सोम (सा० १४७१-३) इति पार्थम् (ऊ० ९. २. ५) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं च (ऊ० २. २. ३) वैखानसं च (ऊ० ४. १. ९) ॥ ४ ॥

इति पृष्ठानि ॥

परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्र-संहिते (ऊ० ९. २. ६)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीय-(ऊ० ९. २. ७)विशोविशीये (ऊ० १३. १. १)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति निषेधः (ऊ० १३. १. २) श्यावाश्वं (ऊ० ११. २. १०) क्रौञ्चम् (ऊ० २. १. ९)। धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽन्त्यः (र० ३. १. १०) ॥ ५ ॥

इत्यार्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ७ ॥

साकमश्वं सौभरं नार्मेधमित्युकूथानि । गौरीवितं षोडशिसाम । रात्रिः संधिश्च ॥ ७ ॥

अथ स्तोमविधिः—

चतुर्विंशाः पवमानाः । पञ्चदशानि त्रीण्याज्यानि । सप्तदशमच्छावाकस्य । एकविंशानि त्रीणि पृष्ठानि । त्रिणवमच्छावाकस्य । 5
त्रयस्त्रिंशोऽग्निष्टोमः । एकत्रिंशान्युकूथानि सषोडशिकानि । पञ्चदशी रात्रिः । त्रिवृत्संधिः ॥ ८ ॥

इति उदवसानीयान्तमहः ॥ ८ ॥

इति व्युष्टिद्विरात्रः ॥ १४-६ ॥

---

राजसूयः—क्षत्रस्य धृतिः 10

व्युष्टिद्विरात्रेणेष्ट्वा अवकाशसद्भावे तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेत । अवकाशाभावे उत्तरः पूर्वपक्षः तस्मिन्यजेत । तस्य कल्पः—

क्लृप्तो ज्योतिष्टोमः क्षत्रस्य धृतिः ॥ १ ॥

इति । नैकाहौ नाहीनौ । चातुर्मास्यानि राजसूयश्च । अन्ये च । 15
तृतीयेयं जातिः कात्यायनेनोक्ता ॥ १ ॥

इति क्षत्रस्य धृतिः । १४-७॥

समाप्तो राजसूयः ॥ १४ ॥

---

इति आर्षेयकल्पव्याख्यायां श्रीवामनार्यसुतवरदराजविरचितायां विवृत्याम् एकाहेषु द्वितीयोऽध्यायः आदितश्चतुर्थः ॥ ४ ॥ 20

---

8. V[1]MyBKA. Om. उदवसानीयान्तमहः
12. LCV[2]. Om. व्युष्टि ; MyBKA. संभवे for सद्भावे ; V[1]. Cm. व्युष्टि··· धृतिः ॥ इति
15. MyBKA. अन्यैव for अन्ये च
19. V[2]L. एकाहे for एकाहेषु

## पञ्चमोऽध्यायः

# राट्

अथ वक्ष्यमाणा एकाहा द्वन्द्वसंज्ञाः। प्रायेण द्वन्द्वभूतत्वात्। अथैष राट्। यो राज्य (तां० ब्रा० १९. १. १-२) इत्यनुवाकेन
5 राडुक्तः। तस्य कल्पः—

राजा मेधाभिरीयते (सा० ८३३-५) उत्ते शुष्मास ईरत (सा० १२०५-९) इति पुरस्तात् पर्यासस्य तृचपञ्चर्चे। ज्योतिष्टोमी गायत्री। वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ १ ॥

10 यो राजा चर्षणीनाम् (सा० ९३३-४) इत्यभीवर्तो ब्रह्मसाम (ऊ० ७. २. ७) ॥ २ ॥

समानमितरं प्रथमेन साहस्रेण ॥ ३ ॥

इति। पवस्व वाचो अग्रियो (सा० ७७५-७) दविद्युतत्या रुचा (सा० ६५४-६) राजा मेधाभिरीयते (सा० ८३३-५) उत्ते शुष्मास
15 ईरते (सा० ११०५-९) पवमानस्य ते कव (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्न आ याहि (सा० ६६०-२) मित्रं वयम् (सा० ७९३-५) इन्द्रमिद्गाथिन (सा० ७९६-८) इन्द्रे अग्न (सा० ८००-२)
19 इत्याज्यानि ॥

---

7. My. Om. इति पुरस्तात् ··· ईरते (L, 16); LMyBKA[1]A[3]V[1-3] ज्योतिष्टोम° for ज्योतिष्टोमी

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च । परीतोषि-(सा० १३१३-५)त्समन्तमाद्यायाम् (ऊ० ६. १. ३)। रथन्तरं तिसृषु (र० २. २. ६)। दैर्घश्रवसं (ऊ० ५. २. ४) च। यौधाजयमध्यास्यायाम् (ऊ० ७. २. ५)। वृषा शोण (सा० ८०६-८) इति पार्थमन्त्यम् (ऊ० ७. १. ६)॥ 5

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । यो राजा चर्षणीनाम् (सा० ६३३-४) इत्यभीवर्तः (ऊ० ७.२.७) स्वासु कालेयम् (ऊ० १. १. ७) इति पृष्ठानि ॥

स्वादिष्ठये(सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्रमच्छा (सा० ६९२-६) इति सफ-श्रुध्ये (ऊ० १. १. ९) 10 एकर्चयोः (ऊ०९.१.२०)। पुरोजिती-(सा० ६९७-९)ति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२)। सूर्यवतीषु कावमन्त्यम् (ऊ० २.१.११)।

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥ ३ ॥

अथ स्तोमक्लृप्तिः—

सप्तदशाः पवमानाः । त्रिवृन्त्याज्यानि । पञ्चदशानि पृष्ठानि । 15
एकविंशोऽग्निष्टोमः ॥ ४ ॥

इति ॥ ४ ॥

इति राट् ॥ १ ॥

---

## विराट्

अथैष विराट् (तां० ब्रा० १९. २. १) इत्यनुवाकेन विराडुक्तः। 20
तस्य कल्पः—

यवं यवं नो अन्धस (सा० ९७५-८) इत्यनुरूपः । आमहीयवा- 22

---

13. KMy. after °साम ins. सर्वाणि स्तोत्राणि दशिनि (My °नी) लति (दर्शितानि ?)

15. V[1]. Om. सप्तदशाः ··· इति

दुत्तरमाभीकम् ( ऊ० ६. १. १० ) आन्धीगवादर्कपुष्पम् ( ऊ० १३. १. १३ ) ॥ १ ॥

समानमितरं ज्योतिष्टोमेन सर्वो दशी ॥ २ ॥

इति। उपास्मै ( सा० ६५१-३ ) यवं यवं नो अन्धसः (सा० 5 ६७५-८) पवमानस्य ते कव (सा० ६५७-६) इति बहिष्पवमानम् ॥

अग्न आ नो-मित्रायाह्वी इन्द्राग्नी ( सा० ६६०-७१ ) इत्याज्यानि ॥

उच्चा ते (६७२-५) गायत्रं चामहीयवं (ऊ० १. १. १) चाभीकं च (ऊ० ६. १. १०)। पुनानः सोम ( सा० ६७५-६ ) 10 रौरवयौधाजये (ऊ० १. १. २-३)। औशनमन्त्यम् (ऊ० १. १. ४) । औशनयौधाजये तृचयोः। एकर्चाः इतरे । संभवति स्तोमेऽन्त्यं सर्वत्र । तृचे द्वितीयं चेदरण्येगेयम् । तदभावे यदन्त्यात् पूर्वम् ( ला० श्रौ० सू० ६. ४. ४ ) इति वचनात् । गायत्र्यामहीयवाभीकानि सामतृचः। त्रीनेकतृचे नानास्तोत्रीयासु (ला० 15 श्रौ० सू० ६. ३. १४) इति वचनात् ॥

रथन्तरं (र० १. १) च वामदेव्यं ( ऊ० १. १. ५ ) च नौधसं (ऊ० १. १ ७) च कालेयं (ऊ० १. १. ६) चेति पृष्ठानि ॥

स्वादिष्ठया (सा० ६८६-६१) इति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्रमच्छा (सा० ६६२-६) इति सफ-पौष्कले (ऊ०१.१.६-१०) । 20 पुरोजिती (सा० ६६७-६) इति श्यावाश्वान्धीगवा-(ऊ० १.१.११-२)र्क-पुष्पाणि (ऊ०१३.१.१३) । कावमन्त्यम् (ऊ०१.१.१३)। अन्त्यवर्जमेकर्चाः। अनुष्टुभि सामतृचः । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । सर्वाणि स्तोत्राणि दशीनि। तिसृभ्यो हिंकरोति । 24 स पराचीभिश्चतसृभ्यो हिंकरोति । स एकया स द्वाभ्यां

---

5. PV[1]. दशदशी for दशी

14. T. अभीकैः for अभीकानि

23. KV[1] दशिनि, IB, दशिनी, LMy. दशनि for दशीनि

स एकया तिसृभ्यो हिंकरोति । स पराचीभिरिति दशिनो विष्टुतिरिति । तदुक्तम्—दशिनि चतुष्को मध्ये परिवर्त्तिनी पर्यायावभितः (ला० श्रौ० सू० ६. ७. १) इति ॥ २ ॥

इति विराट् ॥ २ ॥

---

## औपशदः

अथैष औपशदः (तां० ब्रा० १९. ३. १) इत्यनुवाकेन औपशदः उक्तः । तस्य कल्पः—

एष शुष्म्यसिष्यदद् (सा० १२९०) इति पुरस्तात् पर्यासस्यैकर्चः । आमहीयवादुत्तरम् । पवस्व मधुमत्तम ( सा० ६९२-३ ) इति च्यावनम् (ऊ० १३. १. ४) । नौधसस्यर्क्षु जनित्रम् (सा० ६८५-६ ; ऊ० १३.१.५) । परि प्रधन्वेति (सा० १३६७-९) सफम् (ऊ० १०. १. ६) । पर्यूषु (सा० १३६४-६) इति श्यावाश्वम् (ऊ० ६. १. १८) । पुरोजिती वो अन्धस (सा० ६९७-९ ) इत्यान्धीगवं च ( ऊ० १. १. १२ ) जनित्रं च ( ऊ० १३. १. ६ ) ॥ १ ॥

समानमितरं ज्योतिष्टोमेन सस्तोमम् । एकैका स्तोत्रीयोपजायते ॥ २ ॥

इति । उपास्मै दविद्युतत्या रुचा (सा० ६५१-६) एष शुष्म्यसिष्यदत् ( सा० १२९० ) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् ॥

अग्न आ नो मित्रायाहि इन्द्राग्नी ( सा० ६६०-७१ ) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) च । पवस्व मधुमत्तम (सा० ६९२-३) इति च्यावनम् (ऊ०

१३. १. ४) । पुनानः सोम धारय (सा० ६७५-५) इति रौरवयौधाजये (ऊ० १. १. २-३) । औशनमन्त्यम् (ऊ० १. १. ४) । च्यावनमेकस्याम् । ककुभ्यत्र माध्यंदिन एकर्चः । तस्यामिति वचनात् ॥

रथन्तरं (र० १. १. १) वामदेव्यं (ऊ० १. १. ५) च नौधसस्यर्क्षु जनित्रम् (ऊ० १३. १. ५)। स्वासु कालेयम् (ऊ० १. १. ७) इति पृष्ठानि ॥

स्वादिष्ठया (सा० ६८९-९१) इति गायत्र-संहिते (ऊ० १. १. ८)। परि प्र धन्व (सा० १३६७-९) इन्द्रमच्छ (सा० ६९४-६) इति सफ-पौष्कले (ऊ० १. १. ९-१०)। पर्यूषु (सा० १३६४-६) इति श्यावाश्वम् (ऊ० ६. १. १८)। पुरोजिती (सा० ६९७-९) इति आन्धीगवं (ऊ० १. १. १२) च जनित्रं (ऊ० १३.१.१६) च कावमन्त्यम् (ऊ० १. १. १३)। सफपौष्कलश्यावाश्वान्येकर्चानि परि प्र धन्वेति द्विपदा। पर्यूष्विति पिपीलिकामध्यानुष्टुप्। पृष्ठेषु पूर्वं जनित्रम् । आर्भवे तूत्तमम् । तदुक्तमुपग्रन्थे—अनुपूर्वमौपशदनवसप्तदशयोः पूर्वमतोऽन्यत्र (उप०ग्र०सू० ४.२) इति ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। एकैका स्तोत्रीयोपजायत इत्यस्यायमर्थः । बहिष्पवमानप्रभृतियज्ञायज्ञीयान्तेषु स्तोत्रेषु ज्योतिष्टोमस्तोमा एकैकया स्तोत्रीयया वृद्धाः कार्या इति। ततश्वेयं स्तोमक्लृप्तिः। दशि बहिष्पवमानम्। षोडशान्याज्यानि । षोडशो माध्यंदिनः पवमानः। अष्टादशानि पृष्ठानि । अष्टादश आर्भवो द्वाविंशोऽग्निष्टोम इति । तत्र षोडशस्य विष्टुतिः । पञ्चभ्यो हिंकरोति । स तिसृभिः स एकया स एकया स तिसृभिः स एकया षड्भ्यो हिंकरोति । स द्वाभ्यां स एकया स तिसृभिरिति । दशरात्रिकेभ्य एकया ज्यायःसु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत् । ब्रह्मायतनीया तु तेषु (ला० श्रौ० सू० ६.६. १७-८)इति

---

3. L. ककुद्यत्र, KAMy. ककुबुत्तर for ककुभ्यत्र

वचनात् । अष्टादशं सप्तदश आवपेदिति गौतमः । न्यायविहितः स्यादिति धानंजय्यः (ला०श्रौ०सू०६.७.१२-३)। तत्रावापपक्षे गर्भिणी-विष्टुत्या उत्तमे पर्याये अष्टाभ्यो हिंकरोति । स द्वाभ्यां स तिसृभिः स तिसृभिरिति विदध्यात् । समपर्यायत्वं न्यायविहितत्वम् । षड्भ्यो हिंकरोति स तिसृभिः स द्वाभ्यां स एकया षड्भ्यो 5
हिंकरोति स एकया स तिसृभिः स द्वाभ्यां षड्भ्यो हिंकरोति । स द्वाभ्यां स एकया स तिसृभिरिति तस्मिन् पक्षे विष्टुतिः । द्वाविंशस्य सप्तिन्या विष्टुत्या उत्तमे पर्याये आवपेत्। अष्टाभ्यो हिंकरोति। स च तिसृभिः स एकया स तिसृभिरिति ॥ २ ॥

इति औपशदः ॥ ३ ॥ 10

---

## पुनस्तोमः

औपशदानन्तरम् आपस्तम्बेन सर्वतोमुख उक्तः । सर्वतोमुखेन यजेत यः कामयेत सर्वमिदं भवेयम् इति। मध्ये गार्हपत्यः। प्रतिदिशं सौमिका विहाराः । त्रिवृत् प्राच्यां दिशि । पञ्चदशो दक्षिणतः। सप्तदशः पश्चात् । एकविंश उत्तरतः (आप०श्रौ० २२.११.१२-३) इति। तानि च त्रिवृदादीनि 15
चत्वारि मुखानि बृहद्रथन्तरपृष्ठस्य षडहस्य चतुर्भिरहोभिः कर्तव्यानि। स्तोमान्वयात् । यत्र हि षडहस्य संपूर्णता तत्रैव वैरूपादीनां प्रवृत्तिः। न्यूनतायां तु बृहद्रथन्तरयोरेव व्यत्यासेन प्रयोगः । तथा च कल्पकारः—चतुर्वीरादिषु बृहद्रथन्तरेणैव पृष्ठेन कल्पयति। न तु वैरूपादीनि यथासंभवम्। [इति]। निदानकारश्चाह— 20

---

1. MyBKAT²C. अष्टादशं for अष्टादशे
7. KAB. after इति ins विदध्यात्
18. LV¹⁻²MyBTA. व्यत्यासं, K. व्यत्यासः for व्यत्यासेन

अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव। न हि षाडहिकानि अनुभवन्ति। नान्यो व्यलोलुप्सीत् (नि० सू० ८. ६.) इति। छन्दोमेषु चाह— बृहद्रथन्तरे पृष्ठे न हि षाडहिकान्यनुभवन्ति नो व्यलोलुप्सीत् (नि०सू०४.६) इति। बृहद्रथन्तरपृष्ठं च षडहं पृष्ठ्यस्तोमसंज्ञं परस्तात् कल्प-
5 यिष्यति। ततश्च पृष्ठ्यस्तोमस्य चतुर्भिरहोभिरस्य चत्वारि मुखानि कार्याणि। तत्र प्रथमस्य मुखस्य क्लृप्तिः— उपास्मै गायता नर (सा०६५१-३) उपोषु जातमप्तुरम् (सा० १३३५-७) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम्॥

अग्न आ नो मित्रायाहीन्द्राग्नी (सा० ६६०-७१)
10 इत्याज्यानि॥

प्र सोमासो विपश्चित (सा० ७६४) इति गायत्रं प्रथमायाम्। अभि द्रोणानि बभ्रव (सा० ७६५) इत्याश्वं (ऊ. १. २. ११) द्वितीयायाम्। सुता इन्द्राय वायव (सा० ७६६) इति सोमसाम (ऊ. १. २. १२) तृतीयायाम्। प्र सोम देववीतय (सा० ७६७-८)
15 इति यौधाजयं (ऊ० १. २. १३) तिसृषु। प्र तु द्रव (सा० ६७७-६) इति औशनम् (ऊ० १. १. ४) अन्त्यम्॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि॥

20 प्र सोमासो मदच्युत (सा० ७६४-६) इति गायत्रं प्रथमायाम्। तस्यामेव संहितम् (ऊ० १ २. १४)। अया पवस्व देवयुः-पवते हर्यतो हरिः (सा० ७७२-३) इति जनुषैकर्चयोः
22 सफाक्षारे (ऊ० १.२.१५-६)। प्र सुन्वनाय (सा० ७७४) इत्यौदलं

2. व्यलोलुपस्वीत्, C. व्यलोलुप्वात् for व्यलोलुप्सीत्; V1-2C. चाभि for चाह; T. Om. छन्दोमेषु ··· व्यलोलुप्सीदिति
6. KAMy. Om. मुखस्य

(ऊ० ११.२.३) प्रथमायाम् । तस्यामेव गौतमम् (ऊ० १.२.१८) कावम् (ऊ० १. १. १३) अन्त्यं तिसृषु ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । सर्वाणि स्तोत्राणि त्रिवृत् ॥

अथ द्वितीयस्य—

पवस्व वाचो अग्रियो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) वृषा सोम (सा० ७८१-३) वृषा ह्यसि (सा० ७८४-६) पवमानस्य ते वयम् (सा० ७८७-९) इति बहिष्पवमानम् । द्वितीयादीनामपि मुखानां बहिरेव बहिष्पवमान-स्तवनम् । एकाहप्रकरणे विधानात् । कालभेदाभावाच्च ॥

अग्निं दूतं (सा० ७९०-२) मित्रं वयम् (सा० ७९३-५) इन्द्रमिद्गा-(सा० ७९६-९) चतुर्ऋचम् । इन्द्रे अग्न (सा० ८००-२) इत्याज्यानि । चतुर्ऋचे अन्त्याया उद्धारः ॥

वृषा पवस्व धारय (सा० ८०३-५) इति गायत्रं च यौक्ताश्वं (ऊ० द० ३९) च । पुनानः सोम धारय (सा० ६७५-६) इत्यैडंत्रिणिधने आयास्ये (ऊ० ११.२.२० ; २.१.१) । वृषा शोण (सा० ८०६-८) इति वासिष्ठम् (अ० २.१.२) अन्त्यम् । पार्थं (ऊ० ७. १. ६) केचिदिच्छन्ति ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २.१.३) च माधुच्छन्दसं (ऊ० २.१.४) चेति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च हाविष्मतं (ऊ० २. १. ५) च । पवस्वेन्द्रमच्छ (सा० ६९२-६) इति शङ्कु-सुज्ञाने (ऊ० २.१.६-७) एकर्चयोः । अयं पूषा रयिभगः (सा० ८१८-२०) इत्यासिताद्यं (ऊ० ११.२.२०) प्रथमम् । क्रौञ्चं

(ऊ० २. १. ९) तिसृषु। वृषा मतीनाम् ( सा० ८२१-३ ) इति यामम् (ऊ० २. १. १०) अन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

साकमश्वम् (ऊ० १.१.१५) । एवाहि ( सा० ८२४-६ ) इत्यामहीयवम् (ऊ० २.१.११) । इन्द्रं विश्वा (सा० ८२७-९) इत्याष्टादंष्ट्रं पूर्वम् (ऊ० २.१.१२) इत्युक्थानि । सर्वं पञ्चदशम् ॥

अथ तृतीयस्य—

दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) इषे पवस्व धारय ( सा० ८४१-३ ) इति बहिष्पवमानम् ॥

अग्निनाग्निः ( सा० ८४४-६ ) मित्रं हुवे (सा० ८४७-९) इन्द्रेण ता हुवे (सा० ८५०-२) इत्याज्यानि ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ०२.१.१३) च। अभि सोमास आयव (सा० ८५६-८) इति पौरुमद्गं प्रथमायाम् (ऊ० २.१.१४) । गौतमं तिसृषु (ऊ० २.१.१५)। अन्तरिक्षं ( र० १. १. ६ ) तिसृषु। आष्कारणिधनमध्यास्यायाम् (ऊ० २.१.१६ )। तिस्रो वाच (सा० ८५९-६१) इत्यङ्गिरसां क्रोशमन्त्यम् (ऊ० २.१.१७) ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च। वयं घ त्वा (सा० ८६४-६) इति महावैष्टम्भम् (ऊ० २.१.१८)। तरणिरित्सिषासति (सा० ८६७-८) इति रौरवम् (ऊ० २.१.१९) इति पृष्ठानि ॥

तिस्रो वाच उदीरत ( सा० ८६९-७१ ) इति गायत्रं च पार्ष्ठौहं ( ऊ० २.१.२० ) च । आ सोता परि षिञ्चत (सा०

१३९४) सखाय आ निषीदत ( सा० ११५७ ) इति वाचः साम शौक्तं (ऊ० २.२.१-२) चैकर्चे। सुतासो मधुमत्तम (सा० ८७२-४) इति त्वाष्ट्रीसामनी स्वाराद्यत्रिणिधने (ऊ० २.२.४; ऊ० १५.१.१)। पवित्रं त (सा० ८७५-७) इत्यरिष्टम् (र० १. १. ८) अन्त्यम् ॥ 5

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

प्रमंहिष्ठीयं ( ऊ० २. २. ५ ) हारिवर्णं ( ऊ २. २. ६ ) तैरश्च्य-( ऊ० २.२.७ )मित्युक्थानि॥ सर्वः सप्तदशः॥

अथ चतुर्थस्य—

पवमानो अजीजनत् ( सा० ८८९-९१ ) पुनानो अक्रमीदभि (सा० ९२४-६) प्रयद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८९८-९०३) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) इति बाहष्पवमानम् ॥ 10

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) अयं वां मित्रावरुणा (सा० ९१०-२) इन्द्रो दधीचो अस्थभिः ( सा० ९१३-५ ) इयं वामस्य मन्मनः (सा० ९१६-८) इत्याज्यानि॥ 15

पवस्व दक्षसाधन ( सा० ९१९-२१ ) इति गायत्रं चाथर्वणं (र० १. १. ९) च निधनकामं (ऊ० २.२.८) च। तवाहं सोम रारण ( सा० ९२२-३ ) इत्याष्टादंष्ट्रम् आभीशवं च स्वःपृष्ठं चाङ्गिरसम् ( ऊ० २. २. ९-११ ) सोमः पवते (सा० ९४३-५) जनित्रम् (ऊ० ८.२.१) अन्त्यम्॥ 20 21

8. T. सर्वं सप्तदशम् for सर्वः सप्तदशः

9. LCV[1-2]. Om. अथ

बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च त्रैशोकं ( ऊ० २.२.१३ ) च पृश्नि (ऊ० २.२.१४) चेति पृष्ठानि ॥

परि प्रिया दिवः कविः ( सा० ६३५-७ ) इति गायत्रं
5 चौर्णायवं (ऊ० २.२.१५) च। त्वं ह्यङ्ग दैव्य (सा० ६३८-६) सोमः पुनानः ऊर्मिणा (सा० ६४०-२) इति बृहत्का-(ऊ० २.२.१६) तीषादीये (ऊ० २.२.१७)। पुरोजिती वो अन्धस (सा० ६६७-६) इति नानदा-(ऊ० २.२.१८)न्धीगवे (ऊ० १. १. १२)। प्र त आश्विनीर् ( सा० ८८६-८ ) इति लौशम् ( ऊ० ८.२.२ )
10 अन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

अग्निं वो वृधन्ताम् ( सा० ६४६-८ ) इति सैन्धुक्षितम् । वयमु त्वाम् (सा० ७०८-६) इति सौभरम् ( ऊ० १.१.१६ ) । इममिन्द्र (सा० ६४६-५१) इति वसिष्ठस्य प्रियम् (ऊ० ३.१.२१)
15 इत्युक्थानि ॥

प्रत्यस्मै पिपीषत (सा० १४४०-३) इति गौरीवितं षोडशिसाम । पृष्ठ्यस्तोमे हि कल्पकारो वक्ष्यति—चतुर्थस्याह्नः प्रत्यस्मै पिपीषत इति गौरीवितं षोडशिसामे(आ०क० ७. १५. १)ति । सूत्रकारश्चाह— विराडपाये चापैत्यन्यासु चेति । आद्येत्यभियुक्ता चतुष्टोमवदस्य
20 ज्योतिष्टोमेनैव रथन्तरपृष्ठेन यथास्तोमक्लृप्तेन चत्वारि मुखानि कार्याणीत्याह । त्रिवृदादिस्तोमस्य क्लृप्तिः विश्वसृजामयने
22 वक्ष्यते ॥

---

19. MyKA. विराडपाया चा(द्वाA)वैपतीत्यग्रासु वा आद्येत्यभिता, B. विराडपाया चावैपग्रीत्या सुया आद्येत्यभित्या, T. विराडपाये चापैत्यन्यानुवेति आद्येत्यभित्वा, for विराडपाये चापैत्यन्यासु चेति । आद्येत्यभियुक्ता ; V[1-2]. विराडपाये च [ ··· ] आद्येत्यभि° ; C. चतुष्टोमस्यास्य, V[1-2]L. चतुष्टोमस्यादस्य for चतुष्टोमवदस्य

अथैष पुनस्तोम (तां० ब्रा० १९. ४) इत्यनुवाकेन पुनस्तोम उक्तः। तस्य कल्पः—

रौरवयौधाजये अन्तरा मैधातिथम् (ऊ० १३. १. ७)। नौधसस्यर्क्षु शुद्धाशुद्धीयं ब्रह्मसाम यत् पदनिधनम् (ऊ० १३. १. ८)। संहितस्य लोके गौषूक्तम् (ऊ० १३. १. ९)। पौष्कलस्याश्वसूक्तम् (ऊ० १३. १. १०) प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) शुद्धाशुद्धीयं स्वासु यदैडम् (ऊ० ७. २. १२) ॥ १ ॥ 5

समानमितरं ज्योतिष्टोमेन ॥ २ ॥

इति। उप-दवि-पवे(सा० ६५१-९)ति बहिष्पवमानम्। अग्न आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १. १. १) च। पुनानः सो (सा० ६७५-६) रौरवं (ऊ० १. १. २) प्रथमायाम्। मैधातिथं (ऊ० १३. १. ७) द्वितीयायाम्। यौधाजयं (ऊ० १. १. ३) तृतीयायाम्। औशनमन्त्यम् (ऊ० १. १. ४)। त्रीण्यन्यतरस्यां संभवेयुर् (ला० श्रौ० सू० ६. ३. १७) इति वचनात् बृहत्यामेकर्च-करणम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १.१.५) च नौधसस्यर्क्षु पदनिधनं शुद्धाशुद्धीयं (ऊ० १३. १. ८)। स्वासु कालेयम् (ऊ० १.१.७) इति पृष्ठानि। स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-गौषूक्ते (ऊ० १३. १. ९)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-पौष्कले (ऊ० १. १. ९-१०)। पुरोजिती वो (सा० ६९७-९) इति श्यावाश्वान्धीगवे (ऊ० १. १. १२-३)। कावम् (ऊ० १. १. १४) अन्त्यम्। काववर्जमेकर्चाः ॥ २ ॥ 10 15 20

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ३ ॥ 24

---

3. LV². °यौधजययोरन्तरा, C. °यौधाजयेरन्तरा for °यौधाजये अन्तरा
16. MyBKAT. एकर्चाकरणम् for एकर्चकरणम्

प्रमँहिष्ठीयं हारिवर्णं शुद्धाशुद्धीयं स्वासु यदैडमित्युक्थानि ॥ ३ ॥

अथ स्तोमक्लृप्तिः—

द्वादशं माध्यंदिनं सवनम्। त्रिवृती अभितः ॥ ४ ॥

इति । प्रातःसवनं सर्वं त्रिवृत् । माध्यंदिनं सवनं तृतीयसवनं त्रिवृदित्यर्थः। द्वादशस्तोमस्य विष्टुतिः। चतसृभ्यो हिंकरोति । स द्वाभ्यां स एकया स एकया चतसृभ्यो हिंकरोति। स एकया स द्वाभ्यां स एकया चतसृभ्यो हिंकरोति। स एकया स एकया स द्वाभ्यामिति । आवापस्थानेषु द्विकाविष्टावाः । तदुक्तम्—द्वादशे तृचभागस्थानेषु द्विकाविष्टावाः (ला० श्रौ० ६. ७. ४)। आवापस्थानेषु वेति ॥ ४ ॥

इति पुनस्तोमः। ।४॥

---

## चतुष्टोमौ

### प्रथमः

अथैष चतुष्टोम (तां० ब्रा० १६. ५) इत्यनुवाकेन पूर्वश्चतुष्टोम उक्तः। अथ यस्य चत्वारि स्तोत्राणी-(तां० ब्रा० १६. ६)त्युत्तरः । एतौ च गौतमौ चतुष्टोमाविति सूत्रान्तरेषु प्रसिद्धिः । तयोः पूर्वस्य कल्पः—

अयं पूषा रयिर्भगः (सा० ८१८-२०) इति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति। पुनस्तोमस्याज्यमध्यंदिनम्। तीव्रसुतः पृष्ठानि । ज्योतिष्टोम आर्भवः। आन्धीगादुत्तरं यज्ञायज्ञीयम् (ऊ० ८.२.१६)। यज्ञायज्ञीयस्यर्क्षु (सा० ७०३-४) वारवन्तीयेन षड्भिः (ऊ० १३. १. ११) साकमश्वस्य षड्भिः (ऊ० १३. १. १३) हारिवर्णस्य षड्भिः (ऊ० १३. १. १४) तैरश्च्यस्य षड्भिर् (ऊ० १३. १. १४) अनु ब्राह्मणस्तोमाः ॥ १ ॥

इति । अयं पूषेति तिस्रोऽनुष्टुभः । स तिसृभिस्त्रिभिः पादैश्चतस्रो गायत्रीः कुर्यात् । तद्यथा—अयं पूषा रयिर्भगोम् । वियव्ध्यद्रोदसी उभोम् । सोमासः कृण्वते पथोम् । पवमानश्रवाय्योम् । प्रथमा रेतस्या । उत्तमा रथन्तरवर्णा । इति बहिष्पवमानम् ॥

अग्न आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ )त्याज्यानि ॥ 5

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) च । पुनानः सो (सा० ६७५-६) रौरवं (ऊ० १.१.२) मैधातिथं (ऊ० १३. १. ७) यौधाजयम् (ऊ० १. १. ३) इति सामतृचः । औशनम् (ऊ० १. १. ४) अन्त्यम् ॥

रथन्तरं (र० १. १. १) च वामदेव्यं ( ऊ० १. १. ५ ) 10 च श्रायन्तीयं (ऊ० ५.२.६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १३.१.६)। पवस्वेन्द्रमच्छा ( सा० ६६२-४ ) इति एकर्चयोः सफ-पौष्कले (ऊ० १. १. १०) । पुरोजिती वो ( सा० ६६७-६ ) इति 15 श्यावाश्वान्धीगवे (ऊ० १.१.१२-३) । कावम् ( ऊ० १.१.१४ ) अन्त्यम् ॥

यज्ञा-यज्ञा (सा० ७०३-७) तं ते शुष्मी ( सा० ८८०-५ ) इति चतुर्षु तृचेषु वारवन्तीयेन षड्भिः स्तोत्रीयाभिरग्निष्टोमसाम । आद्ययोर्यज्ञायज्ञीययोरग्निर्देवता । परयोरिन्द्रः । अनुब्राह्मणं स्तोम- 20 क्लृप्तिः । चतसृभिः बहिष्पवमानम् । अष्टाभिराज्यानि । द्वादशो माध्यंदिनः पवमानः । षोडशानि पृष्ठानि । विंश आर्भवः । 22

---

2. V[1]C. Om. तद्यथा

8. V[1]KMy. °तृचम् for °तृचः

चतुर्विंशोऽग्निष्टोमः इति । चतुष्टोमयोश्चतुःपर्यायाः कार्याः । तत्राष्टिस्तोमस्य विष्टुतिः । द्वाभ्यां हिंकरोति । स प्रथमया द्वाभ्यां हिंकरोति । स प्रथमया द्वाभ्यां हिंकरोति । स मध्यमया द्वाभ्यां हिंकरोति । स उत्तमयेति ब्रह्मायतनीयापक्षे । 5 क्षत्रायतनीयापक्षे तु मध्यमायां द्वौ पर्यायौ । तदुक्तम्—
चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मायतनीयां कुर्यात् । मध्यमायां क्षत्रायतनीयां चेत् तथाष्टीनि । द्विकास्तु तस्य पर्यायाः (ला० श्रौ० ६. ८. २-४) इति । तत्र प्रथमद्वितीयौ पर्यायौ तत्तृचभागस्थानयोर्निधाय द्वितीयस्य पर्यायस्योत्तरतः प्रत्यग- 10 ग्रेण कुशाद्वयेन तृतीयं पर्यायं निदध्यात् । उत्तमस्य पर्यायस्य तृचभागस्थान एवोत्तमं पर्यायम् । एवं चतुष्पर्यायेषु सर्वेषु कुशाविधानस्थानम् । अथ षोडशस्य चतसृभ्यो हिंकरोति । स द्वाभ्यां स एकया स एकया । चतसृभ्यो हिंकरोति । स एकया स द्वाभ्यां स एकया । चतसृभ्यो हिंकरोति स एकया स 15 द्वाभ्यां स एकया । चतसृभ्यो हिंकरोति स एकया स एकया स द्वाभ्यामिति । षोडशे चत्वारो द्वादश पर्यायाः । तेषां मध्यमौ सदृशाविति । अथ चतुर्विंशस्य षड्भ्यो हिंकरोति स द्वाभ्यां स द्वाभ्यामिति प्रथमः पर्यायः । एवमन्ये त्रयः । तत्र यज्ञातृचे 20 द्विरभ्यस्तयैकैकया स्तोत्रीयया प्रथमः पर्यायः । एवमितरेष्वपि तृचेष्वितरे पर्यायाः । तदुक्तं—चतुर्विंशे चत्वारः षट्काः पर्याया द्विक-विष्टावाः । पृथक्तृचेषु चतुस्तृच (ला० श्रौ० ६. ८. ९-१०) इति । अत्राष्टिचतुर्विंशयोर्विष्टुतिकल्पे पक्षान्तराणि सूत्रोक्तानि विस्तरभयादत्र न लिखितानि ॥१॥

25 इति प्रथमश्चतुष्टोमः ॥ ५ ॥

---

2. V[1]. तत्राष्टस्तोमस्य ; MyBKTAC. तत्राग्निष्टोमस्य for तत्राष्टिस्तोमस्य

5. MyBKCA. after द्वौ ins. द्वौ

7. MyBK. तथाष्टिद्विकास्तु, C. तथाष्टिनि द्विकास्तु, T. तथाष्टनि द्विकास्तु for तथाष्टीनि । द्विकास्तु

## द्वितीयः

उत्तरं चतुष्टोममाह—

तरत् स मन्दी धावति (सा० १०५७-६०) इति चतसृभिर्बहिष्पव-
मानम्। इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं
चामहीयवं (ऊ० १०. २. ४) च। यज्ञायज्ञीयस्यर्क्षु वारवन्तीय- 5
मग्निष्टोमसाम (ऊ० १३. १. ११)। साकमश्वं (ऊ० १.१.१५)
हारिवर्णं तैरश्च्यम् (ऊ० २. २. ६)। गौरीवितं षोडशिसाम
(ऊ० ३. १. २) ॥ १ ॥

समानमितरं पूर्वेण। अनुब्राह्मणं स्तोमाः ॥ २ ॥

इति। तरत्समन्दी धावति (सा० १०५७-६०) इति चतुर्ऋचं 10
बहिष्पवमानम् ॥ अग्न आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)
त्याज्यानि ॥ इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं
चामहीयवं (ऊ० १०. २. ४) च। पुनानः सो (सा० ६७५-६)
रौरवं (ऊ० १. १. २) च मैधातिथं (ऊ० १३. १. ७) च
यौधाजयं (ऊ० १. १. ३) चौशनमन्त्यम् (ऊ० १. १. ४)। 15
औशनमेव तृचे। शिष्टा एकर्चाः ॥
रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १.१.५) च श्रायन्तीयं
(ऊ० ५. २. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठया (सा० ६८९-९१) इति गायत्र-संहिते (ऊ० १३.
१. ९)। पवस्वेन्द्रमच्छा (सा० ६९२-४) इति सफ-पौष्कले 20
(ऊ० १. १. ९-१०)। पुरोजिती व (सा० ६९७-९) इति
श्यावाश्वान्धीगव-(ऊ० १.१.१२-३)। यज्ञायज्ञीयानि (ऊ० २१.२.३)।
काव-(ऊ० १. १. १४)मन्त्यम्। कावयज्ञायज्ञीये तृचयोः। एकर्चा
इतरे। संभवति स्तोमेऽन्त्यं सर्वं तृचे। द्वितीयं चेदरण्येगेयम्। 24

---

2. V¹⁻³L. before उत्तरं add : अथ यस्य चत्वारि स्तोत्राणीत्यनुवाकेनोक्तः

तदभावे यदन्त्यात्पूर्वम् ( ला० श्रौ० ० ६. ४. २-४ ) इति वचनात् । यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्निष्टोमसाम ( ऊ० १३. १. ११ ) साकमश्वं (ऊ० १. १. १५) हारिवर्णं तैरश्च्यम् ( ऊ० २. २. ६-७) इत्युक्थानि । गौरीवितं षोडशिसाम (ऊ० ३. १. २) ॥

5 अथ चत्वारि स्तोत्राणि चतसृभिः (तां० ब्रा० १६. ६. १ ) इत्यादिब्राह्मणोक्ताः स्तोमाः । तद्यथा—बहिष्पवमानम् । त्राणि चाज्यानि चतुष्कस्तोमानि । उत्तममाज्यम् । माध्यंदिनः पवमानो रथन्तरं च वामदेव्ये चाष्टीनि उत्तमं पृष्ठद्वयम् आर्भावोऽग्निष्टोमसाम च द्वादशानि । उक्थानि षोडशी च षोडशानि । तत्र चतुष्कस्य विष्टुतिः ।
10 एकस्यै हिंकरोति स प्रथमयैकस्यै हिंकरोति स प्रथमयैकस्यै हिंकरोति स मध्यमयैकस्यै हिंकरोति स उत्तमयेति । क्षत्रायतनीया-पक्षे मध्यमायां पर्यायद्वयम् । अष्टिस्तोमस्य पूर्वस्मिन् विष्टुतिरुक्ता । अथ द्वादशस्य चतसृभ्यो हिंकरोति स द्वाभ्यां स एकया स एकया । द्वाभ्यां हिंकरोति स पराचीभ्यां पूर्वाभ्यां द्वाभ्यां
15 हिंकरोति । स पराचीभ्यामुत्तराभ्यां चतसृभ्यो हिंकरोति । स एकया स एकया स द्वाभ्यामिति । उक्तं च द्वादशे व्याख्यातौ प्रथमोत्तमौ मध्यमौ द्विकौ पूर्वयोः पूर्व उत्तरयोरुत्तर इति षोडशस्य पूर्वस्मिन्नेवोक्ता ॥ २ ॥

इति द्वितीयश्चतुष्टोमः ॥६॥

---

20

## उद्भिद्

असुराणां वै वलः (तां० ब्रा० १६. ७. १ ) इत्यनुवाके-नोद्भिद्वलभिदावुक्तौ । उद्भिद्वलभिद्भ्यामत्रिप्रयोगेण यजेते-( ला० श्रौ० ६. ४ .६)त्यादि सूत्रम् । तत्रोद्भिदः क्लृप्तिमाह—

उपोषु जातमप्तुरम् ( सा० ७६२ ) इत्यनुरूपो यज्ञ
25 इन्द्रमवर्धयद् (सा० १६३६-४१) इति ब्रह्मण आज्यम् । पिबा

12, CA. अग्नि°, V[1], अष्ट° for अष्टि°

सुतस्य रसिन (सा० १४२०-२) इत्युत्सेधो ब्रह्मसाम (ऊ० १३. १. १५) जनुषैकर्चयोः (सा० ७७२-३) सफं (ऊ० १. २. १५) च उद्भिच्च (र० ३. २. ६) श्यावाश्वस्य लोक औदलम् (ऊ० १०. १. ३)। अञ्जत (सा० १६१४-६) इति कावम् (ऊ० १२. १. १७) अन्त्यम् ॥ १ ॥ 5

उद्धरत्युकुथानि ॥ २ ॥

समानमितरम् आयुषैकाह्किेन ॥ ३ ॥

इति । उपास्मै (सा० ६५१-३) उपोषु (सा० ७६२) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् । उद्भिद्यनुरूपमेकर्चं शाण्डिल्यः । स्तोत्रीयं गौतमधानंजय्यौ (ला० श्रौ० ६.३.५-६)॥ 10

अग्न आयाहि वीतये (सा० ६६०-२) आ नो मित्रावरुणा (सा० ६६३-५) यज्ञ इन्द्रमवर्धयत् (सा० १६३६-४१) इन्द्राग्नी आगतं सुतम् (सा० ६६६-७१) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १. १. १) च । अभि सोमास (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४.२.७) प्रथमायाम् । मैधातिथ-(ऊ० ६.२.६) रौरवे (ऊ० ७.१.१३) तिसृषु । यौधाजयमध्यास्यायाम् (ऊ० १.१.३)। औशन-(ऊ० १.१.४)मन्त्यम् ॥ 15

रथन्तरं (ऊ० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । पिबा सुतस्य रसिन (सा० १४२१-२) इत्युत्सेधः (ऊ० १२.२.१५)। स्वासु कालेयम् (ऊ० १.१.७) इति पृष्ठानि ॥ 20

स्वादिष्ठया (सा० ६८६-६१) इति गायत्र-संहिते (ऊ० १.१.८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिः (सा० ७७३) इति सफं (ऊ० १. २. १५) च उद्भिच्च (र० ३. २. ६)। 24

24. MyBK. बलभित् for उद्भित्

पुरोजिती वो अन्धस (सा० ६९७-९) इति औदला-(ऊ० १०.१.३)न्धीगवे (ऊ० १.१.१२)। अञ्जत (सा० १६१४-६) इति कावमन्त्यम्। एकर्चाः सर्वे। संभवति स्तोमेऽन्त्यं सर्वत्र तृच (ला० श्रौ० ६.४.२) इत्यत्र संभवतीति वचनात्। यज्ञायज्ञीयमग्निष्टोमसाम ॥ ३ ॥

सप्तिसप्तदशौ स्तोमौ विपर्यासम् ॥ ४ ॥

इति बहिष्पवमानम्। सप्तिप्रथममाज्यं सप्तदशमित्येवं व्यत्यासेन सप्तिसप्तदशौ स्तोमौ भवतः। तत्र सप्तिस्तोमस्य जातिसंहारपक्षे विष्टुतिः। एकस्यै हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति स पराचीभिरिति। युग्मायुक्-संहारपक्षे तु द्वाभ्यां हिंकरोति स प्रथमया द्वाभ्यां हिंकरोति स प्रथमया द्वाभ्यां हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स पराचीभिरिति ॥ ४ ॥

इति उद्भिद् ॥ ७ ॥

---

## बलभिद्

बलभिदः क्लृप्तिमाह—

प्रतीचीनस्तोमस्य बहिष्पवमानम्। यज्ञ इन्द्रमवर्धयद् (सा० १६३९-९२) इति ब्रह्मण आज्यम्। पिबा सुतस्य (सा० १४२०-२) इति निषेधो (ऊ० १३. १. १०) ब्रह्मसाम। मौक्षस्य लोके बलभित् (ऊ० १० ३. २. ७)। सफस्य सत्रासाहीयम् (ऊ० ९. २. ७)। अयं पूषा रयिर्भग (सा० ८१८-७०) इति श्यावाश्व-(ऊ० ११. २. १०)क्रौञ्चे (ऊ० २. १. ९)। अभ्रेगो राजाप्यस्तविष्यत (सा० १६१६) इति कावम् (ऊ० १२. १. १७) अन्त्यम् ॥ १ ॥

उद्धरत्युक्थानि ॥ २ ॥

समानमितरं गवैकाहिकेन ॥ ३ ॥

इति। **प्रतीचीनस्तोमः केशवपनीयः**। पवस्व वाचो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) पवमानस्य ते कवे (सा० ६५७-९) इति **बहिष्पवमानम्** ॥

अग्निं दूतं वृणीमहे (सा० ७९०-२) इति मित्रं वयं हवामहे (सा० ७९३-५) यज्ञ इन्द्रमवर्धयत् (सा० १६३९-४१) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२) इत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति **गायत्रं चामहीयवं** (ऊ० ९.२.३) च। परीतोषि (सा० १३१३-५) **समन्तमाद्यायाम्** (ऊ० ९. १. ३)। **दैर्घश्रवसं** (ऊ० ५. २. ४) **तिसृषु**। **यौधाजय-मध्यास्यायाम्** (ऊ० १६. १. ५)। अयं सोम (सा० १४७१-३) इति **पार्थमन्त्यम्** (ऊ० ९. २. ५) ॥

**बृहच्च** (र० १. १. ५) **वामदेव्यं** (ऊ० १. १. ५) च। पिबा सुतस्य (सा० १४२१-२) इति **निषेधः** (ऊ० १२. २. १६)। **स्वासु कालेयम्** (ऊ० १. १. ७) इति **पृष्ठानि** ॥

यस्ते मदो वरेण्य (सा० ८१५) इति **गायत्रं च बलभिच्च** (र० ३. २. ७)। पवस्वेन्द्रमच्छ (सा० ६९२) इति **सत्रासाहीय** (ऊ० ९. २. ७) **श्रुध्ये** (ऊ० ९. १. २०)। अयं पूषा (सा० ८१८) इति **श्यावाश्व**-(ऊ० १२.२.१०) **क्रौञ्चे** (ऊ० १५.१.७)। अग्रेगो राजाप्यस्त-विष्यत (सा० १६१६) इति **काव**-(ऊ० १२. १. १७) **मन्त्यम्** ॥

**एकर्चाः सर्वे**। **यज्ञायज्ञीयमग्निष्टोमसाम** (ऊ० १. १. १४) ॥३॥

एकविंशं बहिष्पवमानम्। तिसृभिर्होतुराज्यम्। सप्तिसप्तदशमितरं सर्वम् ॥ ४ ॥

इति । स्तोमविधिः । त्रिकस्तोमस्य श्येने विष्टुतिरुक्ता सप्तिस्तोमस्योद्भिदि ॥ ४ ॥

इति बलभिद् ॥ ८ ॥

---

## अपचितिः

अथैषोऽपचितिर् (तां० ब्रा० १६. ८) इत्यनुवाकेन प्रथमोऽपचितिरुक्तः। अथैष सर्वस्तोमोऽपचितिर् (तां० ब्रा० १६. ६) इति द्वितीयः । राजापचितिकाम एताभ्यां यजेतेति धानंजय्यः । यः-कश्चापचितिकाम इति शाण्डिल्यः (ला० श्रौ० ६. ४. १६-७) । तयोः प्रथमस्य कल्पः—

बलभिदो बहिष्पवमानम् । उभौ पर्यासौ । अभिजितो गायत्री । पुनानः सोम धारय (सा० ६७५-६) इति बृहती । ज्योतिष्टोमे अन्त्ये । त्वमिन्द्र यशा असि (सा० १४११-२) इति यशो (र० ३. १. १८) ब्रह्मसाम । संहितादुत्तरं जराबोधीयम् (ऊ० १०. २. १०) । आन्धीगवाद्भर्गः (र० ३. २. ६) ॥ १ ॥

समानमितरं प्रथमेन साहस्रेण ॥ २ ॥

इति । पवमानस्य ते वयम् (सा० ७८७-६) पवमानस्य ते कवे (सा० ६५७-६) इति बार्हतरथन्तरावुभौ पर्यासावत्र भवतः । तत्र बृहतः पृष्ठेन प्रधान्याद्बार्हतस्य पूर्वं प्रयोगः । ज्योतिष्टोमेऽन्त्ये इति माध्यंदिनार्भवयोरन्त्ये औशनकावे इत्यर्थः । २ ॥

तत्रेयं क्लृप्तिः—

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम द्युमाँ असि (सा०७८१-३) वृषा ह्यसि भानुना

(सा० ७८४-६) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्न आयाहि (सा० ६६०-२) मित्रं वयम् (सा० ७९३-५) इन्द्रमिद्गाथिनः (सा० ७९६-९) इन्द्रे अग्न (सा० ६६०-७२) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) सत्रासाहीयं (ऊ० ८.२.१२) च । पुनानः सो (सा० ६७५-६) समन्तमाद्यायाम् ।

रथन्तरं (र० १. २. १०) दैर्घश्रवसं (ऊ० ५.२.४) तिसृषु । यौधाजयमध्यास्यायाम् (ऊ० १.१.३) औशनमन्त्यम् (ऊ० १.१.४) ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । त्वमिन्द्र यशा असि (सा० १४११-२) इति यशः (र० ३.२.८) । स्वासु कालेय-(ऊ० १. १. ७)मिति पृष्ठानि ॥

स्वादिष्ठया (सा०६८९-९१) इतिं गायत्रं च संहितं (ऊ०१.१.८) च जराबोधीयं (ऊ० १०.२.१०) च । पवस्वेन्द्रमच्छा (सा० ६९२-६) इति सफ-(ऊ० १.१.९) श्रुध्ये (ऊ० ९. १. २०) । पुरोजिती वो (सा० ६९७-९) इति श्यावाश्वान्धीगवे (ऊ० १.१.११-२) । भर्गश्च (र० ३. २.९) । काव-(ऊ० १. १. १३)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ २ ॥

चतुर्विंशं बहिष्पवमानम् । त्रिवृत्पञ्चदशान्याज्यानि । चतुर्विंशो माध्यंदिनः पवमानः । सप्तदशैकविंशानि पृष्ठानि । त्रिणवः आर्भवः । एकविंशोऽग्निष्टोमः ॥ ३ ॥

इति । त्रिवृत्पञ्चदशयोराज्येषु व्यत्यासेन प्रयोगः । पृष्ठेषु सप्तदशैकविंशयोश्च ॥ ३ ॥

इति अर्पचितिः ॥ ६ ॥

---

## सर्वस्तोमोऽपचितिः

**द्वितीयमपचितिमाह—**

साहस्रं बहिष्पवमानं यथा प्रथमस्य । आमहीयवादुत्तरमैडं सौपर्णम् ( ऊ० १३. १. १७ ) । जराबोधीयात् स्वाशिरामर्कः (र० ३. १. २)। आनुष्टुभेभ्य उत्तरम् । परि प्र धन्व (सा० १३६७-९) इति द्विपदासु वारवन्तीयम् (ऊ० ९. २. १०) । सूर्यवतीषु कावम् (ऊ० ९. २. ११) अन्त्यम् ॥ १ ॥

समानमितरं पूर्वेण ॥ २ ॥

इति । पवस्व वाचो अग्रिय ( सा० ७७५-७ ) दविद्युतत्या रुचा ( सा० ६५५-६ ) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् ॥

अग्न आयाहि (सा० ६६०-२) मित्रं वयम् (सा० ७९३-५) इन्द्रमिद्गाथिन ( सा० ७९६-९ ) इन्द्रे अग्न ( सा० ८००-२ ) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) गायत्रं च आमहीयवं (ऊ० १. १.१) चैडं च सौपर्णं (ऊ० १३.१.१७) सत्रासाहीयं (ऊ०८.२.१२) च । पुनानः सोम धारय (सा० ६७५-६) इति समन्तं (र० २.२.१) च रथन्तरं च दैर्घश्रवसं (ऊ० १२.२.१६) च यौधाजय-(ऊ० १.१.३) मौशन-(ऊ० १.१.४)मन्त्यम् ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । त्वमिन्द्र यशा (सा० १४११-२) इति यशः (र० ३. १. १८)। स्वासु कालेय-(ऊ० १.१.७)मिति पृष्ठानि ॥

स्वादिष्ठया (सा० ६८९-९१) इति गायत्रं च संहितं (ऊ० १.१.८) च जराबोधीयं (ऊ० १०. २. १०) च स्वाशिरामर्कः (र० ३.२.१)। पवस्वेन्द्रमच्छा (सा० ६९२-६) इति सफ-( ऊ० १.१.९ )

श्रुध्ये (ऊ० ९.१.२०)। पुरोजिती व ( सा० ६९७-९ ) इति श्यावाश्वान्धीगवे (ऊ० १.१.११-१२) भर्गः (र० ३.२.९) । परि प्र धन्व (सा० १३६७-९) इति द्विपदासु वारवन्तीयम् (ऊ० ६.२.१०) । सूर्यवतीषु काव-(ऊ० ९.२.११)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ २ ॥ 5

स्तोमविधिमाह—

त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम । सप्तदशे द्वे । एकविंशमच्छावाकस्य । त्रिणवो माध्यंदिनः पवमानः । छन्दोमाः पृष्ठानि । त्रयस्त्रिंश आर्भवः । एकविंशोऽग्निष्टोमः ॥ ३ ॥

इति । छन्दोमाः पृष्ठानीति । चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वरिंश- 10 चतुर्विंशस्तोमानि क्रमात् पृष्ठानीत्यर्थः ॥ ३ ॥

इति सर्वस्तोमोऽपचितिः ॥ १० ॥

---

## अग्नेः स्तोमः

### प्रथमः—पक्षीत्यपराख्यः

पक्षी वा एष स्तोमः (तां० ब्रा० १९. १०. १) इत्यनुवाकेन 15 पक्षी विहितः । अथैष ज्योतिः ( तां० ब्रा० १९. ११. १ ) इति अनुवाकेन ज्योतिः । तावग्निस्तोमाविति चोच्यते । यथोक्तम्— ऐकाहिकेन व्रतेनोक्तः उपायोऽग्नेः स्तोमयोः ( ला० श्रौ० ९. ४. १८ ) इति । ज्योतिषोऽपि पक्षिसंज्ञाऽस्ति । यथोक्तमापस्तम्बेन— 19

---

1. V[1]. ends with पुरोजिती व
17. LCV[3]. Om. अनुवाकेन ज्योतिः ; B. उच्येते for उच्यते
18. BLV[3]. एकाहिकेन for ऐकाहिकेन ; C. Om. अग्नेः स्तोमयोः ··· अग्नेः (p. 268, L. 1)
19. V[3]L. सोऽपि पक्षिसंज्ञो for ज्योतिषोऽपि पक्षिसंज्ञा

पक्षिभ्यां साग्निचित्यौ ( आप० श्रौ० ) इति । प्रथममग्नेः स्तोममाह—

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) च जराबोधीयं च (ऊ० ११. १. १४) स्वारं च सौपर्णम् 5 (ऊ० १०. १. १०) अग्नेश्च व्रतम् (र० २. २. १) । यौधाजयात् पूर्वं रौरवम् (ऊ० १. १. २)। यशसो लोके श्यैतम् (ऊ० २. १. ३)। स्वादिष्ठया (सा० ६८९-९१) गायत्रं च स्वाशिरामर्कः (र० ३. १. २)॥ १ ॥

समानमितरं पूर्वेण । ज्योतिष्टोममत ऊर्ध्वम् ॥ २ ॥

10 इति । समानमितरं पूर्वेणेत्यादेरयमर्थः । आर्भवात् पूर्वमनुक्तं पूर्वेण समानम् । स्वाशिरामर्कादूर्ध्वं तु ककुबादिज्योतिष्टोमेन सममिति । पवस्व वाचो (सा० ७७५-७) दविद्युतत्या रुचा (सा० ६५५-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्न आ याहि (सा० ६६०-२) मित्रं वयम् (सा० ७९३-५) 15 इन्द्रमिद्गाथिन (सा० ७९६-९) इन्द्रे अग्न (सा० ८००-२) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) च जराबोधीयं च स्वारं सौपर्णमग्नेश्च व्रतम् । पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६.२.२) च रथन्तरं (र० 20 २.१.१) च दैर्घश्रवसं (ऊ० ११.२.१६) च रौरवयौधाजये (ऊ० १.१.२-३) । औशन-(ऊ० १.१.४)मन्त्यम् ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं 23 (ऊ० २.१.३) च कालेयं (ऊ० १.१.७) चेति पृष्ठानि ॥

---

1. MyBTAK. साग्निचित्याभ्याम् for साग्निचित्यौ
10. C. पूर्वं for पूर्वेण ; LV². after पूर्वेण adds : पूर्वं
11. ABMyK. समानम् for समम्

स्वादिष्ठया (सा० ६८६-६२) इति गायत्रं च स्वाशिरामर्कः (र० ३.१.२)। पवस्वेन्द्रमच्छे-(सा० ६६३-६)ति सफपौष्कले (ऊ० १.१. ६-१०)। पुरोजिती-(सा० ६६७-६)ति श्यावाश्वान्धीगवे (ऊ० १.१. ११-१२)। काव-(ऊ० १.१.१३) मन्त्यम्॥ सफपौष्कलश्यावाश्वान्धी-गवान्येकर्चेषु ॥ 5

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥ २॥

षडूर्ध्वाः स्तोमाः षडर्वाञ्चः ॥ ३॥

पार्ष्ठिकाः स्तोमाः षट्पूर्वमूर्ध्वा भवन्ति। ततस्त एवार्वाञ्च इत्यर्थः। तद्यथा त्रिवृद्बहिष्पवमानम्। पञ्चदश सप्तदशैकविंश-त्रिणवान्याज्यानि। यथासंख्यं त्रयस्त्रिंशो माध्यंदिनः पवमानः। 10 त्रयस्त्रिंशत्रिणवैकविंशसप्तदशानि पृष्ठानि। यथासंख्यं पञ्चदश आर्भवः। त्रिवृदग्निष्टोमसाम। इति॥ ३॥

इति प्रथमः अग्नेः स्तोमः॥ ११॥

---

अग्नेः स्तोमः

द्वितीयः—ज्योतिरित्यपराख्यः 15

द्वितीयमग्नेः स्तोममाह—

ज्योतिष्टोममाज्यबहिष्पवमानम्। उद्धरति जराबोधीयं रथन्तर-रौरवे। वाजपेयस्य पृष्ठानि। पुरोजिती वो अन्धस (सा० ६६७-६) इति औदलमेकस्याम् (ऊ० १०. १. ३)। आन्धीगव-मेकस्याम् (ऊ० १. १. १२)। श्यावाश्वमेकस्याम् (ऊ० १. 20 १. ११)। बृहत्तिसृषु (र० २. २. ५)॥ १॥

समानमितरं पूर्वेण ॥ २॥ 22

---

5. C. एकर्चानि for एकर्चेषु

18. KABMy. °रौरवानि for रौरवे; TA²B. after रौरवे add च; LV²CKABMy. यौधाजयस्य for वाजपेयस्य

इति । उपास्मै ( सा० ६५१-३ ) दविद्युतत्या ( सा० ६५४-६ ) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् ॥

अग्न आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च स्वारं च सौपर्ण-(ऊ० १०. १. १०)मग्नेश्च व्रतम् ( र० २. २. १ ) पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६. २. २) च दैर्घश्रवसं (ऊ० ११. २. १६) च यौधाजय-( ऊ० १. १. ३ )मौशन-( ऊ० १. १. ४ )मन्त्यम् ॥

जराबोधीयरथन्तररौरवाणामुद्धारः ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) चाभीवर्तं (ऊ० ६. १. १६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठये-( सा० ६८६-६१ )ति गायत्रं च स्वाशिरामर्कः ( र० ३. १. २ )। पवस्वेन्द्रमच्छे-( सा० ६६२-४ )ति सफ-पौष्कले (ऊ० १. १. ८-१०) एकर्चयोः । पुरोजिती वो अन्धस (सा० ६६७-६) इति औदलम् (ऊ० १०. १. ३) आन्धीगवं (ऊ० १. १. १२ ) श्यावाश्व-( ऊ० १. १. ११ )मिति सामतृचः । बृहत्तिसृषु (र० २. २. ५) काव-(ऊ० १.१.१३)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ २ ॥

अथ स्तोमक्लृप्तिः—

त्रिवृद्बहिष्पवमानम् । पञ्चदशानि त्रीण्याज्यानि । त्रिवृन्मैत्रावरुणस्य चतुर्विंशो माध्यंदिनः पवमानः । सप्तदशानि त्रीणि पृष्ठानि । पञ्चदशं मैत्रावरुणस्य । सप्तदश आर्भवः । एकविंशोऽग्निष्टोमः ॥ ३ ॥

इति ॥ ३ ॥

इति द्वितीयः अग्नेः स्तोमः ॥ १२ ॥

## ऋषभः

**अथ ऋषभो राजन्यः। अथैष ऋषभ (तां० ब्रा० १९.१२) इत्यनुवाकेनोक्तः। तस्य कल्पः—**

पुनानः सोम धारय (सा० ६७५-६) इति रौरवं तिसृषु (ऊ० १. १. २)। सदोविशीयमेकस्याम् (ग्रा० गे० १४.१.३१)। 5
समन्तं विष्टारपङ्क्तौ (सा० ६७६; ऊ० १३. १. १८)। यौधाजयं तिसृषु (ऊ० १. १. ३)। अभीवर्तो ब्रह्मसाम। (ऊ० ६. १. १६)। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवितमेकस्याम् (ऊ० ४. १. १३)। आन्धीगवमेकस्याम् (ऊ० ४. १. १२)। श्यावाश्वमेकस्याम् (ऊ० ४. १. ११)। 10
बृहत्तिसृषु (र० २. २. ५)॥ १॥

सप्तदशो माध्यंदिनः पवमानः। समानमितरं ज्योतिष्टोमेन सस्तोमम्॥ २॥

**इति। उप-दवि-पवे-(सा० ६५१-९)ति बहिष्पवमानम्॥**

अग्न आ नो मित्रायाइन्द्राग्नी-(सा० ६६०-७९)त्याज्यानि॥ 15

उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १.१.१) च। पुनानः सो (सा० ६७५-६) रौरवं तिसृषु (ऊ० १. १. २)। सद्योविशीय-(ऊ० १२.१.२०)मेकस्याम्। दुहान ऊध-(सा० ६७६)रिति विष्टारपङ्क्तौ समन्तम् (ऊ० १३. १. १८)। यौधाजयं तिसृषु (ऊ० १.१.३) औशनमन्त्यम् (ऊ० १. १. ४)॥ 20

रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १.१.५) चाभीवर्त्तश्च (ऊ० ६.१.१६)। कालेयं (ऊ० १. १. ७) चेति पृष्ठानि॥
स्वादिष्ठये-(सा० ६८९-९१) ति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्र-मच्छे-(सा० ६९२-४)ति सफ-पौष्कले (ऊ० १.१.९-१०) एकर्चे। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवितम् (ऊ० ६.१.१३) आन्धीगवं 25

---

24. KA. एकर्चयोः for एकर्चे

(ऊ० १.१.१२) श्यावाश्वम् (ऊ० १.१.११) इति सामतृचः । बृहत्तिसृषु (र० २.२.५) काव-(ऊ० १.१.१३) मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशो माध्यंदिनः । सप्तदशानि पृष्ठानि । आर्भव एकविंशो-
5 ऽग्निष्टोमसाम । इति स्तोमक्लृप्तिः ॥ २ ॥

इति ऋषभः ॥ १३ ॥

---

## गोसवः

यो वै वाजपेय (तां० ब्रा० १९. १३) इत्यनुवाकेन गोसव उक्तः । वैश्यं यं विशः सराजानः पुरस्कुर्वीरन् । स गोसवेन
10 यजेत (ला० श्रौ० ९. ४. २२) । तस्य बहिष्पवमानम्—

उपास्मै गायता नरः (सा० ६५१-३) इति तृचः षट् संभार्या वैश्वजित्यः । पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम
15 द्युमाँ असि (सा० ७८१-३) । वृषा ह्यसि भानुना (सा० ७८४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) ॥

इति बहिष्पवमानम् ॥

उप त्वा जामयो गिर (सा० १५७०) इत्याद्या अग्न आयूंषि
20 पवस (सा० १४६०-४) इति [अन्ताः] षडृचः संभार्याः वैश्वजित्यः ॥ १ ॥
पुनानः सोम धारय (सा० ६७५-६) इति बृहती ।
22 समानमितरमभिषेचनीयेन ॥ २ ॥

---

9. MyBKA. Om. वैश्यं ; CV[1-2]. वैश्यस्य for वैश्यं
18. CT. Om. बहिष्पवमानम्
20. वैश्वजित्यः see. आ० क० २.७ (विश्वजित्)

इति । सुषमिद्धो न आवह (सा० १३४७-५०) । ता नः शक्तं पार्थिवस्य (सा० १४६५-७) । युञ्जन्ति ब्रध्नमरुषं चरन्तम् (सा० १४६८-७०) । तमीडिष्व यो अर्चिषे-(ऊ० ११४९-५१)त्याज्यानि ॥ सुषमिच्चतुर्ऋचे यथागोत्रमुद्धारः । उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च जराबोधीयं (ऊ० ११.१.१४) च स्वारं च सैन्धुक्षितं (ऊ० १२.२.७) च । पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६.२.२) च रथन्तरं (र० २. १. ६) च दैर्घश्रवसं ( ऊ० ५. २. ४ ) च देवस्थानं (र० १. २. ३) च वरुणसाम (ऊ० १२. २. ८) रौरव-(ऊ० ९. ३. ११) यौधाजये (ऊ० ७. २. ५) । वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् ॥

बृहच्च (र० १.१.५) वामदेव्यं ( ऊ० १. १. ५ ) च कालेयं (ऊ० १.१.७) श्यैतं (ऊ० २.१.३) चेति पृष्ठानि ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्र-मौक्षे (ऊ० ४. १. १०)। काक्षीवतं ( ऊ० १२. २. ३ ) च स्वाशिरामर्कः (र० ३. १. ४) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९)दैवोदासे (ऊ० १२. २. १०) । पुरोजिती-(सा० ६९७-९)ति वाध्र्यश्वं च वैतहव्यं च सोमसाम च त्रासदस्यवं (ऊ० ११. २. ११-४) चान्धीगवं काव-(ऊ० १.१.१२-३)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । अग्ने त्वन्नो अन्तम (सा० ११०७-९) इति सत्रासाहीयं (ऊ० १२.२.१५) सौभरम् ( ऊ० १. १. १६ ) उद्वंशीयम् ( ऊ० ६. १. ८ ) इत्युक्थानि ॥ २ ॥

अथ स्तोमक्लृप्तिः—

सर्वः षट्त्रिंशः ॥ ३ ॥

इति। द्वादशभ्यो हिंकरोति स तिसृभिः सोऽष्टाभिः स एकया द्वादशभ्यो हिंकरोति स एकया स तिसृभिः सोऽष्टाभिः द्वादशभ्यो हिंकरोति। सोऽष्टाभिः स एकया स तिसृभिः। इति षड्त्रिंशस्य विष्टुतिः त्रिणवाद्यावत्। समा (ला० श्रौ० ६.५.२०) इति
5 वचनात्। त्रिणवस्याद्या विष्टुतिर्या तद्वत् समाः स्तोमाः कर्तव्या इत्यर्थः॥ ३॥

इति गोसवः॥ १४॥

---

## मरुत्स्तोमः इन्द्राग्न्योः कुलायश्च

अथैष मरुत्स्तोम (तां० ब्रा० १९. १४) इत्यनुवाकेन मरुत्स्तोम उक्तः। अथैष इन्द्राग्न्योः कुलाय (तां० ब्रा० १९. १५) इत्यनुवाकेन
10 इन्द्राग्न्योः कुलायः। तयोः कल्पः—

या ज्योतिष्टोमस्य सा मरुत्स्तोमस्य॥ १॥

या बृहस्पतिसवस्य सेन्द्राग्न्योः कुलायस्य॥ २॥

इति। येति क्लृप्तिर्विशेष्या। उभयोः स्तोमक्लृप्तिमाह—

अनुब्राह्मणं स्तोमाः॥ ३॥

15 इति। तत्र मरुत्स्तोमो बहुयजमानकः। एतेनैव त्रीन्याजयेत् (तां० ब्रा० १९. १४. ३) इति श्रुतेः। सखायो भ्रातरो वा ये संपादयेयुस्ते मरुत्स्तोमेन यजेरन् (ला० श्रौ० ९. ४. २५) इति वचनाच्च। तस्य सर्वं ज्योतिष्टोमवत्। धूर्ज्योतिर्विश्वारूपाणां निवृत्तिः। त्रीणि त्रिवृन्ति स्तोत्राणि। त्रीणि पञ्चदशानि।
20 त्रीणि सप्तदशानि। त्रीण्येकविंशानि। आर्भवे सर्वाणि सामानि
21 तृचस्थानि। इन्द्राग्न्योः कुलायस्य बृहस्पतिसववत् सर्वम्। षट्

---

1. T. षोडशभिः for सोऽष्टाभिः
4. LCV[2], Om. इति

स्तोत्राणि त्रिवृन्ति। द्वे स्तोत्रे पञ्चदशे। सप्तदशे द्वे एकविंशे इति स्तोमाः। आर्भवे सर्वे तृचाः। एतेनैव द्वौ याजयेत् (तां० ब्रा० १९. १५. २) इति श्रुतेः॥ ३॥

इति मरुत्स्तोमः इन्द्राग्न्योः कुलायश्च ॥ १५॥

---

## इन्द्रस्तोमः

अथैष पञ्चदश इन्द्रस्तोम उक्थ्यः (तां० ब्रा० १९. १६) इत्यनुवाकेनेन्द्रस्तोम उक्तः। तस्य कल्पः—

इन्द्रायेन्दो मरुत्वते (सा० १०७६-८) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) वृषा सोमं द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

ईडेन्यो नमस्यो (सा० १५३८-९०) यदद्य सूर उदित (सा० १३५१-३) इन्द्रमिद्गाथिनो बृहद् (सा० ७९६-८) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२) ॥ २ ॥

इत्याज्यानि ॥

उच्चा ते (सा० ६२२-४) गायत्रं चामहीयवं च (ऊ० १. १. १)। तवाहं सोम रारणे-(सा० ९२२-३)ति समन्तं (ऊ० १३. २. १) च यौधाजयं च (ऊ० १३.२.२)। वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७.१.६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः॥ ]

बृहच्च (र० १. १. १) रेवतीषु च वामदेव्यम् (सा० १०८४-६ ; ऊ० १३. २. ३)। श्यैतं (ऊ० १०. १. ४) च कालेयं (ऊ० १. १. ७) च ॥ ४ ॥

इति पृष्ठानि ॥

5 स्वादिष्ठया मदिष्ठया (सा० ६८६-६१) इति गायत्र-मौक्षे (ऊ० १२. २. ४)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ- (ऊ० १. १. ६)श्रुध्ये (ऊ० ६. १. २०)। परि त्यं हर्यतं हरिम् (सा० १३२६-८१) इति श्यावाश्वा-(ऊ० १२.२.१)-न्धीगवे (ऊ० १२. २. २)। सूर्यवतीषु कावम् (ऊ० ६. 10 २. ११) अन्त्यम् ॥ ५ ॥

सफप्रभृतीनि त्रीण्येकर्चानि ॥ ५ ॥

प्र दैवोदासो अग्निर् (सा० १५१५) इति यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० ६. २. ४) ॥ ६ ॥

स्वासु सत्रासाहीयम् (सा० १६४२-४ ; ऊ० १३.२.४)। तव 15 त्यदिन्द्रियं बृहद् (ऊ० १६४५-७) इति सौभरम् (ऊ० १३. २.५) स्वासूद्वंशीयम् (सा० १३४४-६ ; ऊ० ६. १. ८) ॥ ७ ॥

इत्युक्थानि ॥

सर्वः पञ्चदशः ॥ ८ ॥

इति इन्द्रस्तोमः ॥ १६ ॥

---

20 इन्द्राग्न्योः स्तोमः

अथैष इन्द्राग्न्योः स्तोमः (तां० ब्रा० १६. १७) इत्यनुवाकेन इन्द्राग्न्योः स्तोम उक्तः। राजपुरोहितौ सह यजेयाताम् इन्द्राग्न्योः 23 स्तोमेन। पृथग्वा (ला० श्रौ० ६. ४. ३०)। तस्य कल्पः—

12. प्र दैवो° Cf. तृचोत्तमायां प्रतिलोमः (ला० श्रौ० ६. ३. २)

पवस्व वाचो अग्रियः (सा० ७७५-७) उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते कवे (सा० ६५७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७६०-८०२) इत्युभयान्याज्यानि ॥ २ ॥

अग्निं दूतम् (सा० ७६०-२) आ नो मित्रावरुणे-(सा० ६६३-५)न्द्रमिद्गाथिनो बृहद् (सा० ७६६-८) इन्द्राग्नी आगतं सुतम् (सा० ६६६-७१) इत्याज्यानि ॥ 5

पुनानः सोम धारये-(सा० ६७५-६)ति रौरवमेकस्याम् (ऊ० १. १. २) । यौधाजयमेकस्याम् (ऊ० १. १. ३) । दैर्घश्रवसमेकस्याम् (ऊ० ११.२.१६)। रथन्तरं (र० १.२.१०) तिसृषु । बृहत्पृष्ठम् (र० १. १. ५)। श्यैतस्यर्क्षु अभीवर्तो ब्रह्मसाम (सा० ८११-२; ऊ० ७. १. ७) ॥ ३ ॥ 10

समानमितरं ज्योतिष्टोमेन ॥ ४ ॥

इति । उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १. १. १) च । पुनानः सो-(सा० ६७५-६) रौरवं यौधाजयं (ऊ० १. १. २-३) दैर्घश्रवस-(ऊ० ११. २. १६)मिति सामतृचः । रथन्तरं (र० १. २. १०) तिसृषु । औशन-(ऊ० १.१.४)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतस्यर्क्षु अभीवर्तो (ऊ० ७. १. ७) ब्रह्मसाम । स्वासु कालेयम् (ऊ० १. १. ७) इति पृष्ठानि । स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(६६२-६)ति सफ-(ऊ० १. १. ६)पौष्कले (ऊ०१.१.१०)। पुरोजिती वो अन्धस 15 20 22

---

4. LCMyBKATV². Om. अग्नि ··· उभयान्याज्यानि ; A³. Om. उभयानि

8. LCMyBATV². Om. पुनानः ··· ज्योतिष्टोमेन ··· इति (L. 14)

(सा० ६६७-६) इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२) । काव-(ऊ० १.१.१३)मन्त्यम् । कावमेकतृचे । एकर्चा इतरे । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ४ ॥

त्रिवृत्पञ्चदशौ स्तोमौ र्विपर्यासम् ॥ ५ ॥

इति स्तोमविधिः ॥ ५ ॥

इति इन्द्राग्न्योः स्तोमः ॥ १७ ॥

---

## विघनः प्रथमः

अथैष विघन (तां० ब्रा० १६. १८) इत्यनुवाकेन विघन उक्तः । इन्द्रमदेव्यो माया असचन्त (तां० ब्रा० १६. १६) इति द्वितीयः । विघनाभ्यां पशुकामो यजेताभिचरन् वा (ला० श्रौ० ६.४.३३) । प्रथमं विघनमाह—

स्वासु श्यैतं (सा० ८११-२; ऊ० २. १. ३) । संहितादुत्तरं जराबोधीयम् (ऊ० १०. २. १०) । श्रुध्यस्य लोके विशोविशीयम् (ऊ० १३. १. १) आन्धीगवादुत्तरं सोमसाम (ऊ० १३.२.६) आथर्वणं वा (र० १. २. १२) ॥ १ ॥

समानमितरं प्रथमेन साहस्रेण ॥ २ ॥

इति । सोमसामाथर्वणं वेति विकल्पस्य व्यवस्था सूत्रोक्ता । आथर्वणं पशुकामयज्ञे कुर्यात् । सोमसामाभिचरतः (ला० श्रौ० ६.४.३४) इति । पवस्व वाचो (सा० ७७५-७) दविद्युतत्या-पवमानस्य ते कवे (सा० ६५४-६) इति बहिष्पवमानम् ॥

अग्न आयाहि (सा० ६६०-२) मित्रं वयम् इन्द्रमिद्गाथिन इन्द्रे (सा० ७६३-८०२) अग्नेत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं च । परीतो षिञ्चता सुतम् (सा० १३१३-५) इति समन्तं (ऊ०

९. १. ३) प्रथमायाम् । रथन्तरं (र० २. २. ६) दैर्घश्रवसे (ऊ० ५. २. ४) तृचयोः । यौधाजयमध्यास्यायाम् (ऊ० ७. २. ५) । अयं सोम (सा० १४७१-३) इति पार्थ-(ऊ० ११.२.५)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० १०. १. ४ ) च कालेयं ( ऊ० १. १. ७ ) चेति 5 पृष्ठानि । स्वादिष्ठये-( सा० ६८९-९ )ति गायत्र-संहित-(ऊ० १. १. ८) जराबोधीयानि (ऊ० १०.२.१०) । पवस्वेन्द्रमच्छे-( सा० ६८९-९१)ति सफ-(ऊ० १. १. ९)विशोविशीये (ऊ० १३.१.१) । पुरोजिती-(सा० ६९७-९)ति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२) । सोमसामा-( ऊ० १३. २. ६ )थर्वणं ( र० १. २. १२ ) वा । 10 सूर्यवतीषु काव-(ऊ० ९.२.११)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ २ ॥

स्तोमक्लृप्तिमाह—

> द्वे त्रिवृती स्तोत्रे । द्वे द्वादशे । द्वे पञ्चदशसप्तदशे । द्वे एकविंशनवदशे । द्वे चतुर्विंशे । द्वे त्रिणवे ॥ ३ ॥ 15

इति । द्वादशस्य विष्टुतिः पुनःस्तोमे दर्शिता । अथ नवदशस्य । तिसृभ्यो हिंकरोति स पराचीभिः । त्रयोदशभ्यो हिंकरोति स तिसृभिः स सप्तभिः स तिसृभिः । तिसृभ्यो हिंकरोति स पराचीभिरिति । तदुक्तम्—एकान्नविंशे च परिवर्तिनि पर्यायावमित-स्त्रयोदशीमध्येऽस्मिन् प्रथमायास्त्रिर्वचनं तथोत्तमाया ( ला० श्रौ० 20 ६. ७. १४-५) इति ॥ ३ ॥

इति प्रथमो विघनः ॥१८॥ 22

---

19. KMy. एकविंशे for एकान्नविंशे ; MyTKA. परिवर्तिनी for परिवर्तिनि
20. KAMyB. तस्मिन् for अस्मिन्

## द्वितीयो विघनः

**द्वितीयं विघनमाह—**

पवस्व वाचो अग्रियः (सा० ७७५-७) उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

5 **इति बहिष्पवमानम् ॥**

नमस्ते अग्न ओजसे (सा० १६४८-५०) मित्रं वयं हवामहे (सा० ७६३-५) समस्य मन्यसे विशस् (सा० १६५१-३) ता हुवे ययोरिदम् (सा० ८५३-५) ॥ २ ॥

**इत्याज्यानि ॥**

10 प्रत्नं पीयूषं पूर्व्यं यदुकृथ्यम् (सा० १४६४-६) इति द्वयोः सतोबृहत्योर्गायत्रं तिसृषु आमहीयत्रमेकस्याम् (ऊ० १३. २. ७)। ऐडं सौपर्णमेकस्याम् (ऊ० १३. २. ८)। सत्रासाहीयमेकस्याम् (ऊ० १३. २. ९)। यैका परिशिष्यते तस्यां सदोविशीयम् (ऊ० १३. २. १०)। पुनानः सोम धारय
15 (सा० ६७५-६) इति रौरवमेकस्याम् (ऊ० १. १. २)। यौधाजयमेकस्याम् (ऊ० १. १. ३)। समन्तमेकस्याम् (ऊ० ६. २. २)। रथन्तरं तिसृषु (र० १. २. १०)। अध यदिमे पवमान रोदसी (सा० १४६६) इत्युत्सेध एकस्याम् (ऊ० १३. २. ११)। अयं सोम (सा० १४७१-३) इति पार्थम् (ऊ०
20 ९. २. ५) अन्त्यम् ॥ ३ ॥

**[ इति माध्यंदिनः पवमानः ॥ ]**

सतो द्वे बृहत्यौ द्वासप्तत्यक्षरे। तत्र चतुर्विंशतिचतुर्विंशत्यक्षरै-
23 स्तिस्रो गायत्रीः कृत्वा तासु गायत्रं कार्यम्। तद्यथा—प्रत्नं

---

22. LCV[2]. सते द्वे वृहत्यौ for सतो द्वे बृहत्यौ ; KABMy. द्विः, T. द्वि for द्वा ; MyBKATC. Om. चतुर्विंशति ; V[2]. चतुर्विंशत्या for चतुर्विंशति

पीयूषं पूर्व्योम् । इन्द्रमभिजायमानोम् । वसुरुचो दिव्या अभ्योम् इति । यथा—प्रत्नं पीयूषं पूर्व्याम् इत्यामहीयवम् । इन्द्रमभोवेत्यैडं सौपर्णम् । वसुरुच इति सत्रासाहीयम् । या तु सतोबार्हते तृचे परिशिष्टा सतोबृहती अध यदिम इति तस्यां सदोविशीयम् । शिष्टं स्पष्टम् ॥ 5

अथ तैत्तिरीयकम् । सतोबृहतीषु स्तुवते व्यतिषिक्ताभिः स्तुवते (तै० ब्रा० २. ७. १८. ५) इति । व्यतिषङ्गः सतोबृहतीनां बृहतीभिर्व्यवधानम् । ततश्च व्यतिषङ्गसंपादनार्थोऽध यदिम इत्यस्याः पुनः प्रयोग इत्यर्थकारितः संचारो न दोषाय । उक्तं चोपग्रन्थे—न पुनः समानाहनि स्तोत्रियासंचारो विद्यते अन्यत्र विघना-(उ० प्र० सू० 10 ३.२)दिति ॥ ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च तदिदास भुवनेषु ज्येष्ठम् (सा० १४८३-५) इति श्यैतं (ऊ० १३. २. १२) स्वासु कालेयम् (ऊ० १. १. ७) ॥ ४ ॥

इति पृष्ठानि ॥ 15

स्वादिष्ठया मदिष्ठया (सा० ६८९-९१) इति गायत्रं तिसृषु संहितमेकस्याम् (सा० १. १. ८) सुरूपमेकस्याम् (ऊ० १३. २. १३) । स्वाशिरामर्क एकस्याम् (र० ३. १. २) । पत्रस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १.१.६)विशोविशीये (ऊ० १३. १. १) । पुरोजिती वो अन्धस (सा० ६९७-९) 20 इति गौरीवितमेकस्याम् (ऊ० ४. १. १३) । निषेध एकस्याम् (ऊ० १२. १. ६) । श्यावाश्वमेकस्याम् (ऊ० १. १. ११) । आन्धीगवं तिसृषु (ऊ० १. १. १२) मधुश्चिन्निधनं तिसृषु 22

1. LCV². अभोम् for अभ्योम्
3. MyBKAT. Om. या तु
9. MyATK. प्रर्थकारिणः ; V². अर्थकारिताः, B. अर्थकारित, C. अर्थकारिता for अर्थकारितः ; V². दोषाः, C. दोषः for दोषाय

(ऊ० ८.२.१५)। सुमन्मा वस्वीरन्ती सूनरी-(सा० १६५४-६)ति वारवन्तीयं तिसृषु (ऊ० १३.२.१४)। कावम् (ऊ० १.१.१३) अन्त्यम् ॥ ५ ॥

इत्यार्भवः पवमानः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

अथ स्तोमाः—

द्वे त्रिवृती स्तोत्रे। द्वे द्वादशे। द्वे पञ्चदशसप्तदशे। द्वे नवदशचतुर्विंशे। द्वे चतुर्विंशैकविंशे। द्वे त्रिणवे ॥ ७ ॥

इति द्वितीयः विघनः ॥१८॥

---

संदंशः

अथैष संदंशोऽभिचरन्यजेत (ष० विं० ब्रा० ४. ४) इति षड्विंश-ब्राह्मणे संदंश उक्तः। अथैष वज्रोऽभिचरन्यजेत (ष० विं० ब्रा० ४. ५) इति वज्रः। राजानं संदंशेनाभिचरेत्। जनपदं वज्रेण (ला० श्रौ० ९. ४. ३८-९)। तत्र संदंशमाह—

श्येनमाज्यबहिष्पवमानम् ॥ १ ॥

इति। पवमानस्य जिघ्नतः (सा० १३१०-२) पुनानो अक्रमीदभि (सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि (सा० १३९६-८) मित्रं हुवे (सा० ८४७-८) उ त्वा मन्दन्तु सोमाः (सा० १३५४-६) ता हुवे ययोरिदम् (सा० ८५३-५) इत्याज्यानि ॥ १ ॥

अर्षा सोम द्युमत्तम (सा० ६६४-६ ) इति गायत्र-वार्षाहरे (र० ३. १. ३)। पुनानः सोम धारय (सा० ६७५-६ )इति वैयश्वमेकस्याम् (ऊ० १३. २. १५)। वषट्कारणिधनमेकस्याम् (ऊ० १३. २. १६)। रौरवमेकस्याम् (ऊ० १. १. २ )। यौधाजयं तिसृषु (ऊ० १. १. ३)। औशनम् (ऊ० १.१.४) अन्त्यम् ॥ २ ॥ 5

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) च सप्तहं ( र० ३. २. १ ) च कालेयं ( ऊ० १. १. ७ ) ॥ ३ ॥ 10

इति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं वार्षाहरं (र० ३. १. ४) सत्रासाहीयम् ( ऊ० १३. २. १७ )। पवस्वेन्द्रमच्छा (सा० ६६२-६) इति काशीतौ-( ऊ० १३. २. १८ )पगवे (ऊ० १०. २. १)। पुरोजिती वो अन्धस ( सा० ६६७-६ ) 15 इति नानदा-(ऊ० २. २. १८)न्धीगवे (ऊ० १. १. १२)। सामत्रयाणां यत् प्रथमं (र० ३. २. २)। कावम् (ऊ० १.१.१३) अन्त्यम् ॥ ४ ॥

[ इत्यार्भवः पवमानः ॥ ]

सामत्रयाणां यत् प्रथममिति । हाउ हाउ हाउ अस् फडित्यादि 20 (आ० गा० २.७.८१) ॥ ४ ॥ 21

20. फडित्यादि, See Arṣeyakalpa, Çaland, note I. p. 73

यज्ञायज्ञीयमग्निष्टोमसाम ॥ ५ ॥

**स्तोमानाह—**

द्वे त्रिवृती स्तोत्रे। द्वे द्वादशे। द्वे पञ्चदशे। द्वे एकविंशे। द्वे चतुर्विंशे। द्वे त्रिणवे ॥ ६ ॥

**इति। त्रिवृत्पञ्चदशैकविंशत्रिणवानामभिचरणीया विष्टुतयः षड्विंशेऽधीताः। तत्र त्रिवृतोर्विष्टुत्योर्विकल्पः ॥ ६ ॥**

**इति संदंशः ॥ १९ ॥**

---

## वज्रः

**वज्रमाह—**

पवस्वेन्दो वृषा सुतोऽ-( सा० ७७८-८० )पघ्नन् पवते मृध ( सा० १२१३-५ ) इति पुरस्तात् पर्यासस्य तृचे। उद्धरति सत्रासाहीयम् ( ऊ० १३. २. १७ )। पुरोजिती वो अन्धस (सा० ६९७-९) इति नानदमेकस्याम् (ऊ० २. २. १८)। तस्यामेवान्धीगवम् (ऊ० १. १. १२)। श्यावाश्वमेकस्याम् (ऊ० ( ऊ० १. १. ११ )। सामैकस्यां त्रयाणां यद् द्वितीयम् (र० ३. २. ३)। प्रमंहिष्ठीयम् (ऊ० २. २. ५) औपगवम् (ऊ० ४. १. १८) उद्वंशीयम् (ऊ० ६. १. ८) ॥ १ ॥

महानाम्न्यः षोडशिसाम। समानमितरं पूर्वेण ॥ २ ॥

**इति।** पवमानस्य जिघ्नतः (सा० १३१०-२) पुनानो अक्रमीदभि- (सा० ९२४-६) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) अपघ्नन् पवते मृधः (सा० १२३७) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि (सा० १३६६-८) मित्रं हुवे पूतदक्षम् (सा० ८४७-८) उ त्वा मन्दन्तु सोमाः (सा० १३५४-६) ता हुवे ययोरिदम् (सा० ८५३-५) इत्याज्यानि ॥

अर्षा सोम द्युमत्तम (सा० ६६४-६) इति गायत्रवार्षाहरे (र० ३. १. ३)। पुनानः सो (सा० ६७५-६) इति वैयश्वं (ऊ० १३. २. १५) वषट्कारनिधनं (ऊ० १३. २. १६) रौरव-(ऊ० १. १. २)मिति सामतृचौ। यौधाजयं तिसृषु (ऊ० १. १. ३)। औशन-(ऊ० १. १. ४)मन्त्यम् ॥ 5

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च सप्तहं (र० ३. २. १) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥ 10

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रवार्षाहरे (र० ३. १. ४)। पवस्वेन्द्रमच्छे-(सा० ६८२-६)ति काशीतौ-(ऊ० १३. २. १८)पगवे (ऊ० १०. २. १) एकर्चयोः। पुरोजिती वो (सा० ६९७-९) इति नानदा-(ऊ० २. २. १८)न्धीगवे (ऊ० १. १. १२) प्रथमायाम्। श्यावाश्वं द्वितीयायाम् (ऊ० १. १. ११)। अभ्याभूर् (आ० गा० ८२) इत्यादिकं महासाम तृतीयायाम् (र० ३. २. ३)। काव-(ऊ० १. १. १३)मन्त्यम्। 15

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥

प्रमंहिष्ठीयं त्वं न इन्द्र (सा० ११६९-७१) इत्यौपगव-मुद्वंशीयमित्युक्थानि ॥ 20

महानाम्न्यः षोडशिसाम। तासां स्तुतिवेलायामुद्घोषः कर्तव्यः। न त्वपां निधनं यजुषा स्यात्॥ २॥ 23

---

22. MyBKA, °काले for °वेलायां

स्तोमविधिमाह—

सर्वः पञ्चदशः ॥ ३ ॥

इति । अभिचरणीया विष्टुतिः ॥ ३ ॥

संदंशवज्रयोरन्ततः शान्त्यर्थं ज्योतिष्टोमेन यष्टव्यमित्याह—

5 क्लृप्तो ज्योतिष्टोमः शान्त्यर्थः । शान्त्यर्थः ॥ ४ ॥

इति ॥ ४ ॥

इति वज्रः ॥ २० ॥

---

इति वामनार्यसूनुः कुशिकान्वयसंभवो वरदराजः ।
एकाहानां कल्पं व्याचष्ट यथागमं यथाबुद्धि ॥

10 इति श्रीवमनार्यसूनुवरदराजविरचितायामार्षेयकल्पव्याख्यायां
पञ्चमोऽध्यायः ॥ ५ ॥

एकाहः समाप्तः ॥

---

3. C. विष्टुतयः for विष्टुतिः
5. LV[2]. after ज्योतिष्टोमः ins. अन्ततः
8. CT. वामनाचार्य for वामनार्य
9. C. कल्पव्याख्यायां for कल्पं व्याचष्ट

# षष्ठोऽध्यायः

# अहीनः

### ज्योतिष्टोमोऽतिरात्रः

अथ विंशप्रभृतिभिरध्यायैर्ब्राह्मणे त्रिभिः ।
येऽहीना विहितास्तेषां क्लृप्तिः षष्ठादिषु त्रिषु ॥ 5

पौर्णमासीदीक्षामासापवर्गाहीना ( ला० श्रौ० ९. ५. १ ) इत्यादि पटलत्रयम् । तेषां सूत्रम्—सर्वेऽतिरात्रा अहीनाः । द्विरात्रप्रभृतयश्चाहर्गणाः ( ला० श्रौ० ९. ५. ६ ) इति । चातुर्मास्यराजसूयौ तु नाहीनौ । तयोरेकाहप्रकरण एव समाम्नानात् । अह्नां संपाताभावाच्च । तत एव वक्ष्यमाणोऽहीनरात्रेर्विशेषः तयोर्न 10 भवति ॥

अत्र त्रिवृद्बहिष्पवमानम् ( तां० ब्रा० २०. १ ) इत्यादिप्रथमानुवाकेनोक्तस्य ज्योतिष्टोमातिरात्रस्य क्लृप्तिमाह—

क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिको यदि वा षोडशिमान् ॥ १ ॥

इति । ब्राह्मणे षष्ठादिभिश्चतुर्भिरध्यायैरतिरात्रसंस्थो ज्योतिष्टोमो- 15
ऽषोडशिकः क्लृप्तः । यदि वा षोडशिमान् इति तु 16

---

4. CLV[2]. ब्राह्मणैः for ब्राह्मणे
6. CKAT. °मासा अपवर्गा अहीनाः for मासापवर्गाहीनाः
7. V[2]LKAMyB. °रात्राहीनः for °रात्रा अहीनाः
8. V[2]. °मास्ये for °मास्य
9. LCV[2]. Om. तु
10. V[2]. संयोग°, MyBTKA. संघात for संपात

ब्राह्मणान्तरानुसारेणोक्तम् । अस्य चातिरात्रस्य प्रयोग आदावेवास्माभिर्दर्शितः ॥ १ ॥

वक्ष्यमाणानां रात्रेर्विशेषमाह—

आहीनिक्यां रात्रौ । पन्यंपन्यमित् सोतार (सा० १६५७-६) इति श्रौतकक्षं (ऊ० १४. १. १) दैवोदासं होतृषाम (ऊ० १. १. २) कौत्सस्य लोक आष्टादंष्ट्रम् (ऊ० १४. १. २) आ त्वा विशन्त्विन्दव (सा० १६६०-२) इत्येतासु ॥ २ ॥

समानमितरं सात्रिक्या ॥ ३ ॥

इति । दैवोदासं होतृषामेति । इह खल्वाज्यानि पृष्ठानि साग्निष्टोमानि चोकूथानि । प्रत्येकं रात्रिपर्याया इति चत्वारि चत्वारि सामानि यथाक्रमं होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकैरनुशंस्यन्त इति तत्तत्संबन्धेन व्यवह्रियन्ते । ततश्च श्रौतकक्षात् परं यद्धोतृषाम मध्यमस्य रात्रिपर्यायस्य प्रथमं साम तद्दैवोदासं नियतम् । न त्वौर्ध्वसद्मनेन सह वैकल्पिकमित्यर्थः । सात्रिक्या इति तुल्यार्थयोगे चतुर्थीप्रयोगः छान्दसः । सात्रिक्या रात्र्याः समानमन्यदित्यर्थः । सत्रेषु द्वादशाहादिषु या रात्रिः सा सात्रिकी । एवं च ज्योतिष्टोमेन समानमिति वक्तव्ये सात्रिक्येति वचनं सत्रेषु सर्वस्तोमातिरात्रादीनामाहिनिकानामप्यतिदेशो प्राकृत्येव रात्रिरिति प्रदर्शनार्थम् । ब्राह्मणे च षष्ठादिभिरध्यायैर्विहितो ज्योतिरतिरात्रः स्वतन्त्रः एव । ननु द्वादशाहाङ्गभूतः तस्मिंश्च नाहिनिकी

---

7. MyBV[2]T. सात्रिक्यै for सात्रिक्या ; Comm. accepts सात्रिक्यै

11. KATMyB. °शस्यन्ते for शंस्यन्ते ; T. अपरं for परं

13. LCV[2]. निधनं for नियतं ; LCV[2]. वैकल्पितं for वैकल्पिकम्

16. L. °ष्ठोम्या, CV[2]. °ष्टोमा for °ष्टोमेन

रात्रिरिति प्रतिपादितम् । सूत्रे ज्योतिष्टोमविधिरनन्तराम्नानात् (ला० श्रौ० ६. ६. १८) इत्यादिना ॥ २ ॥

इति ज्योतिष्टोमोऽतिरात्रः ॥ १ ॥

---

## सर्वस्तोमोऽतिरात्रः

अथ सर्वस्तोमोऽतिरात्रः । त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशो माध्यंदिनः पवमानः । एकविंशानि पृष्ठानि । त्रिणव आर्भवः । त्रयस्त्रिंशोऽग्निष्टोमः । प्रत्यवरोहीण्युक्थानि । त्रिणवं प्रथमम् । द्वे एकविंशे सषोडशिके । पञ्चदशी रात्रिः । त्रिवृत्संधिः । सर्वस्तोमेनातिरात्रेण बुभूषन् यजेत (तां० ब्रा० २०. २) इत्यनुवाकेनोक्तः । तस्य कल्पः— 5 10

सर्वस्तोमस्योपवती प्रतिपत् । स्वासु श्यैतम् (सा० ८११-२ ; ऊ० २. १. ३) परिस्वानार्भवीया (सा० १०६३-५) । संहितादुत्तरं जराबोधीयम् (ऊ० १०. १. १८) । आन्धीगवादाथर्वणम् (र० ३. १. १) ॥ १ ॥

समानमितरं प्रथमेन साहस्रेण ॥ २ ॥ 15

तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ३ ॥

इति । आर्भवीयेत्यार्भवाद्या गायत्रीत्यर्थः । उप-दवि-पवे-( सा० ६५१-६ )ति बहिष्पवमानम् । अग्न-आ नो मित्रा-( सा० ६६०-५) मित्रं वयम्-इन्द्रमिद्गाथिनः-इन्द्रे अग्ने-( सा० ७६३-८०२ ) त्याज्यानि ॥ 20

---

9. B. after इत्यनुवा folios 107-111 are missing. The folio 112 begins with स्वासु कालेयम् (p. 298, L. 20) under नवसप्तदश

अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ६. २. ३) च। परीतो षिञ्चता सुतम् (सा० १३१३-६) इति समन्त-(ऊ० ६. १. ३)माद्यायाम्। रथन्तर-(र० २. २. ६)दैर्घश्रवसे (ऊ० ५. २. ४) तृचयोः। यौधाजयमध्यास्यायाम् (ऊ० ७.२.५)
5 अयं सोम (सा० १४७१-३) इति पार्थमन्त्यम् (ऊ० ६.२.५)। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० १०. १. ४) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

परिस्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्र-संहिते (ऊ० ६.२.६) जराबोधीयम् (ऊ० १०.१.१६)। पवस्वेन्द्रमच्छे-
10 (सा० ६६२-६)ति सफ-(ऊ० १.१.९)श्रुध्ये (ऊ० ६. १. २०)। पुरोजिती व (सा० ६६७-६) इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२)। आथर्वणं (र० १.१.६) च। सूर्यवतीषु काव-(ऊ० ६. २. ११)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। साकमश्वं
15 सौभरं (ऊ० १. १. १५-६) नार्मेध-(ऊ० १. १. १७)मि-त्युक्थानि। गौरीवितं (ऊ० १.२.१७) षोडशिसाम। आहीनिकी रात्रिः। संधिः प्राकृतः। अतःप्रभृति ब्राह्मणेनैव स्तोमानां विधानात् आर्षेयकल्पे नोक्तः ॥ ३ ॥

इति सर्वस्तोमोऽतिरात्रः ॥२॥

---

20 ## अप्तोर्यामः

अथाप्तोर्यामः—त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशो माध्यंदिनः पवमानः। एकविंशं होतुः पृष्ठम्। छन्दोमा इतराणि। त्रिणव आर्भवः। त्रयस्त्रिंशोऽग्निष्टोमः। प्रत्यवरोहीण्युक्थानि। त्रिणवं
24 प्रथममथैकविंशमथ सप्तदशम्। एकविंशः षोडशी पञ्चदशी रात्रि-

---

17. MyKAT. प्रकृतः for प्राकृतः
22. My. after एकविंशं ins. होतृषाम यथाज्यानि पृष्ठानि

स्त्रिवृत्संधिः त्रिवृत्प्रथमातिरिक्तस्तोत्रमथ पञ्चदशमथ सप्तदशमथैकविंशम् (तां० ब्रा० २०. ३. १) इत्यनुवाकेनोक्तः। तस्य कल्पः—

अप्तोर्याम्नस्तृतीयस्य सहस्रस्याज्यब्रह्मिष्पवमानम् । जराबोधीयस्य लोके सुरूपम् (ऊ० १४. १. ३) । उद्वरस्याथर्वणम् । परि प्र धन्व ( सा० १३६७-६ ) इति स्वर्निधनं सौहविषम् 5 (ऊ० १४. १. ४) ॥ १ ॥

समानमितरं पूर्वेण ॥ २ ॥

वैश्वजितानि पृष्ठानि पृष्ठानां गर्भाः ॥ ३ ॥

अनुब्राह्मणमतिरिक्तस्तोत्राणि । ४ ॥

इति । गर्भप्रकारो निदानकारेण व्याख्यातः । तत्र गर्भविधानमाहुर्मध्यमं 10 पर्यायं सस्त्रोत्रीयं गर्भं कुर्यात् । प्रथमोत्तमौ मुख्यस्य । एवं गर्भोपपत्तिर्भवती-( नि० सू० ८. २ )ति । सोऽयं बृहत्पृष्ठोऽप्तोर्यामः कल्पकारेणोक्तः । सूत्रकारेण तु बहवोऽप्तोर्यामविकल्पा दर्शिताः । अप्तोर्यामे कृता गर्भाः कल्पेन । रथन्तरं वा पृष्ठम् । तस्य स्थाने बार्हतं वाजजित् । बृहद्वारवन्तीये उत्तरे पृष्ठे । कालेयस्यर्क्षु वारवन्तीयम् । 15 तस्य स्थाने पूर्वम् । समन्तस्य च कालेयम् । पार्थस्यौशनम् । त एव गर्भाः पृष्ठेषु (ला० श्रौ० ६. ५. १२-२०) इत्येकः पक्षः ॥

अथास्य पक्षस्य कल्पोक्तस्य च साधारणमाह—वैश्वजितान्याज्यानि आज्येषु गर्भान् कुर्यादिति धानंजय्यः । षाष्टिकान्युक्थान्युक्थेषु (ला० श्रौ० ६.५.२१) इति । अस्मिन् अपि पक्षे यज्ञायज्ञीयस्य गर्भो नास्ति । 20 पक्षद्वयेऽपि पृष्ठानामेव गर्भा इति शाण्डिल्यस्य मतम् । तदाह— 21

10. LCV²T. कारः for प्रकारः ; MyKA. Om. निदानकारेण

11. LCV². स्तोत्रीयं for सस्तोत्रीयं ; LCV². मुखस्य, T. मुख्या for मुख्यस्य

19. T. पाष्टिकानि for षाष्टिकानि ; LV². Om. उक्थानि

20. MyK. after इति add : वचनात् ; My. Om. अपि ; MyK. मते for पक्षे

यथैवार्षेयकल्पेन कृतमिति शाण्डिल्यः (ला० श्रौ० ६. ५. २२) इति। तस्यैव मतेन कल्पान्तरमाह—ज्योतिष्टोमे वातिरात्रेऽतिरिक्तस्तोत्राण्यादध्यात् षोडशिमतीति शाण्डिल्यः। त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयं च बृहद्गर्भ-(ला० श्रौ० ६. ५. २३-४ )मिति। सोऽयं ज्योतिरप्तोर्याम उच्यते।
5 निदानकारस्त्वाह—अपि वा सर्वाण्यावर्त्तीनि वैश्वाजैतरावर्त्तिभिर्गर्भवन्ति कुर्यात्। तत्र बृहत् संचरते तस्य वैरूपं विधृत्या (नि०सू० ८.२) इति। तत्र तावन्निदानकारमतमाश्रित्य बृहत्पृष्ठस्य प्रयोग उच्यते। तत्र बृहत्पृष्ठातिरात्रवत् सर्वम्। विशेषस्तु— पवस्व वाचो (सा० ७७५-७) दविद्युतत्या रुचा-पवमानस्य ते कवे (सा० ६५४-६)
10 इति बहिष्पवमानम्। अग्निं दूतम् (सा० ७९०-२) आ नो मित्रा- इन्द्रमिद्गाथिनः (सा० ७९६-९) इन्द्राग्नी आगतम् (सा० ६६९-७१) इत्याज्यानि। चतुर्ऋचेऽन्त्याया उद्धारः। सुषमिद्धो न आवह (सा० १३४७-५०) ता नः शक्तं पार्थिवस्य (सा० १४६५-७) युञ्जन्ति ब्रध्नम् (सा० १४६८-७०) तमीडिष्व यो अर्चिषा
15 (सा० ११४९-५१) इत्याज्यानां गर्भाः। सुषमिद्ध (सा० १३४७-५०) इत्यत्र शुनककण्वसंकृतिवाध्र्यश्वानां द्वितीयामृच- मुद्धरेत्। तृतीयामन्येषाम्। ऋग्जपकाले गर्भिणां गर्भाणां च क्रमेण ऋग्जपः। तत्र प्रथममाज्यस्य पञ्चदशस्तोमस्य प्रथमं पर्यायम् अग्निं दूतम् (सा० ६९०-२) इति तृचेन स्तुत्वा सुषमिद्ध
20 इति तृचेन द्वितीयं पर्यायं स्तुयुः। पुनरग्निं दूतम् इत्यनेन तृतीयम्। एवमुत्तरेष्वप्याज्येषु द्रष्टव्यम्॥

अथ माध्यंदिनः पवमानः। अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ९.२.३) च। परीतो षि (सा० १३१३-५) इति समन्तं (ऊ० ९.१.६) प्रथमायाम्।
25 रथन्तरं (र० २.२.२) तिसृषु। दैर्घश्रवसं तिसृषु (ऊ० ५.२.४)।
26 यौधाजयमध्यास्यायाम् (ऊ० १.१.३)। अयं सोम (सा० १४७१-३)

10. V²KA. इति ins. त्रिवृत्

18. T. प्रथमाज्यस्य, My. प्रथमस्याह्नः, KA. प्रथमस्य for प्रथममाज्यस्य

इति पार्थ-(ऊ० ६.२.५)मन्त्यमिति सप्तदशः । रथन्तरस्य
ककुबुत्तरा बृहती छन्दः । पृष्ठ्ये रथमतिवहेयुरित्यादिनोक्ता
रथघोषादयः पृष्ठधर्मा अत्र कार्याः । कथं धर्माः कर्तव्या इत्येके । गर्भ-
भूतानि भवन्त्यनुपभूतान्यधर्मा गर्भो भवतीति कर्तव्या इत्याचार्या (नि०सू०८.२)
इत्यादिनिदानवचनात् । अत्र पवमाने रथन्तरस्तवनकाले बहिर्वेदि 5
पश्चात् सन्तं रथं प्राञ्चं वहेयुः । बृहत्पृष्ठं तस्य वैराजं गर्भः ।
एकविंशस्तोमः । बृहद्वैराजे पिबतां सोम्यं मध्वध्वर्युर्दधती यज्ञपताविति
पृष्ठहोमे विशेषः । वैराजस्य विराट् छन्दः । पिबा सोममिन्द्र
मन्दन्तु त्वेत्यादि विधायकब्राह्मणम् । वसन्तो हिंकार इति भक्त्यु-
पासनम् । प्राक्स्तोमयोगाद् ऐरं वै बृहदित्यादीनां दशव्याहृतीनां 10
ध्यानम् । अरणीभ्यां दर्भद्वयेन चोपाकृते स्तोत्रे तदरणीद्वयं
दर्भद्वयं चादायोद्गाता स्वस्य दक्षिण ऊरौ काष्ठशकलं दर्भद्वयं
चानूरु निधाय शकलस्योपरि तिरश्चीमरणिं तस्या उपरि
उत्तरामरणिं निधाय त्रिःप्रदक्षिणमभिमन्थेत् । गायत्रं छन्दोऽनुप्रजायस्व ।
त्रैष्टुभं छन्दोऽनुप्रजायस्व । जागतं छन्दोऽनुप्रजायस्वेति 15
मन्त्रैररण्योः संधानम् । पाणिभ्यामालभ्य तेजोऽसि तेजो मयि
धेहि इति पाणिभ्याम् उपजिघ्रेत् । अथान्येन मथ्यमाने स्तोमं
युक्त्वा दुन्दुभिघोषं कारयन्त एकविंशस्यैकं पर्यायं बृहता
स्तुत्वा मथितमग्निमन्येन ज्वालयन्तो वैराजेन मध्यमं स्तुयुः ।
पुनर्दुन्दुभिघोषं कारयन्तः उत्तमं पर्यायं बृहता समापयेयुः । 20

2. V². पृष्ठे for पृष्ठ्ये ; MyK. रथन्तरम् for रथम्, LCMyKA. इति वहेयुः for अतिवहेयुः
3. KTAMy. after धर्माः add : इत्यत्र
4. LMyV². गर्भभृतानि for गर्भभूतानि ; C. अनुच्यभूतानि, T. अनुभृतानि, V². अनुष्यभृतानि for अनुपभूतानि
6. C. Om. बृहत्पृष्ठं ... विशेषः (L. 8)
10. CLV²MyKA. इत्यादि for इत्यादीनां ; CLV². व्याहृति for व्याहृतीनां
16. V²LC. मन्त्रेण for मन्त्रैः
17. TKAMy. पाणी for पाणिभ्याम्
18. My. युञ्ज्यात्, L. युज्यते for युक्त्वा

यजमानं वाचयित्वा पुनरूर्जेति स्परीत्यन्तेन निर्मथितमग्निमभि-
मन्त्रयेत। तस्मिन्नध्वर्युणाहवनीये प्रहृते प्रेद्धो अग्न इति विराजा
स्वाहान्तया जुहुयात्। स्वाहेति च वामदेव्यं मैत्रावरुणसाम।
तस्य महानाम्न्यो गर्भः। चतुर्विंशः स्तोमः। महानाम्नीनां शक्वरी
5 छन्दः। इन्द्रः प्रजापतिमुपाधावदिति विधायकब्राह्मणम्। पृथिवी
हिंकार इति भक्त्युपासनम्। प्राक्स्तोमयोगात् गावो अश्वा
इति ध्यानम्। शैवालमिश्रिताभिरद्भिर्दर्भद्वयेन चोपाकृते स्तोत्रे
दर्भद्वयं गृहीत्वापः समीपे निधाय वामदेव्येनैकं पर्यायं समाप्य
शक्वरीभिर्मध्यमं पर्यायं स्तुयुः। तत्र यो यः सामाङ्गं ब्रूयात् स
10 उद्घोषं जनयेत्। प्रथम एव प्रस्तावे कुशाविधानम्। द्वितीयादिषु
प्रस्तावेषु नोंकारेणोद्गीथादानम्। उत्तमाभ्यासादनन्तरम् आइवा इत्यादि
पुरीषपदैः स्तवनम्। एवं मध्यमं पर्यायं समाप्य पुनर्वामदेव्येन
तृतीयं पर्यायं स्तुयुः। यजमानवाचनं कृत्वा तदुदकमास्तावेऽना-
धृष्टासीति विदेयेत्यन्तेन निनयेत्। जानुनोः शैवालानुपहरेत्।
15 अथोपरिष्टाज्जपः। श्यैतं ब्रह्मसाम। तस्य वैरूपं गर्भः।
चतुश्चत्वारिंशः स्तोमः। यद्याव इन्द्र ते शतम् इति शतवत्यो
भवन्ति इत्यादि वैरूपस्य ब्राह्मणम्। अभ्राणि संप्लवन्त इत्यभि-
ध्यानम्। श्यैतवैरूपे सामनी उपधावामि। अभि प्र वो यद्याव-
ऋचावुपधावामि। प्रजापतिविश्वरूपावृषी उपधावामि। चतुश्चत्वारिंश-
20 स्तोममुपधावामीत्युपसरणे विशेषः। दर्भद्वयेन धवित्रेण च स्तोत्र
उपाकृते तद् धवित्रं यजमानपरिचारकहस्तेषु निधाय श्येतेनैकं
22 पर्यायं समाप्य धवित्रेणोपवीज्यमाना वैरूपेण मध्यमं पर्यायं

1. TLV². ऊर्जेन, My ऊर्जस्वेति for ऊर्जेति ; LCV². परी° for स्परी°
2. V². प्रहूते, T. बृहिते, KA. प्रसृते for प्रहृते
16. C. Om. यद्याव ... स्तोमः (p. 295, L. 20)
20. V²KATMy. °द्वयेनाधावत्रयेण for द्वयेन धवित्रेण
21. V²KATMy. तदा धावत्रयं, L. तदाधवित्रं for तद् धवित्रं
22. V²MyΓ, समाप्याधावेन, KA. समाप्याधानेन for समाप्य धवित्रेण

स्तुवीरन्। पुनश्च श्यैतेनोत्तमं पर्यायं वाचयित्वा यजमानं धवित्रेण वायुमुत्पाद्य तं वात आवातिवति तृचेनानुमन्त्रयेत्। कालेयमाछावकसाम। तस्य रेवत्यो गर्भः। अष्टाचत्वारिंशत् स्तोमः। षोडशभ्यो हिंकरोति पथ्या विष्टुतिः। रेवतीनां गायत्री छन्दः। यातयामान्यन्यानि छन्दांसि इत्यादि ब्राह्मणम्। कालेयेनैकं पर्यायं 5 समाप्य रेवतीभिर्मध्यमं पर्यायं स्तुवीरन्। तासां स्तोत्रे धेनूर्दक्षिणतो वत्सांश्चोत्तरतः कृत्वा धेनूनां वाशितं जपेयुः। पुनः कालेयेनोत्तमे पर्याये स्तुते धेनूर्वत्सांश्च पूर्वेण सदः संमृज्य पश्चिमेनाग्नीध्रीयमुदीचीरिति क्षिपेयुः। यजमानं वाचयित्वा गोनामभिरनुमन्त्रयेत। हव्ये काम्य इत्यादिना वोशीयेत्यन्तेन 10 अद्भिरूपाकृतं चेत् तदा ता आपो हि ष्ठा इति तृचेनास्तावे निनयेत्। अथार्भवस्त्रिणवः। परि स्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्र-संहित-(ऊ० ९.२.६) सुरूपाणि (ऊ० १४.१.३)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-(ऊ० १.१.८) शुध्ये (ऊ० ६.१.२०)। पुरोजिती-(सा० ६९७-९)ति श्यावाश्वान्धीगवे (ऊ० १. 15 १.११-२)। परि प्र धन्वे-(सा० १३६७-९)त्यक्षरपङ्क्तिषु स्वर्निधनं सौहविषम् (ऊ० १४.१.४)। सूर्यवतीषु काव-(ऊ० ६. २.११)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। तस्य त्वमग्ने यज्ञानाम् (ऊ० १४७४-६) इति बृहद्गर्भः। त्रयस्त्रिंशः स्तोमः एकादशभ्यो हिंकरोतीत्यादिभिर्विष्टुतिभिः। बृहतो गायत्री 20 छन्दः। दशव्याहृतीनां ध्यानम्। दुन्दुभिघोषश्च पूर्ववत्। नाजाश्ग्यूषा इति षूषूक्रातावित्येवात्र वक्तव्यम्। स्तोत्रोत्तमायां प्रत्य- 22

---

1. L. आधवित्रेण, KATV[1]My. आधावेन for धवित्रेण
8. TK. संसृज्य for संमृज्य
10. V[2]L. °मन्त्रयेत् for °मन्त्रयेत
12. T. आर्भवं त्रिणवम् for आर्भवस्त्रिणवः; L. त्रिणवं for त्रिणवः
19. LV[2]. गर्भम् for गर्भः
21. LV[2]. व्याहृति, C. व्याहृतिर् for व्याहृतीनां; My. Om. नाजा ... वक्तव्यम्
22. C. सुक्रातौ, V[2]. सुक्तातो, T. सूको, KA. सूक्तान्तौ for षूक्रातौ

वरोहस्य विधानात् । अत्र पृष्ठाग्निष्टोमविधानयोर्द्वयोरपि रथन्तराव्यवहितेन बृहता स्तवनाज्जामित्वं प्राप्तमपि अभि प्रवता इत्येतेन परिहृतम् । तथा च जामिकरणानीत्यधिकृत्य निदानम्—कण्वरथन्तरमभिवहति । रथन्तरनिधनानि बृहत्संनिपातेषु (नि० सू० १.१३)
5 इति । अथोक्थानि । एह्यूषु (सा० ७०५-७) इति साकमश्वम् (ऊ० १.१.१५) । वयमु त्वे-(सा० ७०८-९)ति सौभरम् (ऊ० १.१.१६) । अधाहीन्द्र (सा० ७१०-२) इति नार्मेधम् (ऊ० १.१.१७) । इति तानि च क्रमात् त्रिणवैकविंशसप्तदशस्तोमानि । तेषां गर्भा न सन्ति । विश्वजिति तेषामेवोक्थत्वात् । अन्ये तु षाष्ठिकान्युक्थान्युक्थेष्वि-(ला० श्रौ०
10 ६.२.२१)ति पक्षान्तरोक्तानत्र गर्भानाविःकुर्वन्ति । तद्यथा—साकमश्वस्य गूर्दो गर्भः । सौभरस्य भद्रम् । नार्मेधस्योद्वंशपुत्र इति । गर्भाणां द्विपदा छन्दः । गर्भविधानमुक्तम् । सोऽयं पक्षद्वयसंकरो नास्मभ्यं रोचते । अथ षोडश्यादि संधिस्तोत्रान्तम् । तत्र रात्रौ पन्यं पन्यं (सा० १६५७-९) श्रौतकक्षम् (ऊ० १४.१.१) । दैवोदासम् (ऊ० ७.१.१९)
15 होतृषाम नित्यम् । कौत्सस्य लोके आष्टादंष्ट्रम् (ऊ० १४.१.२) ।
16 आ त्वा विशन्त्विन्दव ( सा० १६६०-२ ) इत्येतास्विति विशेषः ।

---

2. V²C. रथन्तरव्यवहिते, L. रथन्तराव्यवहिते for रथन्तराव्यवहितेन ; LV². स्तवना, C. सूचना for स्तवनात् ; CV²MyKAT. Om. अपि ; T. अभिवर्तं, V³. अभिवाता, L. अभिवत, KA. अभिवता for अभिप्रवता
4. V²L. अभिभवन्ति, C. महति भवन्ति for अभिवहति ; LV². नीमानानि for निधनानि
10. KAMy पक्षान्तरोक्त for पक्षान्तरोक्तान् ; KAMy. गर्भादिहापि, V². गर्भादिभावं, C. गर्भादिमाविः for गर्भानाविः ; CKMyTAV². Om. अत्र ; V²LC. तथा for तद्यथा
11. MyKA. trans. गर्भाणां द्विपदा छन्दः after उक्तम्
12. C. अस्माकं for अस्मभ्यं
13. MyK. Om. स्तोत्रान्तम् ... तत्र च संधि (p. 297, L. 1)

चत्वार्यतिरिक्तस्तोत्राणि ब्राह्मणेन क्लृप्तानि। तत्र च संधिचमस-भक्षणानन्तरं निष्क्रमणादि यजमानोपहवान्तं कृत्वा स्वासु जराबोधीयेन त्रिवृता स्तुयुः। अग्निर्गायत्र्यग्निरित्यृष्यादयः। परिवर्तिनी विष्टुतिः। गायत्रच्छन्दस इति भक्षणम्। गायत्रच्छन्दसाति-रिक्तस्तोत्रेष्विति गौतम (ला० श्रौ० ३. १. २८) इति वचनात्। 5
ततो निष्क्रमणाद्युपहवान्तं कृत्वा स्वासु सत्रासाहीयेन पञ्चदशेन स्तुयुः। इन्द्रो गायत्रीन्द्रः। पूर्ववत् भक्षयित्वा पुनर्निष्क्रमणाद्युप-हवान्तं कृत्वा स्वासु मार्गीयवेण सप्तदशेन स्तुयुः। इन्द्रो गायत्री विश्वे देवाः। पूर्ववत् भक्षणम्। पुनरुपहवान्तं कृत्वा इदं विष्णुर् (सा० १६६६-७४) इति वारवन्तीयेनै-(ऊ० १४. १. ७) कविंशेन 10
स्तुयुः। इन्द्रो गायत्री विष्णुः। पूर्ववद्भक्षणम्। अथ स्तोम-विमोचनाद्युवदसनीयान्तम्॥

इति बृहत्पृष्ठोऽप्तोर्यामः॥

---

रथन्तरपृष्ठे तु समन्तस्य स्थाने तस्यामेवर्चि कालेयम् (ऊ० ९.२.४)। रथन्तरस्य स्थाने तास्वेव। मृज्यमानः सुहस्त्ये-(सा० 15
१०७९-८०)ति वाजिजिद् (ऊ० ३.२.४) अन्त्यम्। पार्थस्य स्थाने स्वास्वौशनम् (ऊ० १८. २. ४)। रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १.१.५) च स्वासु बृहच्च (र० १.१.५)। कालेयस्यर्क्षु वारवन्तीयं (ऊ० १०.१.१५) चेति पृष्ठानि। इदं विष्णुरि-(सा० १६६६-७४)ति वारवन्तीयस्य स्थाने तस्मिन्नेव तृचे 20

---

1. T. अत्र for तत्र; V[2]LC. Om. च
3. T. Om. जराबोधीयेन ... कृत्वा स्वासु (L. 6)
8. TKA. रुद्रो for इन्द्रो
16. V[2]MyKACΓ. ऊह्यम् for अन्त्यम्

पूर्वं वारवन्तीयमूहेत् । अन्यत् सर्वं बृहत्पृष्ठाप्तोर्यामवत् । ज्योतिरप्तोर्यामे तु ज्योतिष्टोमानां वैराजादयो गर्भाः पूर्ववत् । यज्ञायज्ञीयस्य त्वमग्ने यज्ञानामि-( सा० १४७४-६ )ति बृहद्गर्भः । संधेरूर्ध्वमतिरिक्तस्तोत्राणि । अन्यत्सर्वं ज्योतिरतिरात्रवत् । केचित्
5 पुनर्ज्योतिरतिरात्रे गर्भरहिते संधिस्तोत्रानन्तरमतिरिक्तस्तोत्राणीच्छन्ति । तत् प्रमाणं गवेषणीयम् । इतरे त्वप्तोर्यामविकल्पाः स्पष्टाः ॥ ४ ॥

इति अप्तोर्यामः ॥ ३ ॥

---

## नवसप्तदशः

अथ नवसप्तदशः । त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम् ।
10 सप्तदशानि स्तोत्राणि । एकविंशोऽग्निष्टोमः । सोक्थ्यः । पञ्चदशी रात्रिः । त्रिवृत् संधिः । नवसप्तदशेनातिरात्रेण (तां० ब्रा० २०. ४) इत्यनुवाकेनोक्तः । नवसप्तदशानि स्तोत्राणीति मैत्रावरुणाज्य-प्रभृत्यार्भवान्तानि नवस्तोत्राणि सप्तदशानीत्यर्थः । तस्य कल्पः—

नवसप्तदशस्यामहीयवादुत्तरं पवस्व मधुमत्तम ( सा० ६९२-३ )
15 इति साकमश्वम् (ऊ० १४. १. ८) । अभि सोमास आयव (सा० ८५६-८) इति जनित्रं ( ऊ० १४. १. ९ ) रौरव-( ऊ० ७. १. १३ ) यौधाजये ( ऊ० ८. २. १९ ) । नौधसस्यर्क्षु जनित्रम् ( सा० ६८५-६ ; ऊ० १४. १. १० ) । परि प्र धन्वे-(सा० १३६७-९)ति सफम् (ऊ० १०.१.९) ॥१॥
20 समानमितरं ज्योतिष्टोमेनातिरात्रेणाषोडशिकेन ॥ २ ॥

---

1. MyKA. Om. 'मूहेत् ... यज्ञीय' (L. 3)
13. LCV²T. Om. तस्य कल्पः
18. V²CT. Om. नौधसस्यर्क्षु ... साकमश्वम् (p. 299, L. 4)

इति । उप-दवि-पवे-(सा० ६५१-६)ति बहिष्पवमानम् । अग्न-आ नो-
मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चा ते जातमन्धस-
(सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च ।
पवस्व मधुमत्तम (सा० ६६२-३) इति साकमश्वमेकस्याम् (ऊ०
१४. १. ८) । ककुब्यत्र माध्यंदिन एकर्चस्तस्या-(ला० श्रौ० ६. 5
४. ७)मिति वचनात् । अभि सोमास आयव ( सा० ८५६-८ )
इति जनित्र-( ऊ० १४. १. ६ )मेकस्याम् । एकमेकर्चं कुर्वन्
प्रथमायामादितः कुर्यात् ( ला० श्रौ० ६. ३. १२ ) इत्यारभ्य
माध्यंदिने चेदेको द्वौ वा बृहत्यामेवे-( ला० श्रौ० ६. ३. १६ )ति
वचनात् । पूर्वं जनित्रमेतत् । रथन्तरं (र० १. १. १) च वामदेव्यं 10
(ऊ० १. १. ५) च । नौधसस्यर्क्षु जनित्रमुत्तरम् (ऊ० १४.
१. १० ) । स्वासु कालेय-( ऊ० १. १. ७ )मिति पृष्ठानि ।
स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १. १. ८) ।
परि प्र धन्वे-(सा० १३६७-६)न्द्रमच्छे-(सा० ६६४-६)ति सफ-
पौष्कले (ऊ० १०. १. ९-१०) एकर्चे । पुरोजिती व ( सा० ६६७-६ ) 15
इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२) । काव-(ऊ० १.
१.१३)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ०१.१.१४) । साकमश्वं
सौभरं नार्मेधमित्युक्थानि । षोडशी न कर्तव्यः । आहीनिकी
रात्रिः संधिः ॥ २ ॥

इति नवसप्तदशः ॥ ४ ॥ 20

---

4. LMyB. after इति add : साकमश्वमौशनमन्त्यम्
6. LCTV². Cm. अभि ... इति
8. LV². प्रथमाय for प्रथमायाम्
15. LCV², Om. एकर्चे

## विषुवान् अतिरात्रः

अथ विषुवान्। त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। पञ्चदशो माध्यंदिनः पवमानः। सप्तदशानि पृष्ठानि। सप्तदश आर्भवः। एकविंशोऽग्निष्टोमः। सप्तदशान्युक्थानि। पञ्चदशी
5 रात्रिस्त्रिवृत्संधिः। विषुवतातिरात्रेण (तां ब्रा० २०. ५) इत्यनुवाकेनोक्तः तस्य क्लृप्तिः—

या ज्योतिष्टोमस्य सा विषुवतः। तस्य सप्तदशान्युक्थानि अषोडशिकोऽतिरात्रः ॥ १ ॥

इति। तस्य सर्वं ज्योतिरतिरात्रवत्। उक्थानि सप्तदशानि।
10 षोडशी नास्ति इति विशेषः ॥ १ ॥

इति विषुवान् अतिरात्रः ॥ ५ ॥

---

## गो-आयुषी अतिरात्रे

पञ्चदशं बहिष्पवमानम् (तां० ब्रा० २०. ६. ७) इत्यनुवाकाभ्यां गोआयुषी क्लृप्ते विहिते। तयोः कल्पः—

15 क्लृप्ते [गोआयुषी ॥ १ ॥

इति। गोर्वार्कजम्भस्य लोक (आ० क० ३. १. २) इत्यादिना च आयुषो वार्कजम्भस्य लोक (आ०क० ३. १. ३) इत्यादिना क्लृप्ते। तयोराहीनिकी रात्रिः ॥ १ ॥

19 इति गो-आयुषी अतिरात्रे ॥ ६ ॥

---

6. LV²MyBKAT, तस्याः for तस्य

## विश्वजिदभिजितौ

त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम् ( तां० ब्रा० २०. ८ ) इत्यष्टमेनानुवाकेन अभिजिदतिरात्र उक्तः । नवमेन विश्वजित् । तयोः कल्पः—

क्लृप्तौ विश्वजिदभिजितौ ॥ १ ॥ 5

इति । अभि प्र गोपतिं गिरा-इत्यभिजितः ( आ० क० ३. १. ४ ) इत्यादिना विश्वजितः पवस्वेन्द्रमच्छे-(आ० क० ३. १. ५)त्यादिना च क्लृप्तौ । तयोराहीनिकी रात्रिः ॥ १ ॥

इति विश्वजिदभिजितौ ॥ ७ ॥

---

## एकस्तोमाश्चत्वारः 10

अथैकस्तोमाश्चत्वारः । त्रिवृतातिरात्रेण ( तां० ब्रा० २०. १० ) इत्यनुवाकेन प्रथमः उक्तः । पञ्चदशेनातिरात्रेणेति द्वितीयः । सप्तदशेनातिरात्रेणेति तृतीयः । एकविंशेनातिरात्रेणेति चतुर्थः ॥

इति एकस्तोमाश्चत्वारः ॥

---

## त्रिवृदतिरात्रः 15

तत्र प्रथमस्य कल्पः—

या बृहस्पतिसवस्य सैकस्तोमानां प्रथमस्य । तस्यैव ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ १ ॥ 18

---

3. KAMyB. after विश्वजित् add : अतिरात्र उक्तः

16. V[2]CLT. Om. प्रथमस्य

17. LCV[2]T. तस्मै for तस्यैव

इति । अग्निष्टोमान्तं बृहस्पतिसववत् । साकमश्वप्रभृति ज्योतिष्टोमवत्।
सर्वाणि स्तोत्राणि त्रिवृन्ति । षोडशी तु षोडशस्त्रिवृद्वा ।
तद्वक्ष्यति—षोडशाः षोडशिनोऽनुब्राह्मणं वे-(आ० क० ६.२.३)ति॥१॥

इति त्रिवृदतिरात्रः ॥ ८ ॥

---

5 ## पञ्चदशोऽतिरात्रः

द्वितीयमेकस्तोममाह—

गोराज्यबहिष्पवमानम् । इन्द्रस्तोमस्य माध्यंदिनः । पुनानः सोम धारय ( सा० ६७५-६ ) इति बृहती । स्वासु श्यैतम् ( ऊ० २. १. ३ ) ॥ १ ॥

10 समानमितरं प्रथमेन साहस्रेण ॥ २ ॥

तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ३ ॥

इति । पवस्व वाचो अग्रियो-( सा० ७७५-७ ) दविद्युतत्या रुचा (सा० ६५४-६) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) पवमानस्य ते कवे ( सा० ६५७-९ )
15 इति बहिष्पवमानम् ॥

अग्निं दूतम् वृणीमहे (सा० ६६०-८; ८००-२) इत्याज्यानि। उच्चा ते (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १)
18 च। पुनानः सो (सा० ६७५-६) इति समन्तं (ऊ० ६. २. २)

---

1. LV[2]C. सवात् for °सववत् ; T. Om. सववत् ; LV[2]C. ज्योतिष्टोमात् My. ज्योतिष्टोमातिरात्रवत् for ज्योतिष्टोमवत्

च यौधाजयं (ऊ० १. १. ३) च। वृषा शोण (सा० ८०६-८) इति पार्थमन्त्यम् (ऊ० ७. १. ६)। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० ३. १. ३) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९)श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती वो (सा० ६९७-९) इति श्यावाश्वान्धीगवे (ऊ० १. १. ११-२)। सूर्यवतीषु कावमन्त्यम् (ऊ० ९. २. ११)। सफश्रुध्य-श्यावाश्वान्येकर्चेषु। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। साकमश्वप्रभृति ज्योतिष्टोमवत्। आहीनिकी रात्रिः। सर्वः पञ्चदशी। षोडशी षोडशः पञ्चदशो वा। संधेस्तु पञ्चदश-पूरणार्थमावापोऽभ्यासो वा कार्यः। तदुक्तम्—अथोक्तिस्संधावावापो-ऽभ्यासो वे-(ला० श्रौ० ९. ७. ११-२)ति। तत्राभ्यासपक्षे पञ्चभ्यो हिंकरोतीति विष्टुतिः ॥ १-३ ॥

इति पञ्चदशोऽतिरात्रः ॥ ६ ॥

---

## सप्तदशोऽतिरात्रः

तृतीयमेकस्तोममाह—

तीव्रसुत आज्यबहिष्पवमानम्। माध्यंदिनश्च ॥ १ ॥

समानमितरं प्रथमेनैकस्तोमेन ॥ २ ॥

---

10. V[2]CL. ज्योतिष्टोमात् for ज्योतिष्टोमवत्

12. L. अभ्यासः is corrected as प्रभ्यासः; A. अर्थोऽर्थः, My अथोक्तः, T. प्रथोक्तः for अथोक्तिः

इति। उपास्मै-दविद्युतत्या रुचा (सा० ६५१-६) एते असृग्रमिन्दवस् (सा० ८३०-२) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम्। अग्न-आ नो-मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। उच्चा
5 ते (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १.१.१) च। अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारमाद्यायाम् (ऊ० ४.२.७)। मैधातिथं (ऊ० ६.३.६) तिसृषु। यौधाजयमध्यास्यायाम् (ऊ० १.१.३)। औशन-(ऊ० १.१.४)मन्त्यम्। पृष्ठादिसंधिस्तोत्रान्तं ज्योतिष्टोमवत्। सर्वं सप्तदश-
10 स्तोममिति विशेषः। षोडशो वा। षोडशी आहीनिकी रात्रिः ॥ १-२ ॥

इति सप्तदशोऽतिरात्रः ॥ १० ॥

---

## एकविंशोऽतिरात्रः

चतुर्थमेकस्तोममाह—

15 प्रतीचीनस्तोमस्य बहिष्पवमानम्। अभितो गायत्री। ज्योतिष उत्तरस्य बृहती ॥ १ ॥

समानमितरं द्वितीयेनैकस्तोमेन ॥ २ ॥

इति। ज्योतिष उत्तरस्येति पक्षिण उत्तरस्येत्यर्थः। अत्रोत्तरस्येति
19 विशेषणेन साहस्राणां प्रथमस्य व्यावृत्तिः। पवस्व वाचो

---

6. C. एकस्याम्, L. आद्याः, V². आद्याम् for आद्यायाम्
10. LCV². षोडशे for षोडशो

पवस्वेन्दो (सा० ७७५-८०) दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम द्युमाँ असि-वृषा ह्यसि भानुना (सा० ७८१-६) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् । अग्निं दूतम्-मित्रं वयम्-इन्द्रमिद्गा (सा० ७६०-६) चतुर्ऋचम् । इन्द्रे अग्ने-(सा० ८००-२)त्याज्यानि । उच्चा ते ( सा० ६७२-४ ) 5
गायत्रं चामहीयवं (ऊ० १.१.१) सत्रासाहीयम् (ऊ० ८.२.१२)। पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६. २. २) च यौधाजयं ( ऊ० १. १. ३ ) चौशन-( ऊ० १.१.४ )मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० ३. १. ३) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । 10
स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १. १. ८) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ६)श्रुध्ये (ऊ० ९. १. २०)। पुरोजिती वो ( सा० ६९७-९ ) श्यावाश्वान्धीगवे (ऊ० १.१.११-२)। सूर्यवतीषु काव-(ऊ० ९.२.११)मन्त्यम् । यज्ञायज्ञीयादि संधिस्तोत्रान्तं ज्योतिष्टोमवत् । आहीनिकी रात्रिः । 15
सर्वमेकविंशम् । षोडशो वा षोडशी वेति विशेषः ॥ १-२ ॥
एकस्तोमेषु षोडशीनां स्तोमक्लृप्तिमाह—

षोडशः षोडशिनोऽनुब्राह्मणं वा ॥ ३ ॥

इति । अत्र सूत्रम्—अनुब्राह्मणं वेति । प्रकृत्यन्वयादेकविंशाह-स्तोमः । संधिकारादिप्रकृतिस्तोमान्वयादेकविंशः षोडशिन इति 20
पूर्वः पक्षः । अहस्तोमस्त्विवति सिद्धान्तः । ततश्चायं कल्पस्यार्थः एकस्तोमानां षोडशिनः षोडश स्तोमा वा स्युः । 22

---

17. My. षोडशिनां for षोडशीनाम्
18. MyBKA. Om. अनुब्राह्मणं वेति
20. BTA. एकविंशा अहस्तोमास्त्वधिकारादिति for एकविंशाहस्तोमः । संधिकारादि; LV²C. षोडशिना इति for षोडशिन इति

अपि वा तस्य तस्याह्नस्त्रिवृतातिरात्रेणेत्यादिना तेन ब्राह्मणेन यः स्तोमो विहितः स स्तोमः स्यादिति । तथा चैवोदाहृतम् इति त्रयोदशातिरात्र उक्तः ॥ ३ ॥

इति एकविंशोऽतिरात्रः ॥ ११ ॥

5 एकस्तोमाः समाप्ताः ॥

---

## द्विरात्रास्त्रयः

### अङ्गिरसद्विरात्रः

अथ द्विरात्रास्त्रयः। ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर् (तां० ब्रा० २०. ११) इत्यनुवाकेनाङ्गिरासद्विरात्र उक्तः। तस्य कल्पः—

10 ये व्युष्टिद्विरात्रस्याहनी ते आङ्गिरसद्विरात्रस्योत्तरादह्न ऋषभ-जराबोधीये उद्धरति। समन्तदैर्घश्रवसे अन्तराथर्वणम् (र० १. २. १२)। संहितादुत्तरं जराबोधीयम् (ऊ० १०. १. १८) । विशोविशीयस्य लोके श्रुध्यम् (ऊ० ६. १. २०) ॥ १ ॥

इति । प्रथमस्याह्नः उप-दवि-पवे-(सा० ६५१-६)ति बहिष्पवमानम् ।
15 अग्न-आ नो-मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ० १. १. १) च । पुनानः सो (सा० ६७५-६) रौरवयौधाजये (ऊ० १. १. २-३)। औशन-(ऊ० १.१.४)मन्त्यम्। रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.६) च
20 कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रं च हाविष्कृतं (ऊ० ११.२.७) च। अया
22 पवस्व देवयुः-पवते हर्यतो हरिर् (सा० ७७२-३) इत्येकर्चयोः

---

2. V²CL. तत्तत्स्तोमाः स्युः for स स्तोमः स्यात्
9. V²CBMyKAT, Om. तस्य कल्पः

सफ-( ऊ० १. २. १५ )पौष्कले ( ऊ० ६. २. २ )। पुरोजिती-( सा० ६९७-९ )त्यौदला-( ऊ० १०. १. ३ )न्धीगवे ( ऊ० १. १.१२)। काव (ऊ० १.१.१३)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। ज्योतिष्टोमस्तोमाः। दधिभक्षणान्तमहः ॥

द्वितीयस्याह्नः—पवस्व वाचो अग्रियः (सा० ७७५-७) एष देवो अमर्त्यः (ऊ० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) आ ते दक्षं मयोभुवम् (सा० ११३७-९) इति बहिष्पवमानम्। तेन सदसि स्तवनम्। अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्रे-(ला० श्रौ० २. २. १)ति वचनात्। प्राक् धिष्ण्य-विहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः। अग्निं दूतं वृणीमहे (सा० ७९०-२) इत्याज्यानि। अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं च हाविष्मतं (ऊ० ११.२.८) च। परीतो षि (सा० १३१३-५) इति समन्तमाद्यायाम् (ऊ० ९.१.३)। आथर्वण-( र० २.१.३ )दैर्घश्रवसे (ऊ० ५.२.४) तृचयोः। उत्सेधोऽध्यास्यायाम् (ऊ० १२.२.२०)। अयं सोम (सा० १४७१-३) इति पार्थ-(ऊ० ६. २. ५)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च वैखानसं (ऊ० ४.१.६) चेति पृष्ठानि। परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्र-संहित-(ऊ० ६.२.६) जराबोधीयानि (ऊ० १०.१.१८)। पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति सत्रासाहीय-(ऊ० ६.२.७)श्रुध्ये (ऊ० ६.१.२०)। अयं पूषे-(सा० ८१८-२०)ति निषेधः (ऊ० १३.१.२) श्यावाश्वं (ऊ० १२.२.१०) क्रौञ्चम् (ऊ० १५.१.१७)। धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्को-(र० ३.१.१०)ऽन्त्यः। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। साकमश्वं (ऊ० १.१.१५) सौभरं (ऊ० १.१.१६) नार्मेध-(ऊ० १.१.१७)मित्युक्थानि। गौरीवितं (ऊ० १.२.१७) षोडशिसाम। आहीनिकी रात्रिः संधिः ॥

4. LCV². ज्योतिष्टोमाः स्तोमाः, KAB. ज्योतिष्टोमस्तोमः for ज्योतिष्टोमस्तोमाः, My. Om. ज्योतिष्टोमस्तोमाः

अथ स्तोमाः—चतुर्विंशं बहिष्पवमानम् । पञ्चदशन्याज्यानि । सप्तदशो माध्यंदिनः पवमानः । एकविंशानि पृष्ठानि । त्रिणव आर्भवः । त्रयस्त्रिंशोऽग्निष्टोमः । प्रत्यवरोहीण्युक्थानि । त्रिणवं प्रथमम् । अथैकविंशम् । अथ सप्तदशम् । एकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत् संधिरिति ॥ १ ॥

इति आङ्गिरसद्विरात्रः ॥ १२ ॥

---

## चैत्ररथः

अथ यस्य ज्योतिरुक्थ्यः (तां० ब्रा० २०. १२) इत्यनुवाकेन चैत्ररथ उक्तः । तस्य कल्पः–

याङ्गिरसस्य द्विरात्रस्य पूर्वा सा चैत्ररथस्य । तस्यायुष उकुथानि ॥ १ ॥

पूर्वेति पूर्वस्याह्नः कलृप्तिरित्यर्थः । प्रमंहिष्ठीयं (ऊ० २.२.५) हारिवर्ण-(ऊ० २. २. ६)मुद्वंशीय-(ऊ० ६.१.८)मित्युकुथान्येकविंशानि ॥ १ ॥

[ इति पूर्वमहः ]

द्वितीयमहराह—

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) आ ते दक्षं मयो भुवम् (सा० ११३७-९) ॥ २ ॥

इति बहिष्पवमानम् ॥

श्रुध्यस्य लोके जराबोधीयम् (ऊ० १४. २. ११) । नार्मेधाद्रात्रिमुपयन्ति । अथ यदेव द्विदिवसस्योत्तममहस्तदेतत् ॥ ३ ॥

इति । पवस्व वाचो अग्रियः ( सा० ७७५-७ ) पवस्वेन्दो वृषा सुतः ( सा० ७७८-८० ) आ ते दक्षं मयो भुवम् ( सा० ११३७-६ ) इति बहिष्पवमानम् । अग्निं दूतं वृणीमहे (सा० ७६०-२) इत्याज्यानि । अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति गायत्रं च हाविष्मतं (ऊ० ११.२.८) च । परीतो षि (सा० १३१३-५) समन्तं प्रथमायाम् (ऊ० ६.१.३) । दैर्घश्रवसं (ऊ० ५.२.४) तिसृषु । ऐडमायास्यं (ऊ० ७.१.४) तिसृषु । त्रिणिधनमायस्यमध्यास्यायाम् (ऊ० ७.१.५) । अयं सोम (सा० १४७१-३ ) इति पार्थ-(ऊ० ६.२.५)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २.२.१३) च वैखानसं (ऊ० ४.१.६) चेति पृष्ठानि । यस्ते मद (सा० ८१५-७) इति गायत्र-संहिते ( ऊ० ११. २. ६ ) । पवस्वेन्द्रमच्छे-( सा० ६६२-६ )ति सत्रासाहीय-( ऊ० ६. २. ७ ) जराबोधीये ( ऊ० १४. १. ११ ) । अयं पूषे-( सा० ८१८-२० )ति श्यावाश्व-( ऊ० ११. २. १० )क्रौञ्चे (ऊ० १५. १. १७) । धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽन्त्यः (र० ४.३.१) । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४) । साकमश्वं (ऊ० १. १. १५) सौभरं (ऊ० १.१.१६) नार्मेध-(ऊ० १.१.१७)मित्युक्थानि । षोडशी नास्ति । नार्मेधाद्रात्रिमुपयन्तीति वचनात् । आहीनिकी रात्रिः संधिः । आयुरतिरात्र उत्तर-(तां० ब्रा० २०. १३. १)मिति ब्राह्मणादायूरात्रस्य स्तोमाः ॥ ३ ॥

इति चैत्ररथः ॥ १३ ॥

---

## कापिवनः

अथ यस्य पञ्चदशोऽग्निष्टोमः ( तां० ब्रा० २०. १३ ) इत्यनुवाकेन कापिवनद्विरात्र उक्तः । तस्य कल्पः—

---

7. V[2]CL. Om ऐडमायास्यं तिसृषु
8. L. after अध्यास्यायाम् ins. च उत्तरं च

ये चैत्ररथस्याहनी ते कापिवनस्य । त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहरायुरतिरात्र उत्तरम् ॥ १ ॥

इति । प्रथमस्याह्नः सर्वं चैत्ररथवत् । व्यत्यासेन त्रिवृत्पञ्चदशौ स्तोमौ । आर्भवेऽन्त्यवर्जमेकर्चाः । अग्निष्टोमसाम पञ्चदशमिति
5 तस्माद्विशेषः । उत्तरस्याह्नः सर्वं चैत्ररथवदेव ॥ १ ॥

इति कापिवनः ॥ १४ ॥

द्विरात्रास्त्रयः समाप्ताः ॥

---

## त्रिरात्राः षट्

### गर्गत्रिरात्रः—प्रथममहः

10 अथ त्रिरात्राः षट् । त्रिवृत्प्रातःसवनम् (तां० ब्रा० २०.१४) इत्यादिभिः पञ्चभिरनुवाकैः गर्गत्रिरात्र उक्तः । तस्य प्रथममहराह—

आभिप्लविकस्य प्रथमस्याह्नः आज्यबहिष्पवमानम् । माध्यंदिनश्च ॥१॥

इत्यादिना । उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते
15 वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । अग्न-आ नो-मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० ६.२.१२) च । प्र सोम देववीतय (सा० ७६७-८) इति पज्रं (ऊ० ६.२.१३) च यौधाजयं (ऊ० १.२.१३)
20 चौशन-(ऊ० १. १. ४)मन्त्यम् । यौधाजयमेकाक्षनिधनमहीनकाण्डे
21 पठितम् ॥ १ ॥

---

2. KMy. Om. अहरायुर् ... उत्तरस्याह्नः सर्वम्
3. V[2]CL. Om. व्यत्यासेन ; V[2]C. Om. त्रिवृत्
4. L. पञ्चदशं अग्निष्टोमसामेति, CV[2]T. अग्निष्टोमसामसद्, A. अग्निष्टोमसाम पञ्चदशाद्वितस्तोत्राद् for अग्निष्टोमसाम पञ्चदशमिति तस्माद्

रथन्तरं (र० १. १. १) स्वारं च सौपर्णम् (ऊ०१४.१.१६)। शग्ध्यूषु शचीपत (सा० १५७९-८०) इति अभीवर्तः (ऊ० ११. २. ६)। स्वासु कालेयम् (ऊ० १. १. ७) ॥ २ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठया (सा० ६८९-९१) इति गायत्रं  5
स्वाशिरां चार्कोऽ-(र० ३. १. २) या पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति सफा-(ऊ० १.२.१५) क्षारे (ऊ० १. २. १६)। प्र सुन्वानायान्धसः (सा० १३८६-८) इत्यौदलं (ऊ० ११. २. ३) चर्तनिधनमाज्य-
दोहम् (र० ३. २. ४)। अभि प्रियाणि (सा० ७००-२)  10
इति वैखानसम् (ऊ० १४. १. १८) अन्त्यम् ॥ ३ ॥

[ इत्यार्भवः पवमानः ]

माध्यंदिने सवने विहृतं होतुर्धिष्णीयमग्निं धारयित्वा तमाज्यदोहस्तवनकाले ज्वलयेयुः। तदुक्तं ब्राह्मणे— आज्य-
दोहानामग्निमुपनिधाय स्तुवत (Cp. तां०ब्रा० २१.२.९) इत्यादिना।  15
सफाक्षारे एकर्चे ॥ ३ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. ४) ॥ ४ ॥

त्रिवृत्प्रातःसवनम्। पञ्चदशं माध्यंदिनं सवनम्। सप्तदशं तृतीयं सवनम् ॥ ४ ॥

इति प्रथममहः ॥ १६ ॥  20

---

5. My. गायत्रं च स्वाशिरामर्कश्च, TKA. गायत्रं स्वाशिरामर्कः for गायत्रं स्वाशिरां चार्कः

13. MyBKA. धिष्ण्ये, T. धिष्ण्यं for धिष्णीयं, V[2]CT. Om. अग्नि

14. V[2]CTKAMyB. ब्राह्मणम् for ब्राह्मणे

## द्वितीयमहः

द्वितीयमहराह—

उपोषु जातमप्तुरम् (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) राजा-
5 मेधाभिरीयते (सा० ८३३-५) इषे पवस्व धारय (सा० ८४१-३) ॥ १ ॥

इति बहिष्पवमानम् ॥

कया ते अग्ने अङ्गिरः (सा० १५४६-५१) पुरूरुणा चिद्ध्यस्ति (सा० ९८५-७) तमिन्द्रं वाजयामसि (सा० १२२२-४)
10 इयं वामस्य मन्मनः (सा० ९१६-८) ॥ २ ॥

इत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ९. २. ३) चाभिसोमास आयवः (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र०
15 १.१.६) च दैर्घश्रवसं (ऊ० १४.२.५) च द्विहिंकारं (ऊ० १४.२.७) चायं सोम (सा० १४७१-३) इति निधनमाज्यदोहम् (र० ३. २. ५) अन्त्यम् ॥ ३ ॥

इति माध्यंदिनः पवमानः ॥

गौतमं प्रथमायाम्। प्र हिन्वान इति द्विहिंकारमध्यास्यायाम्।
20 प्रातःसवने विहृतस्य होतुर्धिष्ण्यस्य धारणम्। तस्याज्यदोहस्तवन-कालं प्रज्वलनम् ॥ ३ ॥

स्वासु वामदेव्यम् (सा० ६८२-४; ऊ० १. १. ५)। मोषु
23 त्वा वाघतश्च न (सा० १६७५-६) इति गायत्रपार्श्वम्

---

20. C. विहृतस्य, KATMyB. बिहितस्य for विहृतस्य

(ऊ० १४. २. ९)। अस्तावि मन्म पूर्व्यम् (सा० १६७७-८) इति संतनि (ऊ० १४. २. १०)। श्रयन्तीयस्पर्क्षु संकृति (सा० १३१९-२०; र० ३. २. ७) ॥ ४ ॥

इति पृष्ठानि ॥

सन्तनिन उत्तरयोः स्तोत्रीययोः आदावेव कुशाविधानम् । अप्रस्तावास्त्वादा-(द्रा०श्रौ० ५. २. ११)विति वचनात् ॥ ४ ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं चाग्नेश्चार्को-ऽ-(र० १. २. १)भि द्युम्नं बृहद्यशः (सा० १०११-९) सखाय आ निषीदत (सा० ११०७-९) इति वाचः साम (ऊ० १४. २. १४) शौक्तं (ऊ० १४. २. १५) च । पर्यूषु (सा० १३६४-६) इत्यान्धीगवम् (ऊ० ६. १. १९)। इन्द्राय साम पवते (सा० १६७९-८१) इति यज्ञायज्ञीयम् (ऊ० १४. २. २१)। पवित्रं त (सा० ८७५-७) इत्यरिष्टम (र० १. १. ८) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

विशोविशीयमग्निष्टोमसाम (ऊ० १५. १. २) ॥ ६ ॥

स्वास्त्वायुष उक्थानि ॥ ७ ॥

प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णम् (ऊ० २. २. ६) उद्वंशीय-(ऊ० ६.१.८)मित्युक्थानि । पञ्चदशं प्रातःसवनम् । सप्तदशं माध्यंदिनं सवनम् । एकविंशं तृतीयसवनं सोक्थम् ॥ ७ ॥

इति द्वितीयमहः ॥ १७ ॥

---

## तृतीयमहः

**तृतीयमहराह—**

पवस्व वाचो अग्रियः (सा० ७७५-७) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) ॥१॥

**इति वहिष्पवमानम् ॥ १ ॥**

होता देवो अमर्त्यो (सा० १४७७-६) मित्रं वयं हवामहे (सा० ७६३-५) महाँ इन्द्रो य ओजसा-(सा० १३०७-६) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२)॥ २॥

**इत्याज्यानि ॥**

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं च गौषूक्तं (ऊ० १२. १. २) च जराबोधीयं (ऊ० ११. १. १४) चर्षभश्च पावमानः (ऊ० १२. १. १)। प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम् (सा० १४६४-६) इत्युत्सेधः (ऊ० १३. २. ११)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इत्याभीषवम् (ऊ० ५. २. ६.) आथर्वणं (र० १. २. १२) पृश्नि (ऊ० १५. १. ६)। तिस्रो वाचः (सा० ८६६-७१) इति त्रिणिधनमाज्यदोहम् (र० ३.२.६) अन्त्यम् ॥ ३ ॥

**[ इति माध्यंदिनः पवमानः ॥ ]**

**पूर्ववदग्निमुपनिधायाज्यदोहस्तवनम् ॥ ३ ॥**

बृहच्च (र० १. १. ५) सत्रासाहीयं (ऊ० २. २. १२) च श्यैतं (ऊ० २. १. ३) च रौरवं (ऊ० १.१.२) च ।४॥

**इति पृष्ठानि ॥**

परि स्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रं च हाविष्मतं (ऊ० १५. १. ८) च। स सुन्वे यो वसूनाम्

(सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये (ऊ० १२. १. ५)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति निषेधश्च (ऊ० १३. १. २) श्यावाश्वं (सा० ११. २. १०) च क्रौञ्चं (ऊ० २. १. ९) च यज्ञायज्ञीयं (ऊ० १५. १. १३) च। परि प्र धन्व (सा० १३६७-९) इति वाजदावर्यो-(ऊ० १२. १. ७) या रुचा (सा० १५९०-२) इति नित्यवत्साः (र० ३. १. १२)। धर्ता दिव (सा० १२२८-३०) इति दीर्घनमसोऽर्कोऽ-(र० ३. १. १०)न्त्यः ॥ ४ ॥ 5

इत्यार्भवः पवमानः ।। 10

वारवन्तीयमग्निष्टोमसाम स्वासु (सा० १६३४-६; ऊ० १२. २. १७) ॥ ५ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ६ ॥

आहीनिकी रात्रिः। एकविंशं प्रातःसवनम्। त्रिणवं माध्यंदिनं सवनम्। त्रयस्त्रिंश आर्भवः। चतुस्त्रिंशोऽग्निष्टोमः। एकविंशान्युक्थानि सषोडशिकानि। षोडशं प्रथमं रात्रिषाम। पञ्चदशी रात्रिः। त्रिवृत्संधिरिति। स्तोमाश्चतुस्त्रिंशस्य विष्टुतिः। एकादशभ्यो हिंकरोति। स तिसृभिः स सप्तभिः स एकया। एकादशभ्यो हिंकरोति स एकया स तिसृभिः स सप्तभिः। द्वादशभ्यो हिंकरोति सोऽष्टाभिः स एकया स तिसृभिरिति। उक्तं च। दाशरात्रिकेभ्यः एकया ज्यायस्त्वित्यादि। पूर्वमहर्द्वयं दधिभक्षान्तम्। उत्तममहरुदवसानीयान्तम् ॥ 15 20

वाग्वै शबली-(तां० ब्रा० २१. ३)त्यनुवाकेन शबलीहोम उक्तः। स च सूत्रे व्याख्यातः। सहस्रपोषकामः शबलीहोमं कुर्वीते-(ला० श्रौ० ९. ८. १)त्यादिना ॥ ६ ॥ 25

इति तृतीयमहः ॥ १८ ॥

गर्गत्रिरात्रः समाप्तः ॥ 26

---

17. V²KAMyB. चतुर्विंशस्य for चतुस्त्रिंशस्य

## अश्वत्रिरात्रः

### प्रथममहः

चतुष्टोमोऽग्निष्टोम एकविंश उक्थ्यः सर्वस्तोमोऽतिरात्र (तां० ब्रा० २१. ४) इत्यनुवाकेनाश्वमेधत्रिरात्र उक्तः। राजा प्रतिज्ञोऽश्वमेधेन यजेत। ब्रह्मोदनभोजनकाले ब्रह्मोदनमुद्गाता भुञ्जीत। यजमानाच्च
5 सहस्रं प्रतिगृह्णीयात्। सावित्रेष्टिसंस्थासु संवत्सरमहरहर्होतरि पारिप्लवमाचक्षाणे हिरण्यकशिपुन्यासीत। संवत्सरादूर्ध्वम् अश्वं बध्वा यजमाने दीक्षिते तदासनं स्वीकुर्यात्। सर्वेषां चाह्नां चात्वाले बहिष्पवमानेन स्तुवीरन्। तत्र प्रथममहराह—

पवस्व वाजसातये (सा० १०१६-८) इति तिस्रोऽनुष्टुभश्चतस्रो
10 गायत्रीः करोति ॥ १ ॥

पञ्चयौधाजये अन्तरा गौङ्गवम् (ऊ० ६. २. १७)। औदलाज्यदोहे गौतमम् (ऊ० ११. २. १३) ॥ २ ॥

समानमितरं प्रथमेनाह्ना गर्गत्रिरात्रस्य ॥ ३ ॥

इति। पवस्व वाजसातयोम्। देवेभ्यो मधुमत्तरोम्। वत्सं जातं न
15 मातरोम्। पृथिवीं चातिजभ्रिषोम् (सा० १०१६-८) इति बहिष्पवमानम्। अग्न-आ नो-मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० ६.२.१२) च। प्र सोम देववीतय (सा० ७६७-८) इति पञ्चम् (ऊ० ६. २. १३) गौङ्गवं (ऊ० ६.२.१७) यौधाजय-(ऊ० १. २. १३)मिति
20 सामतृचः। औशन-(ऊ० १. १. ४)मन्त्यम्। त्रीन्यतरस्यां संभवेयु-(ला० श्रौ० ६. ३. १७)रिति वचनात्। बृहत्यामेकर्चकरणम्।
22 रथन्तरं (र० १. १. १) च स्वारं च सौपर्णम् (र० १४.

---

3. C. Om. प्रतिज्ञो; KAMyB. प्रातियो, AT. प्रतिघो for प्रतिज्ञो
6. BL. आचक्षाणो for आचक्षाणे
7. LBV²AT. यजमानो for यजमाने; C. Om. यजमाने
8. KATBMy. बहिष्पवमानैः, V²C. बहिष्पवमाने for बहिष्पवमानेन

१.१६) । शग्ध्यूषु शचीपत (सा० १५७९-८०) इत्यभीवर्तः (ऊ० ११. २. ६)। स्वासु कालेय-( ऊ० १. १. ७ )मिति पृष्ठानि । स्वादिष्ठय-(सा० ६८६-९१)ति गायत्रं च स्वाशिरामर्कः (ऊ० ३. १. २)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति एकर्चयोः सफाक्षारे ( ऊ० १. २. १५-६ ) 5
प्र सुन्वानायान्धस (सा० १३८६-८) इत्यौदलं (ऊ० ११. २. ३) गौतमं (ऊ० ११. २. १३) चर्तनिधनं चाज्यदोहम् (ऊ० ३.२.४)। अभि प्रियाणी-(सा० ७००-२)ति वैखानसमन्त्यम् (ऊ० १४.१.१८)। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । प्रथमचतुष्टोमवत् स्तोमक्लृप्तिः । विष्टुतयः चतुर्विंशस्य त्वेकस्मिन्नेव तृचे चत्वारः 10
षट्काः। पर्यायाद् द्विकविष्टावा इति विशेषः। अथैवं विष्टुतिः—
षड्भ्यो हिंकरोति स तिसृभिः स द्वाभ्यां स एकया । षड्भ्यो हिंकरोति स एकया स तिसृभिः स द्वाभ्याम् । षड्भ्यो हिंकरोति स द्वाभ्यां स द्वाभ्यां स द्वाभ्याम् । षड्भ्यो हिंकरोति स द्वाभ्यां स एकया स तिसृभिरिति । तदुक्तम्—उपोत्तमो 15
वा द्विकविष्टावोऽश्वमेधेऽष्टादशादितरे (ला० श्रौ० ६. ८. १३) इति । पञ्चदशपर्यायौ पूर्वावेकविंशस्योत्तराविति वा पर्यायक्लृप्तिः । अश्वमेधेनावभृथत्वमह्नां केचिदध्वर्यव आमनन्ति । तत्र सूत्रम्—
अश्वत्रिरात्रे नानावभृथान्यहानि । तेषां प्रथमस्य सनादग्न इत्यवभृथसाम । यद्वा उ विश्पतिरिति द्वितीयस्य । त्यग्नाऽऽरिति वे-(ला० श्रौ० २. १२. 20
६-८)ति । इतरथा दधिभक्षणान्तं द्वयम् । तस्मिन् पक्षे अहीनन्यायेन बहिष्पवमानेन स्तवनम् ॥ ३ ॥

इति प्रथममहः ॥ १९ ॥ 23

---

9. T. before प्रथम° ins. प्रथमे ; BMyKAT. Om. °वत्
16. CKAB. Om. इति
17. KATB Om. वा ; C. एवं for इति वा

## द्वितीयमहः

द्वितीयमहराह—

उपास्मै गायता नरः (सा० ६५१-३) उपोषु जातमप्तुरं (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजामेधाभिरीयते (सा० ८३३-५)
5 वृषा सोम द्युमाँ असि (सा० ७८१-३) इषे पवस्व धारय (सा० ८४१-३) ॥ १ ॥

इति बहिष्पवमानम् ॥

अभि सोमास आयव (सा० ८५६-८) इति गौतमम्
10 (ऊ० २. १. १५) अन्तरिक्षं (र० १. १. ६) दैर्घश्रवसम् (ऊ० १४. १. ५)। त एकर्चाः। सन्तानि तिसृषु (ऊ० १४. २. ७)। पौरुमद्गं (ऊ० २. १. १४) गायत्रपार्श्वं (ऊ० ६. २. ८) मैधातिथं (ऊ० ६. ३. ६) त एकर्चाः। द्विहिंकारं तिसृषु (ऊ० ४. २. ७)। महानाम्न्यश्च वामदेव्यं
15 (ऊ० १. १. ५) च पार्थुरश्मं च (र० ३. २. ८) श्रावन्तीयस्यर्क्षु संक्रति (सा० १३१९-७०; र० ३.२.७)॥ २ ॥

समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ॥ ३ ॥

इति। अस्मिन्नहनि अश्वस्य वालधिमालभ्य बहिष्पवमानं सर्पेयुः। अथवा अध्वर्युमेव पुच्छमालभते। तमितरे यथाकाममन्वालभेरन्।
20 सर्पत्सु उद्गातारं यजमानो ब्रूयात्। उद्गातरुप त्वा वृणे शतेन गवां निष्केण चाश्वो ममोद्गास्यतीति। अस्यार्थः। उद्गातस्त्वां विहायाश्वमुद्गातारं वृणे शतेन गवां निष्केण चालंकारेण। अश्वो
23 ममोद्गास्यतीति। अश्वमास्तावमाक्रमय्य वडवां दर्शयेयुः। तां

---

20. L. Om. उद्गातरुप ... उद्गातारं ब्रूयात् (p. 319, L. 1)
21. K. Om. उद्गातस्त्वां ... प्रतिपदम् (p. 319, L. 6)
22. C. अलंमकारेण for अलंकारेण

यदाश्वोऽभिक्रन्देत् । अथ यजमान उद्गातारं ब्रूयात् । उद्गातरुप त्वा वृणे शतेन चैव निष्केण च । त्वमेव ममोद्गास्यसीति । उद्गात्रे गवां शतं निष्कं च दद्यात् । उदञ्चमश्वमुत्क्रमय्य आस्तावे यो म आत्मेत्युपवेशानन्तरमुद्गाता अश्वव्रतेन स्तुयात् अभि वाजी विश्वरूप (सा० १८४३-५) इति तृचस्थेन । उत्तरयोरपि 5 स्तोत्रीययोर्हैंहोईत्यादि स्तोत्रं प्रतिपदमाहरेत् । अश्व स्त्रिष्टुबश्व इत्यृष्यादयः । भक्तिविभागेन प्रयोजनम् । एककर्तृकत्वात् ॥

अथ बहिष्पवमानेन स्तुवीरन् । उपास्मै गायता नर (सा० ६५१-२) इत्यादीषे पवस्व धारये-(सा० ८४१-३) त्यन्तं बहिष्पवमानम् । हिरण्यकशिपुन्यासीन उद्गाता बहिष्पवमानेन स्तुत्वा स एव 10 तद्धरेदजिनम् । एककर्तृत्वात् ॥

अथाभिमेधनम् । या पत्नीनां प्रियतमा यजमानस्येत्यादिना विहितम् । स्वाहाकृतिभिश्चरित इत्यादिना ब्रह्मोद्यवदनं च । ततो धिष्ण्योपस्थानादि कार्यम् । कया ते अग्ने अङ्गिरः (सा० १५४६-५१) पुरूरुणा चिद्धयस्ति (सा० ६८५-७) तमिन्द्रा वाजयामसि (सा० 15 १२२२-४) इयं वामस्य मन्मन (सा० ६१६-८) इत्याज्यानि । अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ६.२.३) च । अभि सोमास आयव (सा० ८५६-८) इति गौतम-(ऊ० २. १. १५)मन्तरिक्षं (ऊ० १. १. ६) दैर्घश्रवस-(ऊ० १४. २. ५)मिति सामतृचः । संतनि (ऊ० १४. २. १०) तिसृषु । 20 पौरुमद्ग-(ऊ० २.१.१४)गायत्रपार्श्व-(ऊ० ४. २. ८)मैधातिथ-(ऊ० ९.३.६)मिति सामतृचः । द्विर्हिंकारं (ऊ० १४.२.६) तिसृषु । 22

---

1. T. अभिक्रमते for अभिक्रन्देत्
3. V². इदं त्वम्, TA. इदम् for उदञ्चम्
9. बहिष्पवमानम् see आ०क० ६.२०.२
11. KAMyB. तद्धरते, C. तद्धरेत, LV². ततद्धरेः for तद्धरेदजिनम् । एककर्तृत्वात्

अयं सोम (सा० १४७१-३) इतीनिधनमाज्यदोहमन्त्यम् (र० ३. २. ५)। महानाम्न्यश्च। वामदेव्यं (ऊ० १. १. ५) च पार्थुरश्मं च श्रायन्तीयस्यर्क्षु (सा० १३१८-२०) संकृती-(र० ३. २. ७)ति पृष्ठानि। महानाम्नीनां शक्वरी छन्दः। पार्थुरश्मस्य पङ्क्तिः। यस्ते मद (सा० ८१५-७) इति गायत्रं चाग्नेश्चार्कः (र० १. २. १)। अभि द्युम्नं बृहद्यशः (सा० १०११-२) सखाय आ निषीदते-(सा० ११५७-९)ति वाचः साम (ऊ० १४. २. १४) शौक्तं (ऊ० १४. २. १५) च। पर्यूषु (सा० १३६४-६) इति आन्धीगवम् (ऊ० ६. १. १९)। इन्द्राय सोम पातवे (सा० १६७९-८१) इति यज्ञायज्ञीयम् (ऊ० १४. २. २१)। पवित्रं ते (सा० ८७५-७) इत्यरिष्ट-(र० १. १. ८)मन्त्यम्। त्वासु विशो-विशीयमग्निष्टोमसाम (ऊ० १५. १. २)। प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णम् (ऊ० २. २. ६) उद्वंशीय-(ऊ० ६. १. ८) मित्युक्थानि। सर्वमेकविंशम् ॥ ३ ॥

इति द्वितीयमहः ॥ २० ॥

---

## तृतीयमहः

तृतीयमहराह—

पवस्व वाचो अग्रिय (सा० १०१६-८) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) पवमानस्य तं कत्रे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

गायत्रादुत्तरे चत्वार एकर्च्चाः। उत्तमं च बार्हतम्। अनुष्टुभि त्रय एकर्च्चाः। उत्तमं तृचे ॥ २ ॥

समानमितरं उत्तमेनाह्ना गर्गत्रिरात्रस्य ॥ ३ ॥

इति। होता देवो अमर्त्यो (सा० १४७७-९) मित्रं वयं हवामहे (सा० ७९३-५) महाँ इन्द्राय ओजसा (सा० १३०७-९) इन्द्रे अग्ना नमो बृहद् (सा० ८००-२) इत्याज्यानि ॥

उच्चा ते (सा० ६७२-४) इति गायत्रं तिसृषु । गोषूक्तं (ऊ० १२. १. २) जराबोधीय-(ऊ० ६. १. १४)मृषभः पवमान (ऊ० १२. १. १) इति सामतृचः । प्रत्नं पीयूषम् (सा० १४६४ ६) इत्युत्सेध (ऊ० १३. २. ११) एकस्याम् । परीतो षिञ्चते-(सा० १३१३-५)ति आभीशवं (ऊ० ५. २. ६) तिसृषु । आथर्वणं 5
(र० १. २. १२) तिसृषु । पृश्नि (ऊ० ७. २. ३) एकस्याम् । तिस्रो वाच (सा० ८५६-६१) इति त्रिणिधनमाज्यदोह-(र० ३. २. ६)मन्त्यम् । बृहच्च (र० १. १. ५) सत्रासाहीयं (ऊ० २. २. १२) च श्यैतं (ऊ० २. १. ३) च रौरवं (ऊ० १. १. २) चेति पृष्ठानि । परिस्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रं 10
च हाविष्मतं (ऊ० १५. १. ८) च । स सुन्वेयो वसूनाम् (सा० १०६६-७) प्राणा शिशुमहीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये (ऊ० १२. १. ५) । अयं पूषा (सा० ८१८-२०) इति निषेधः (ऊ० १३.१.२) श्यावाश्वं (ऊ० ११.२.१०) क्रौञ्च-(ऊ० २. १. ६)मिति सामतृचः । यज्ञायज्ञीयं (ऊ० १५. १. १३) तिसृषु । 15
परि प्र धन्वे-(सा० १३६७-६)ति वाजदावर्यः (ऊ० १२.१.७) अया रुचे-(सा० १५६०-२)ति नित्यवत्साः (र० ३. १. १२) । धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्कोन्त्यः (र० ३. १. १०) । वारवन्तीयमग्निष्टोमसाम (सा० १६३४-६; ऊ० १२. २. १७) । साकमश्वं (ऊ० १. १. १५) सौभरं (ऊ० १.१.१६) 20
नार्मेध-(ऊ० १.११.७)मित्युक्थानि । गौरीवितं (ऊ० १.२.१८) षोडशिसाम । आहिनीकी रात्रिः संधिः । सर्वस्तोमोऽतिरात्रवत् 22

---

1. C. Om. गोषूक्तं ... आथर्वणं तिसृषु (L. 6)
3. V². Om. इति सामतृचः
4. L. एकर्चे, V². चन्दा(त्वा?)र एकर्चाः for एकस्याम्
5. LV². आभीशवाथर्वणे तृचे for आभीशवं तिसृषु आथर्वणं तिसृषु ; My. आमहीयवं for आभीशवं and Om. आथर्वणं तिसृषु

स्तोमाः । त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि । सप्तदशो माध्यंदिनः पवमानः । एकविंशानि पृष्ठानि । त्रिणव आर्भवः । त्रयस्त्रिंशोऽग्निष्टोमः । प्रत्यवरोहीण्युक्थानि । त्रिणवं प्रथमम् । द्वे एकविंशे सषोडशिके । पञ्चदशी रात्रिः । त्रिवृत्संधिरिति । अहात्रो हावा इत्यवभृथसाम । अश्वमेधविकल्पाः सूत्रत एवावधार्याः ॥ ३ ॥

इति तृतीयमहः ॥ २१ ॥

अश्वत्रिरात्रः समाप्तः ॥

---

## वैदत्रिरात्रः

त्रयस्त्रिवृतोऽतिरात्राः सर्वे षोडशिमन्तः ( तां० ब्रा० २१-५ ) इत्यनुवाकेन वैदत्रिरात्र उक्तः । आद्यन्तयोरह्नोश्चात्वाले मध्यमस्य बहिष्पवमानस्तवनम् । अथवा प्रथमस्य चात्वाले परयोः सदस्येव । तदुक्तम्---वैदत्रिरात्रे सत्रं न्यायं गौतमोऽहीनं न्यायं धानंजय्य (ला० श्रौ० २२. ४-५) इति ॥

### प्रथममहः

तत्र प्रथमस्याह्नः कल्पः---

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रमेकस्याम् । आश्वमेकस्याम् ( ऊ० १. २. २१ ) । जराबोधीयमेकस्याम् (ऊ० १४. १. १२) । प्र सोम देववीतये (सा० ७६७-८) इति गौङ्गवमेकस्याम् ( ऊ० ६. २. १७ ) । पञ्चमेकस्याम् (ऊ० ६. २. १३) । यौधाजयमेकस्याम् ( ऊ० १. २. ३ ) । औशनम् ( ऊ० ५. १. ११ ) औपगवम् ( ऊ० ४.१.१८ )

---

12. MyBKAT. सत्र for सत्रं ; MyBKAT. अहीन for अहीनं

आष्टादंष्ट्रम् ( ऊ० ७. १. ११ ) । प्रत्यस्मै पिपीषते (सा० १४४०-२) इति नानदं षोडशिसाम (ऊ० १०.१.१) ॥ १ ॥

रात्रिः संधिः । समानमितरं प्रथमेनाह्ना गर्गत्रिरात्रस्य ॥ २ ॥

इति । उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते वयम् (सा० ७८७-६) पवमानस्य ते कवे (सा० ५५७-६) इति बहिष्पवमानम् । 5
अग्न आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ )त्याज्यानि ।
प्र सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रम् आश्वं (ऊ० ६. २. १२) जराबोधीय-(ऊ० १४.१.१२)मिति सामतृचः ।
प्र सोम देववीतये (सा० ७६७-८) इति गौङ्गवं (ऊ० ६.२.१२)
पज्रं ( ऊ० ६. २. १३ ) यौधाजय-( ऊ० १. २. १३ )मिति 10
सामतृचः । औशन-(ऊ० १. १. ५)मन्त्यम् । रथन्तरं (र० १.१.१)
च स्वारं च सौपर्णम् (ऊ० १४. १. १६) । शग्ध्यूषु शचीपत
(सा० १५७६-८०) इत्यभीवर्तः ( ऊ० ११. २. ६ ) । स्वासु
कालेय-(ऊ० १.१.७)मिति पृष्ठानि । स्वादिष्ठये-(सा० ६८६-९१)ति
गायत्रं च स्वाशिरामर्कः (र० ३. १. २) । अया पवस्व देवयुः 15
पवते हर्यतो हरि-(सा० ७७२-३)रिति सफाक्षारे (ऊ० १.२.१५-६) ।
प्र सुन्वानायान्धस (सा० १३८६-८) इति औदलं (ऊ० ११.२.३)
चर्तनिधनं चाज्यदोहम् ( र० ३. २. ४ ) । अभि प्रियाणि (सा० ७००-२) इति वैखानस-( ऊ० १४. १. १८ )मन्त्यं तिसृषु ।
इतराण्याद्यासु यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । प्रेष्ठं व 20
(सा० १२४४-६) इत्यौशनम् ( ऊ० ५. १. ११ ) । त्वं न
इन्द्रे-(११६९-७१)त्यौपगवम् (ऊ० ४. १. १८) । इन्द्रं विश्वे-
(सा० ८२७-९)त्याष्टादंष्ट्रयोरुत्तर-( ऊ० ७. १. ११ )मित्युक्थानि ।
उत्तरमभिप्लववैदत्रिरात्रयो-( उ० ग्र० सू० ४. ४ )रित्युपग्रन्थवचनात् 24

---

22. MyBKATCV[2]. Om. इन्द्रं विश्वेति

23. MyBKAT. इतरम् for उत्तरम्

उत्तरमित्युक्तम् । प्रत्यस्मै पिपीषत (सा० १४४०-२) इति नानदं (ऊ० १०. १. १) षोडशिसाम । रात्रिराहीनिकी । सर्वं त्रिवृत् ॥२॥

इति प्रथममहः ॥ २२ ॥

---

## द्वितीयमहः

5 द्वितीयस्याह्नः—

उपोषु जातमप्तुरम् (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) इषे पवस्व धारया (सा० ८४१-३) ॥

इति बहिष्पवमानम् ॥

पर्यूषु (सा० १३६४-६) इति श्यावाश्वम् (ऊ० ६. १. १८) । 10 इन्द्राय सोमपातव (सा० १०२५-७) इति आन्धीगवम् (ऊ० १२. २. ३)। पवित्रं त (सा० ८७५-७) इति यज्ञायज्ञीयमन्त्यम् (ऊ० १५. १. १) । उद्वंशीयस्य लोके तैरश्च्यम् (ऊ० २. २. ७) । उद्वंशीयं (ऊ० ६.१.८) षोडशिसाम रात्रिः संधिः ॥ १ ॥

15 समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ॥ २ ॥

इति । उपोषु जातमप्तुरं (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम् । कया ते अग्ने अङ्गिरः (सा० १५४६-५१) पुरूरुणा चिद्ध्यस्ति (सा० ९८५-७) तमिन्द्रं वाजयामसि (सा० १२२२-४) इयं वामस्य 20 मन्मनः (सा० ९१६-८) इत्याज्यानि । अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ९. २. ३) च । अभि सोमास आयवः (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च दैर्घश्रवसं (ऊ० १४. २. ५) च द्विहिंकारं (ऊ० १४. २. ६) च । अयं सोम (सा० १४७१-३) इती- 25 निधनमाज्यदोह-(र० ३. २. ५)मन्त्यम् । अन्त्यवर्जमेकर्चाः । तत्र

15. P. द्वितीयेन for मध्यमेन

गौतमान्तरिक्षदैर्घश्रवसानि सामतृचः । द्विहिंकारमध्यास्यायाम् । अध्यास्यायां चेत्यधिकृत्य । चतुरो नानास्तोत्रीयास्वि-( ला० श्रौ० ६. ३. २३)ति वचनात् । स्वासु वामदेव्यम् (सा० ६८२-४ ; ऊ० १. १. ५) । मोषु त्वा वाघतश्चन (सा० १६७५-६) इति गायत्रपार्श्वम् (ऊ० १४. २. ६) । अस्तावि मन्म पूर्व्यम् (सा० १६७७-८) इति संतनि (ऊ० १४. २. १०) । आयन्तीयस्यर्क्षु ( सा० १३१८-२० ) संकृती-(र० ३. २. ७)ति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं चाग्नेश्चार्कः (र० १. २. १)। अभि द्युम्न (सा० १०११-२) सखाय आ निषीदते-(सा० ११५७-९)ति वाचःसाम (ऊ० १४. २. १४)। शौक्तं (१४. २. १५) च। पर्यूष्वि-(सा० १३६४-६)ति आन्धीगवम् (ऊ० ६. १. १९) । इन्द्राय सोम पातवे ( सा० १६७९-८१ ) इति यज्ञायज्ञीयम् (ऊ० १४. २. २१)। पवित्रं त ( सा० ८७५-७ ) इति अरिष्ट-(र० १. १. ८)मन्त्यम् । अन्त्यवर्जमेकर्चाः । स्वासु विशोविशीय-(ऊ० १५. १. २)मग्निष्टोमसाम । प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-( ऊ० २. २. ७ ) मित्युक्थानि । उद्वंशीयं (ऊ० ६.१.८) षोडशिसाम । रात्रिराहीनिकी संधिः । सर्वं त्रिवृत् ॥ २ ॥

इति द्वितीयमहः ॥ २३ ॥

---

## तृतीयमहः

तृतीयस्याह्नः—

पवस्व वाचो अग्रियः ( सा० ७५५-७ ) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) आ ते दक्षं मयोभुवम् (सा० ११३७-९) ॥१॥

इति बहिष्पवमानम् ॥

उद्धरति ऽ.राबोधीयं स्तोबृहती द्विपदातिच्छन्दसश्च ॥ २ ॥

प्रतिलोमं बार्हतानि ॥ ३ ॥

अयं पूषा रयिर्भग (सा० ८१८-१०) इति दीर्घतमसोऽर्कः (र० ३. २. ११)। क्रौञ्चं (ऊ० २. १. ६) च। धर्ता
5 दिवः (सा० १२२८-३०) इति यज्ञायज्ञीयम् (ऊ० १५.१.१५) अन्त्यम् ॥ ४ ॥

समानमितरमुत्तमेनाह्ना गर्गत्रिरात्रस्य ॥ ५ ॥

इति। पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) आ ते दक्षं मयोभुवम् (सा० ११३७-६)
10 इति बहिष्पवमानम्। होता देवो अमर्त्यो-(सा० १४७७-६) मित्रं वयं हवामहे (सा० ७६३-५) महा इन्द्रो य ओजसा (सा० १३०७-६) इन्द्रे अग्ना नमो बृहदि-(सा० ८००-२)त्याज्यानि। उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं च गौषूक्तं (ऊ० १२. १. २) च ऋषभः पवमानः (ऊ० १२. १. १)। परीतो
15 षिञ्चता सुतम् (सा० १३१३-५) इति पृश्नि (ऊ० १५. १. ६) आथर्वण-(र० १. २. १२)माभीशवम् (ऊ० ५. २. ६)। तिस्रो वाच (सा० ८५९-६१) इति त्रिणिधनमाज्यदोह-(र० ३.२.६) मन्त्यम्। अन्त्यव्यतिरिक्ता एकर्चाः। तत्र गायत्री बृहत्यौ सामतृचौ। बृहच्च (र० १. १. ५) सत्रासाहीयं (ऊ० २.२.१२)
20 च श्यैतं (ऊ० २. १. ३) च रौरवं (ऊ० १. १. २) चेति पृष्ठानि। परिस्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्र-हाविष्मते (ऊ० १५. १. ८)। स सुन्वे यो वसूनाम् (सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये (ऊ० १२. १. ५)। अयं पूषा रयिर्भग
25 (सा० ८१८-१०) इति दीर्घतीमसोऽर्कः (र० ४. ३. ८) क्रौञ्चं

3. LV²CP. °तमसश्चार्कः for °तमसोऽर्कः

(ऊ० १५.१.१७) च। धर्ता दिवः (सा० १२२८-३०) इति यज्ञायज्ञीय-(ऊ० १५.१.१५)मन्त्यम् । अन्त्यमेव तृचे । वारवन्तीय-(ऊ० ३.२.८ मग्निष्टोमसाम । साकमश्वं (ऊ० १.१.१५) सौभरं ( ऊ० १.१.१६ ) नार्मेध-(ऊ० १.१.१७)मित्युक्थानि । गौरीवितं (ऊ० १.२.१८) षोडशिसाम । रात्रिः संधिः । सर्वं त्रिवृत् । प्रथमं रात्रिषाम । 5
षोडशं वा । तत् बैदोत्तमेऽप्याचार्या इति वचनात् ॥ ५ ॥

इति तृतीयमहः ॥ २४ ॥

बैदत्रिरात्रः समाप्तः ॥

---

## छन्दोमपवमानत्रिरात्रः

### प्रथममहः 10

चतुर्विंशाः पवमानाः (तां० ब्रा० २१. ६) इत्यनुवाकेन छन्दोम-पवमान उक्तः । तस्य प्रथमस्याह्नः कल्पः—

सांवत्सरिकस्य विषुवतो बहिष्पवमानम् । उभौ पर्यासौ । अश्वादुत्तरे । सोमसाम च ( ऊ० १४. १. १३ ) रोहितकूलीयं (ऊ० १४. १. १४) च । पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति 15
सफा-(ऊ० १. १. ९) क्षारे (ऊ० १४. १. १७) ॥ १ ॥

समानमितरं प्रथमेनाह्नाश्वत्रिरात्रस्य ॥ २ ॥

इति । सांवत्सरिकस्येति विषुवदतिरात्रव्यावृत्त्यर्थम् । उपास्मै गायता नरः (सा० ६५१-३) बभ्रवे नु स्वतवसे ( सा० १४४४-९ ) प्र स्वानासो रथा इव ( सा० १४१९-२७ ) पवमानस्य ते वयम् 20
( सा० ७८७-९ ) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् । अग्न आ याहि वीतय ( सा० ६६०-७१ ) इत्याज्यानि । प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं 23

---

2. C. तृचम् for तृचे

चाश्वं (ऊ० ६.२.१२) च सोमसाम (ऊ० १४.१.१३) च रोहितकूलीयं (ऊ० १४.१.१४) च। प्र सोम देववीतय (सा० ७६७-८) इति पञ्चं (ऊ० ६.२.१३) च गौङ्गवं (ऊ० ६.२.१७) च यौधाजयं (ऊ० १.२.१३) चौशन-(ऊ० १.१.४)मन्त्यम्। रथन्तरं
5 (र० १. १. १) च स्वारं च सौपर्णम् (र० १४. १. १६) शाग्ध्यूषित्र-(र० ११. २. ६)त्यभीवर्तः (र० ११. २. ६)। स्वासु कालेय-(र० १. १. ७)मिति पृष्ठानि। स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रं च स्वाशिरामर्कः (र०३.१.२)। पवस्वेन्द्रमच्छे-(सा०६९२-६)ति सफा-(ऊ० १.१.९)क्षारे (ऊ० १४.१.१७)। प्र सुन्वानायान्धसः
10 (सा० १३८६-८) इति औदलं (ऊ० ११.२.२) च गौतमं (ऊ० ११.२.१३) चर्तनिधनमाज्यदोहम् (र० ३.२.४)। अभि प्रियाणी-(सा० ७००-२)ति वैखानस-(ऊ० १४.१.१८)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १.१.१४)मग्निष्टोमसाम। चतुर्विंशाः पवमानाः। त्रिवृन्त्याज्यानि। पञ्चदशानि पृष्ठानि। सप्तदशोऽग्निष्टोमः। नात्र स्तोमानां
15 चतुष्पर्यायत्वम् ॥ २ ॥

इति प्रथममहः ॥ २५ ॥

---

## द्वितीयमहः

द्वितीयस्याह्नः—

वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना
20 (सा० ७८४-६) एते सोमा अभि प्रियम् (सा० ११७८-८६)
22 सोमः पुनानो अर्षति (सा० ११८७-९५) उत्ते शुष्मास

---

4. LV²C. योधाजयमोशनम् for योधाजयं चौशनम्
14. TBMyKA. मरुत्, V². मात्र, C. मत्र for नात्र

ईरते ( सा० १२०५-६ ) इति पुरस्तात् पर्यासस्याहरति ।
आमहीयवादुत्तराण्याशु भार्गवप्रभृतीनि षट् ( ऊ० १४. १. १६-
२० ; १४. २. १-४ ) । द्विहिंकारादुत्तराण्यच्छिद्रं च (ऊ०
४. २. १२) मैधातिथं ( ऊ० ६. ३. ६ ) च पौरुहन्मनम्
( ऊ० १४. २. ८ ) । अग्नेश्चार्कादुत्तराणि सुरूपप्रभृतीनि 5
चत्वारि । यज्ञायज्ञीयात् पूर्वाण्यासितं ( ऊ० १४. २. १६ ) च
कौत्सं च ( १४. २. १७ ) शुद्धाशुद्धीयं च ( ऊ० १४.
२. १८ ) क्रौञ्चं च ( ऊ० १४. २. १६ ) रयिष्ठम्
( ऊ० १४. २. २० ) ॥ १ ॥

समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ॥ २ ॥ 10

इति । उपोषु जातमप्तुरम् ( सा० १३३५-७ ) दविद्युतत्या रुचा
(सा० ६५४-६) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) राजा मेधाभिरीयते
(सा० ८३३-५) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा-
ह्यसि भानुना ( सा० ७८४-६ ) एते सोमा अभि प्रियम् (सा०
११७८-८६ ) सोमः पुनानो अर्षति ( सा० ११८७-६५ ) उत्ते 15
शुष्मास ईरते (सा० १२०५-६) इषे पवस्व धारये-(सा० ८४१-३)ति
**बहिष्पवमानम्** । कया ते अग्ने अङ्गिरः ( सा० १५४६-५१ )
पुरूरुणा चिद्धयस्ति ( सा० ६८५-७ ) तमिन्द्रं वाजयामसि (सा०
१२२२-४) इयं वामस्य मन्मनः ( सा० ८१६-८ ) इत्याज्यानि ।
अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं ( ऊ० ६.२.३ ) 20
चाशुभार्गवं (ऊ० १४. १. १६) च मार्गीयवं (ऊ० १४.१.२०) च
सौमित्रं (ऊ० १४.२.१) चैटतं (ऊ० १४. २. २) च साकमश्वं
(ऊ० १४.२.३) च विलम्बसौपर्णं (ऊ० १४.२.४) च । अभि 23

---

1. LCV[2]. आहरन्ति for आहरति
2. V[2]CMyBKAT. Om. भार्गव

सोमास आयव (सा० ८५६-८) इति गौतमं चान्तरिक्षं (र० १.१.६) च दैर्घश्रवसं च। द्विहिंकारं (ऊ० ४.२.७) चाच्छिन्द्रं (ऊ० ४.२.१२) च मैधातिथं (ऊ० ६.३.६) च पौरुहन्मनं (ऊ० ४.२.९) च। अयं सोम (सा० १४७१-३) इति ईनिधनमाज्यदोह-(र० ४.१.२)मन्त्यम्। गौतममाद्यायाम्। पौरुहन्मनमध्यास्यायाम्। स्वासु (सा० ६८२-४) वामदेव्यम् (ऊ० १.१.५)। मोषु त्वा वाघतश्चने-(सा० १६७५-६)ति गायत्रपार्श्वम् (ऊ० १४.२.९)। अस्तावि मन्म पूर्व्यम् (सा० १६७७-८) इति सन्तनि (ऊ० १४.२.१०)। श्रायन्तीयस्यर्क्षु (सा० १३१९-२०) संकृती-(र० ४.१.४)ति पृष्ठानि। यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं चाग्नेश्चार्कः (र० १.३.१) सुरूपं च भासं (ऊ० १४.२.११-१२) च काक्षीवतं (ऊ० १२.२.६) च गायत्रीसामासितं (ऊ० १४.२.१३) च। अभिद्युम्नं बृहद्यशः (सा० १०११-२) सखाय आ निषीदत (सा० ११५७-६) इति वाचःसाम शौक्तं (ऊ० १४.२.१४-५) चैकर्चयोः। पर्यूष्विप्र-(सा० १३६४-६)त्यान्धीगवम् (ऊ० ६.१.१६)। इन्द्राय सोम पातवे (सा० १६७६-३१) इति आसितं (ऊ० १४.२.१६) च कौत्सं (ऊ० १४.२.१७) च शुद्धाशुद्धीयं (ऊ० १४.२.१८) च क्रौञ्चं (ऊ० १४.२.१६) च रयिष्ठं (ऊ० १४.२.२०) च यज्ञायज्ञीयं (ऊ० १४.२.२१) च। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम्। स्वासु विशोविशीय-(ऊ० १५.१.२)मग्निष्टोमसाम। प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्ण-(ऊ० २.२.६)मुद्वंशीय-(ऊ० ६.१.८)मित्युक्थानि। चत्वारिंशाः पवमानाः। पञ्चदशान्याज्यानि। सप्तदशानि पृष्ठानि। एकविंशोऽग्निष्टोमः सोक्थः इति स्तोमाः॥ २॥

इति द्वितीयमहः॥ २६॥

## तृतीयमहः

तृतीयस्याह्नः कल्पः—

अष्टर्चादु-( सा० १२६६-७३ )त्तरान्नवमादह्नश्चतुरः षड्टचा-(सा० १२७४-६७ )नुपहरति । आ ते दक्षं मयोभुवम् ( सा० ११३७-६) इति पर्यासः । ऋषभात् पवमानादुत्तराणि सुरूपं 5 (ऊ० १५. १. ३) चादारसृच्चे-( ऊ० १५. १. ४ )डानां च संक्षारः ( ऊ० १५. १. ५ )। स्वारं च सैन्धुक्षितम् (ऊ० १२. २. ७ )। पृश्निन उत्तराण्यर्कपुष्पम् (ऊ० ५. २. ३) कौल्मलबर्हिषम् (ऊ० ५. २. २) देवस्थानम् (र० ३. २. १२)। हाविष्मतादुत्तराणि शाम्मद-( ऊ० १५. १. ९-१२ )प्रभृतीनि 10 चत्वारि । यज्ञायज्ञीयादुत्तरं यद्वाहिष्ठीयम् (ऊ० १५.१.१४) ॥१॥

समानमितरमुत्तमेनाह्ना गर्गत्रिरात्रस्य ॥ २ ॥

इति । पवस्व वाचो अग्रियः (सा० ७७५-७) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) एष उ स्य वृषा रथः ( सा० १२७४-९ ) एष वाजी हितो नृभिः 15 (सा० १२८०-५) एष कविरभिष्टुतः (सा० १२८६-९१) स सुतः पीतये वृषा ( सा० १२९२-७ ) आ ते दक्षं मयोभुवम् (सा० ११३७-६) इति बहिष्पवमानम् ॥

होता देवो अमर्त्यो ( सा० १४७७-९ ) मित्रं वयं हवामहे ( सा० ७९३-५ ) महाँ इन्द्रो य ओजसा ( सा० १३०७-९ ) 20 इन्द्रे अग्ना नमो बृहदि-(सा० ८००-२)त्याज्यानि ॥

उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं च गौषूक्तं (ऊ० १२. १. २) च जराबोधीयं (ऊ० ११.१.१४) च ऋषभश्च पवमानः (ऊ० १२. १. १) सुरूपं (ऊ० १५.१.३) 24

---

2, LV²C. क्लृप्तिः for कल्पः

चादारसृ-(ऊ० १५.१.४)च्चेडानां संक्षारं (ऊ० १५.१.५) च सैन्धुक्षितम् (ऊ० १२.२.७) । प्रत्नं पीयूष-( सा० १४६४-६ ) मित्युत्सेधः (ऊ० १३. २. ११) । परीतो षिञ्चता सुत-( सा० १३१३-५ )मिति आभीशवं ऊ० (५.२.६) चाथर्वणं (र० २. १. ३)
5 च पृश्नि (ऊ० १५.१.६)चार्कपुष्पं (ऊ० ५. २. ३) च कौल्मलबर्हिषं (ऊ० ५. २. २) च देवस्थानं ( र० १. ३. ३) च । तिस्रो वाच ( सा० ८६९-७१ ) इति त्रिणिधनमाज्यदोह-(र० ४. १. ३) मन्त्यम् ॥

बृहच्च ( र० १. १. ५ ) सत्रासाहीयं (ऊ० २.२.१२)
10 च श्यैतं (ऊ० २. १. ३) च रौरवं (ऊ० १. १. २)चेति पृष्ठानि ॥

परि स्वानो गिरिष्ठा ( सा० १०६३-५ ) इति गायत्रं च हाविष्मतं (ऊ० १५.१.८) च शाम्मदं ( ऊ० १५. १. ९ ) च दावसुनिधनं ( ऊ० १५. १. १० ) च प्रतीचीनेडं च काशीतं
15 ( ऊ० १५. १. ११ ) हाविष्कृतं ( ऊ० १५. १. १२ ) च । स सुन्वे यो वसूनाम् ( सा० १०९६-७ ) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३.२.१२)श्रुध्ये(ऊ० ९.१.१४) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति निषेधश्च (ऊ० १३.१.२) श्यावाश्वं (ऊ० ११. २. १०) च क्रौञ्चं (ऊ० १५.१.१७) च
20 यज्ञायज्ञीयं (ऊ० १५.१.१३) च । परि प्र धन्वे-(सा०१३६७-९)ति वाजदावर्यः (ऊ० १२.१.७) । अया रुचे-(सा० १५६०-२)ति नित्यवत्साः ( र० ३.२. २ ) । धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्को-(र० ३.१.१०)न्त्यः ॥

वारवन्तीयमग्निष्टोमसाम (ऊ० ३.२.८) । ज्योतिष्टोमोऽतिरात्रः
25 षोडशिमान् । अष्टाचत्वारिंशाः पवमानाः । एकविंशान्याज्यानि ।

6. V²C. Om देवस्थानम्
13. T. नार्मेधं for शाम्मदं

त्रिणवानि पृष्ठानि । त्रयस्त्रिंशोऽग्निष्टोमः । एकविंशान्युक्थानि सषोडशिकानि । पञ्चदशी रात्रिः त्रिवृत्संधिः ॥ २ ॥

इति तृतीयमहः ॥ २७ ॥

छन्दोमपवमानत्रिरात्रः समाप्तः ॥

---

## अन्तर्वसुत्रिरात्रः

### प्रथमोत्तमे अहनी

त्रिवृत्प्रातःसवनम् (तां० ब्रा० २१. ७) इत्यनुवाकेनान्तर्वसुत्रिरात्र उक्तः । तत्र कल्पः—

ये गर्गत्रिरात्रस्य प्रथमोत्तमे अहनी ते अन्तर्वसोः ॥ १ ॥

इति । उत्तमेऽहनि प्रथमं रात्रिषाम । पञ्चदशमेवेत्यहर्द्वयमुक्तम् ॥१॥

इति प्रथमोत्तमे अहनी ॥ २८ ॥

---

### द्वितीयमहः

मध्यममहराह—

उपोषु जातमप्तुरं (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) राजा-मेधाभिरीयते (सा० ८३३-५) एते असृग्रमिन्दवो (सा० ८३०-२) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) इषे पवस्व धारया (सा० ८४१-३) ॥ १ ॥

इति बहिष्पवमानम् ॥

अथ यदेव छन्दोमपवमानस्य मध्यममहस्तदेतत्। तस्य तृचक्लृप्त आर्भवः ॥ २ ॥

इति। आर्भवे वाचःसाम (ऊ० २.२.१) शौक्तं (ऊ० २.२.२) च। तत्रैकर्चौ। इह तृचावित्यर्थः। उपोषु जातमप्तुरमित्यादि इषे पवस्व धारयेत्यन्तं बहिष्पवमानम्। कया ते अग्ने अङ्गिरः (सा० ५१४१-६) पुरूरुणा चिद्ध्यस्ति (सा० ६८५-७) तमिन्द्रं वाजयामसि (सा० १२२२-४) इयं वामस्य मन्मनः (सा० ६१६-८) इत्याज्यानि। अस्य प्रत्नामनुद्युत-(सा० ७५५-७)मिति गायत्रं चामहीयवं (ऊ० ६. २. ३) चाशुभार्गवं (ऊ० १४.१.१९) मार्गीयवं (ऊ० १४.१.२०) च सौमित्रं (ऊ० १४.२.१) चैटतं (ऊ० १४.२.२) च साकमश्वं (ऊ० १४.२.३) च विलम्ब-सौपर्णं (ऊ० १४.२.४) च। अभि सोमास आयव (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च दैर्घश्रवसं (ऊ० १४. २. ५) च द्विर्हिंकारं (ऊ० ४. २. ७) चाच्छिद्रं (ऊ० ४. २. १२) च मैधातिथं (ऊ० ९. ३. ६) च पौरुहन्मनं (ऊ० ४.२.६) च। अयं सोम (सा० १४७१-३) इति ईनिधनमाज्यदोह-(र० ४. १. २)मन्त्यम्। गौतममाद्यायाम्। पौरुहन्मनमध्यास्यायाम्। स्वासु (सा० ६८२-४) वामदेव्यम् (ऊ० १. १. ५)। मोषु त्वे-(सा० १६७५-६)ति गायत्रपार्श्वम् (ऊ० १४. २. ६)। अस्तावि मन्म पूर्व्यम् (सा० १६२७-८) इति संतनि (ऊ० १४. २. १०)। श्रयन्तीयस्यर्क्षु (सा० १३१६-२०) संकृती-(र० ४. १. ४)ति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ७१५-७) इति गायत्रं चाग्नेश्चार्कः (र० १.३.१) सुरूपं (ऊ० १४.२.११) च भासं (ऊ० १४. १. १२) च काक्षीवतं (ऊ० १२.२.९) च गायत्री सामासितं (ऊ० १४.२.१३) च। अभि द्युम्नं बृहद्यशः (सा० १०११-२) सखाय आ निषीदते-(सा० ११५७-६)ति वाचःसाम (ऊ० १४. २. १४)

शौक्तं (ऊ० १४. २. १५) च। पर्यूषित्र(सा० १३६४-६)त्यान्धीगवम् (ऊ० ६. १. १६)। इन्द्राय सोम पातवे (सा० १६७९-८१) इत्यासितं (ऊ० १४.२.१६) च कौत्सं (ऊ० १४.२.१७) च शुद्धाशुद्धीयं (ऊ० १४.२.१८) च क्रौञ्चं (ऊ० १४.२.१९) च रयिष्ठं (ऊ० १४.१.२०) च यज्ञायज्ञीयं (ऊ० १४. २. २१) च। पवित्रं त (सा० ८५७-७) इत्यरिष्टमन्त्यम् (र० १.१.८)॥

स्वासु विशोविशीय (ऊ० १५. १. २)मग्निष्टोमसाम। प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्ण-(ऊ० २. २. ६)मुद्वंशीय-(ऊ० ६.१.८)मित्युक्थानि। चतुर्विंशं प्रातःसवनम्। चतुश्चत्वारिंशं माध्यंदिनं सवनम्। अष्टाचत्वारिंशं तृतीयं सवनम्। सोक्थमिति स्तोमाः ॥ २ ॥

इति मध्यममहः ॥ २९ ॥

उक्तं तृतीयमहः ॥

अन्तर्वसुत्रिरात्रः समाप्तः ॥

---

## पराकत्रिरात्रः

### प्रथममहः

त्रिवृत्प्रातःसवनम् (ता० ब्रा० २१. ८) इत्यनुवाकेन पराकत्रिरात्र उक्तः। तस्य प्रथमस्याह्नः क्लृप्तिमाह—

यान्तर्वसोः प्रथमा सा पराकस्य ॥ १ ॥

इति ॥ १ ॥

इति प्रथममहः ॥ ३० ॥

---

### द्वितीयमहः

अथ द्वितीयस्याह्नः—

वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) इति पुरस्तात्पर्यासस्याहरति। आमहीयवा-

दुत्तरे आशु च भार्गवं (ऊ० १४. १. १६) मार्गीयवं (ऊ० १४. १. २०) चाग्नेश्चार्कादुत्तरे सुरूप-(ऊ० १४. २. ११) भासे (ऊ० १४. २. १२)। यज्ञायज्ञीयात्पूर्वे आसित-(ऊ० १४. २. १६)कौत्से (ऊ० १४. २. १७) ॥ १ ॥

5 समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ॥ २ ॥

इति। उपोषु जातमप्तुरम् (सा० १३३५-७) दविद्युतत्या रुचा (सा० ६५४-६) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) राजा-मेधाभिरीयते (सा० ८३३-५) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना (सा० ७८४-६) इषे पवस्व धारये-10 (सा० ८४१-३)ति बहिष्पवमानम् ॥

कया ते अग्ने (सा० ११४६-५१) पुरूरुणा चिद्ध्यस्ति-(सा० ६८५-७) तमिन्द्रं वाजयामसि (सा० १२२२-४) इयं वामस्य मन्मनः (सा० ८१६-८) इत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं 15 (ऊ० ९. २. ३) चाशुभार्गवं (ऊ० १४.१.१६) च मार्गीयवं (ऊ० १४.१.२०) च। अभि सोमास आयव (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च दैर्घश्रवसं (ऊ० १४. २. ५) च द्विहिंकारं (ऊ० १४. २. ६) च। अयं सोम (सा० १४७१-३) इति ईनिधनमाज्यदोह-20 (र० ४. १. २)मन्त्यम् ॥

स्वासु (सा० ६८२-४) वामदेव्यम् (ऊ० १. १. ५)। मोषु वाघतश्चने-(सा० १६७५-६)ति गायत्रपार्श्वम् (ऊ० १४. २. ६)। अस्तावि मन्म पूर्व्यम् (सा० १६७७-८) इति सन्तनि 24 (ऊ० १४. २. १०)। आयन्तीयस्यर्क्षु (सा० १३१९-२०)

17. LCV². अरिष्टं for अन्तरिक्षं ;
18. V²C. Om. द्विहिंकारं च

संक्रुती-(र० ४. १. ४)ति पृष्ठानि । यस्ते मदो वरेण्यः (सा० ८१६-७) इति गायत्रं चाग्नेश्चार्कः (र० १. ३. १) सुरूपं (ऊ० १४.२.११) च। अभि द्युम्नं (सा० १०११-२) सखाय आ निषीदते-(सा० ११५७-९)ति वाचश्चसाम (ऊ० १४.२.१४) शौक्तं (ऊ० १४. २. १५) च । पर्यूष्वि-(सा० १३६४-६) 5 त्यान्धीगवम् (ऊ० ६.१.१९)। इन्द्राय सोम पातवे (सा० १६७९-८) इति आसितं च कौत्सं (ऊ० १४.२.१६-७) च यज्ञायज्ञीयं (ऊ० १४. २. २१) च । पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १. १. ८)मन्त्यम् ॥ २ ॥

विशोविशीय-(१५. १. २)मग्निष्टोमसाम । स्वासु प्रमँहिष्ठीयं 10 (ऊ० २. २. ५) हारिवर्ण-(ऊ० २. २. ६)मुद्वंशीय-(ऊ० ६. १. ८) मित्युक्थानि ॥ २ ॥

इति द्वितीयमहः ॥ ३१ ॥

---

## तृतीयमहः

तृतीयस्याह्नः— 15

> व्युष्टेरुत्तरस्याह्नो बहिष्पवमानम्। अथ यदेव छन्दोमपवमानस्योत्तम-महस्तदेतत्। तस्य शशकर्णक्लृप्ता बृहती ॥ १ ॥

इति । साध्यास्यायां चेदेकोऽध्यास्यायामेवान्ततो द्वौ तस्यां चैवादितश्च सा शशकर्णक्लृप्तेति शशकर्णक्लृप्तिर्व्याख्याता ॥

पवस्व वाचो अग्रियः (सा० ७७५-७) एष देवो अमर्त्यः 20 (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) आ ते दक्षं मयोभुवम् (सा० ११३७-९) इति बहिष्पवमानम् ॥ 22

---

17. V²CMyBKAT, शशक्लृप्तिः for शशकर्णक्लृप्तिः

अन्यत्सर्वं छन्दोमपवमानस्योत्तमेनाह्ना समम् । आभीशवं प्रथमायाम् । श्रीणन्त इति अध्यास्यायां देवस्थान-(र० ४.२.२) मिति विशेषः ॥ १ ॥

इति तृतीयमहः ॥ ३२ ॥

पराकत्रिरात्रः समाप्तः ॥

---

इति श्रीवामनार्यसुतवरदराजविरचितायां आर्षेयकल्प-व्याख्यायामहीनेषु प्रथमोऽध्याय आदितः षष्ठः ॥ ६ ॥

---

## सप्तमोऽध्यायः

# चतूरात्राः

### तत्र अत्रिचतूरात्रः चतुर्वीरो वा

अथ चतूरात्राश्चत्वारः। चतुर्विंशाः पवमानाः (तां ब्रा० २१.९) इत्युत्तरेणानुवाकेनात्रिचतूरात्रः उक्तः। तस्य चतुर्वीर इति संज्ञा ॥

### प्रथममहः

प्रथमस्याह्नः क्लृप्तिः—

उपास्मै गायता नरः (सा० ६५१-३) बभ्रवे नु स्वतवसे (सा० १४४४-६) प्र यद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८९८-९०३) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्न आ याहि वीतये (सा० ६६०-७१) इत्याज्यानि ॥ २ ॥

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० ६. २. १२) च जराबोधीयं चाशुभार्गवम् (ऊ० ११. २. ११)। प्र सोम देववीतय (सा० ७६७-८) इति पञ्चं (ऊ० ५. २. १३) गौङ्गवं (ऊ० ११. १. १७) यौधाजयम् (ऊ० १. २. १३) औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[इति माध्यंदिनः पवमानः ॥]

रथन्तरं च (र० १. १. १) वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥ ४ ॥

स्वादिष्ठया मदिष्ठये-( सा० ६८६-६१ )ति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-( सा० ६६२-६ )ति सफ-(ऊ० १. १. ९)पौष्कले (ऊ० १. १. १०)। प्र सुन्वानायान्धस ( सा० १३८६-८ ) इत्यौदलं (ऊ० ११. २. ३) गौतमम् (ऊ० ११. २. १३) आकूपारम् (ऊ० १५. १. १६)। अभि प्रियाणी-( सा० ७००-२ )ति द्विरिडपदस्तोभोऽ-( र० ४. २. ७ ) न्त्यः ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

चतुर्विंशाः पवमानाः। त्रिवृन्त्याज्यानि। पञ्चदशानि पृष्ठानि। सप्तदशोऽग्निष्टोमः ॥ ६ ॥

इति प्रथममहः ॥ १ ॥

---

## द्वितीयमहः

द्वितीयस्याह्नः—

पवस्व वाचो अग्रियः ( सा० ७७५-७ ) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा ह्यसि भानुना ( सा० ७८४-६ ) सोमः पुनानो अर्षति (सा० ११८७-९५) पवमानस्य ते वयम् (सा० ७८७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८०२) इत्याज्यानि ॥ २ ॥

वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं ( ऊ० ७. १. १ ) चाजिगं ( ऊ० ११. २. १४ ) च स्वारं च सौपर्णम् ( ऊ० ११. २. १५ ) । पुनानः सोम धारये-(सा० ६७५-६ )त्यायास्ये (ऊ० १.२.२०; २.१.१) 5 अन्तरा दैर्घश्रवसम् ( ऊ० ११. २. १६ ) । वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ १ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

बृहच्च (र० १.१.५) वामदेव्यं (ऊ० १.१.५) च श्यैतं (ऊ० २.१.३) च माधुच्छन्दसं (ऊ० २.१.४) चेति पृष्ठानि ॥ २ ॥ 10

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च स्वाशिरामर्कः (र० ३. २.४) । त्वँ ह्यङ्ग दैव्य ( सा० ९३८-९ ) पवस्व देववीतये (सा० १३२६-८) इति शङ्कु-(ऊ० ११.२.१८) सुज्ञाने (ऊ० ११.२.१९) । अयं पूषा रयिर्भग. (सा० ८१८-२०) इत्यासितं (ऊ० ११.२.२०) च द्वे क्रौञ्चे (ऊ० १५. १. १७; २. १. ९) । वृषा 15 मतीनां पवत ( सा० ८२१-३ ) इति चतुरिडः यदस्तोभोऽ- (र० ४. २. ८)न्त्यः ॥ ३ ॥

[ इत्यार्भवः पवमानः ॥ ]

द्वे क्रौञ्चे इति । अयं पूषौ हो इत्येकम् । अयं पूषा । हो । रयिर्भगां ए । इत्यपरम् । तयोश्चाजाम्यर्थं विपर्यासेन 20 प्रयोगः कार्यः । अन्यथा हि स्वारयोः तयोः क्रौञ्चयोः संनिपाताज्जामिता स्यात् ॥ ३ ॥ 22

---

14. My. आसितक्रौञ्चे for आसितं च द्वे क्रौञ्चे
15. V²KAT. Om. द्वे ; T. क्रौञ्चं for क्रौञ्चे
20 My. जाम्यर्थं, T. जात्यर्थम् for अजाम्यर्थं ; V²L. माविपर्यासेन for विपर्यासेन
21. MyKBA. आसित for तयोः
22. V²CKATMyB. जामि for जामिता

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। औशनम् (ऊ० १. १. ४) सौभरम् (ऊ० १. १. १६) आष्टादंष्ट्रम् (ऊ० २. १. १२) इत्युक्थानि ॥ ४ ॥

प्रेष्ठं वः (सा० १२४४-६) इत्यौशनम्। आष्टादंष्ट्रं पूर्वम्। पूर्वं सकृदनुकृथ्येऽहीनरात्रा-(सा० )विति वचनात्। चतुर्विंशाः पवमानाः। पञ्चदशान्याज्यानि। सप्तदशानि पृष्ठानि। एकविंशोऽग्निष्टोमः सोक्थः ॥ ४ ॥

इति द्वितीयमहः ॥ २ ॥

---

## तृतीयमहः

तृतीयस्याह्नः—

दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजामेधाभिरीयते (सा० ८३३-५) असृक्षत प्र वाजिन (सा० १०३४-६) एते सोमा अभि प्रियम् (सा० ११७८-८६) इषे पवस्व धारया (सा० ८४१-३) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निनाग्निः समिन्धते (सा० ८४४-५५) इत्याज्यानि ॥ २ ॥ अग्निनाग्निः (सा० ८४४-६) मित्रं हुवे (सा० ८४७-९) इन्द्रेण (सा० ८५०-२) ताहुवे (सा० ८५३-५) इत्याज्यानि ॥ २ ॥

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भम् (ऊ० २. १. १३) ऐडं सौपर्णम् (ऊ० १३. १. १७)। अभि सोमास आयव (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च मैधातिथं (ऊ० ६. ३. ६) च द्विहिंकारं (ऊ० ४.

२. ७) च । तिस्रो वाच ( सा० ८६६-७१ ) इत्याङ्गिरसां संक्रोशोऽ-(ऊ० २. १. १७)न्त्यः ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

अभि त्वा वृषभा सुतः ( सा० ७३१-३ ) रथन्तरम् (र० ३. २. १५) । कस्तमिन्द्र त्वा वसव (सा० १६३२-३) इति वामदेव्यं (ऊ० १५. १. १८) श्रायन्तीयं ( ऊ० ५. २. ९ ) च रौरवं च (ऊ० २. १. १९) ॥ ४ ॥ 5

इति पृष्ठानि ॥

तरणिरित्सिषासती-( सा० ८६७-८ )ति रौरवम् । रथन्तरस्य गायत्री छन्दः। वामदेव्यस्य बृहती ॥ ४ ॥ 10

तिस्रो वाच उदीरत ( सा० ८६९-७१ ) इति गायत्रं चाग्नेश्चार्कः ( र० ३. २. १३ ) आ सोता परि षिञ्चत (सा० १३६४-५) सखाय आ निषीदते-( सा० ११५७-६ )ति वाचःसाम (ऊ० ७. १. १७) शौक्तं च (ऊ० १४. २. १५)। सुतासो मधुमत्तमः ( सा० ८७२-४ ) इति त्वाष्ट्रीसामनी स्वारे ( ऊ० १५. २. १-२ ) अन्तरान्धीगवम् ( ऊ० ७. १. २० ) पवित्रं त ( सा० ८७५-७ ) इति षडिडःपदस्तोभोऽ-(र० ४. २. ९)न्त्यः ॥ ५ ॥ 15

[ इत्यार्भवः पवमानः ॥ ]

त्वाष्ट्रीसामनी स्वारे इति । सुतासोमाहा इत्येकम् । सुता । सोमा इत्यपरम् । तयोर्मध्ये आन्धीगवम् ॥ ५ ॥ 20

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. ४) ॥ ६ ॥

आयुष उक्थानि ॥ ७ ॥ 23

---

21. KAMyBT. द्वितीयम् for अपरम्

प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्ण-(ऊ० २. २. ६) मुद्वंशीय-(ऊ० ६. १. ८)मिति ॥

अथ स्तोमाः। चतुर्विंशाः पवमानाः। सप्तदशान्याज्यानि। एकविंशानि पृष्ठानि। त्रिणवोऽग्निष्टोमः सोक्थः ॥ ७ ॥

इति तृतीयमहः ॥ ३ ॥

---

## चतुर्थमहः

चतुर्थस्याह्नः—

पवमानो अजीजनत् (सा० ८८६-९१) एष देवो अमर्त्यः (सा० ११५६-६५) एष धिया यात्वण्व्या (सा० ११६६-७३) आ ते दक्षं मयोभुवम् (सा० ११३७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

होता देवो अमर्त्यो (सा० १४७७-६) यदद्य सूर उदिते (सा० १३५१-३) महाँ इन्द्रो य ओजसे (सा० १३०७-९) यं वामस्य मन्मनः (सा० ९१६-८) ॥ २ ॥

इत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रम् आमहीयवं (ऊ० ६. २. ३) सत्रासाहीयम् (ऊ० ६. १. ६)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति पृश्नि (ऊ० १५. १. ६) चाथर्वणं (र० २. १. ३) चाभीशवं (ऊ० ५. २. ६) चोत्सेधश्च (ऊ० १२. २. २०)। अयं साम (सा० १४७१-३) इतीहवद्वासिष्ठम् (ऊ० १५. २. ५) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

यज्जायथा अपूर्व्ये (सा० १४२६-३१)। बृहद् ( र० ४.२.६ ) एद्रु मधोर्मदिन्तरम् (सा० १६८४-६) इति वामदेव्यं ( ऊ० १५. २. ६ ) त्रैशोकं (ऊ० २.२.१३) च समन्तं (ऊ० ५. २. १०) च ॥ ४ ॥

इति पृष्ठानि ॥ 5

बृहतोऽनुष्टुप्छन्दः । वामदेव्यस्योष्णिक् । त्रैशोकस्यातिजगती । यत इन्द्र इति समन्तम् ॥ ४ ॥

परि स्त्रानो गिरिष्ठा ( सा० १०६३-५ ) इति गायत्रं च गौषूक्तं (ऊ० १५. २७) च । स सुन्वे यो वसूनाम् (सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१५-६) इति 10 दीर्घ-( ऊ० ३. २. ११ )वारवन्तीये ( ऊ० १५. २. ८ ) । पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति निषेधश्च (ऊ० १२. १. ६)श्यावाश्वं ( ऊ० १. १. ११ ) च । परि प्र धन्वे-(सा० १३६७-८)ति दीर्घतमसोऽर्को (र० ४. २. ४) धर्ता दिव ( सा० १२२८-३० ) इति अष्टेडः पदस्तभोऽ-(र० ४. 15 ३. १)न्त्यः ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥
साकमश्वं ( ऊ० १. १. १५ ) त्रैककुभं ( ऊ० ६. १. ७ ) नार्मेधम् (ऊ० १. १. १७) ॥ ७ ॥ 20

इत्युक्थानि ॥

त्रैककुभस्योष्णिक्छन्दः ॥ ६ ॥

गौरीवितं षोडशिसाम । रात्रिः संधिः ॥ ८ ॥ 23

6. V²BTKAC. रथन्तरस्य for बृहतः ; My. Om. बृहतो ... समन्तम्

अथ स्तोमाः । चतुर्विंशाः पवमानाः । एकविंशान्याज्यानि त्रिणवानि पृष्ठानि । त्रयस्त्रिंशोऽग्निष्टोमः । त्रयस्त्रिंशोऽग्निष्टोमः । एकविंशान्युक्थानि सषोडशिकानि । पञ्चदशी रात्रिः । त्रिवृत्संधिरिति ॥

5 दधिभक्षान्तानि पूर्वाण्यहानि । उदवसानीयान्तमुत्तमम् ॥ ८ ॥

इति चतुर्थमहः ॥ ४ ॥

अत्रिचतूरात्रः (चतुर्वीरः) समाप्तः ॥

---

## जामदग्न्यश्चतूरात्रः

### प्रथममहः

10 त्रिवृत्पञ्चदशोऽग्निष्टोमः प्रथममहः ( तां० ब्रा० २१. ११ ) इत्यनुवाकेन जामदग्न्यश्चतूरात्र उक्तः । अत्र सूत्रम्—त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्याय (ला० श्रौ० ९. १२. ३) इत्यादि । प्रथमस्याह्नः कल्पः—

उपोषु जातमप्तुरम् (सा० १३३५-७) इत्यनुरूपो नौधसं (ऊ० 15 १. १. ६) ब्रह्मसाम । सुज्ञानस्य लोके पौष्कलम् ( ऊ० ६. २. २ ) । प्र सुन्वानायान्वस (सा० १३८६-८) इत्यौदल-(ऊ० ११. २. ३) गौतमं (ऊ० १. २. १८) ॥ १ ॥

समानमितरं प्रथमेनाह्नाभिप्लवत्रिकेन ॥ २ ॥

इति । उपास्मै (सा० ६५१-३) उपोषु जातमप्तुरं (सा० १३३५-७) 20 पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् ॥

---

1. LCV[2]. सप्तदशानि for एकविंशानि
11. MyBKAT. तस्य for अत्र
15. TKA. My. Om. लोके

अग्न आ याहि वीतये (सा० ६६०-७१) इत्याज्यानि ॥

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० ६. २. १२) च। प्र सोम देववीतय (सा० ७६७-६) इति पज्रं (ऊ० ५. २. १३) च यौधाजयं (ऊ० १. २. १३) चौशन-(ऊ२ १. १. ४)मन्त्यम्। इदं यौधाजयं द्व्यक्षरणिधनमेव ॥ 5

रथन्तरं (र० १. १. १) वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १. १. ८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरि-(सा० ७७३)रिति 10 सफ-(ऊ० १.२.१५)पौष्कले (ऊ० ६.२.२)। प्र सुन्वानायान्धस (सा० १३८६-८) इति औदल-(ऊ० ११. २. ३)गौतमे (ऊ० १. २. १८)। काव-(ऊ० १. १. १३)मन्त्यम्। काववर्जमेकर्चाः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

अस्मिन्नहनि त्रिवृत्पञ्चदशयोर्व्यत्यासप्रयोगः ॥ 15

इति प्रथममहः ॥ ५ ॥

---

## द्वितीयमहः

द्वितीयस्याह्नः कल्पः—

आजिगक्रौञ्चे उद्धरति। स्वे उष्णिक्ककुभौ। स्वासु यामम् (सा० १०. १. १०) ॥ १ ॥ 20

समानमितरं द्वितीयेनाह्ना चतुर्वीरस्य ॥ २ ॥

इति। स्वे उष्णिक्ककुभाविति। आभिप्लविकस्य द्वितीयस्याह्नः संबन्धिन्याविर्त्यर्थः। पवस्व वाचो-पवस्वेन्दो-वृषा सोम वृषा ह्यसि 22

---

15. LV[2]. व्यत्यासं, T. व्यात्यासः, MyB. व्यत्यासमम् for व्यत्यास°

( सा० ७७५-७८६ ) सोमः पुनानो अर्षति ( सा० ११८७-८५ ) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे ( सा० ७९०-८; ८००-२ ) इत्याज्यानि ॥

वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं
5 ( ऊ० ७. १. १ ) च सौपर्णम् ( ऊ० ९. २. १५ )। पुनानः सोम धारये-(सा० ६७५-६)ति ऐडं चायास्यं ( ऊ० १. २. २० ) दैर्घश्रवसं ( ऊ० ११. २. १६ ) च त्रिणिधनं चायास्यम् (ऊ० २. १. १)। वृषा शोण ( सा० ८०६-८ ) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् ॥

10 बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० २. १. ३ ) च माधुच्छन्दसं ( ऊ० २. २. ४ ) चेति पृष्ठानि ॥

यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रं च स्वाशिरामर्कः (र० ३. १. ४)। पवस्वेन्द्रमच्छे-( सा० १३२६-८ )ति
15 शङ्कु-(ऊ० ११. २. १८)सुज्ञाने (ऊ० ११. २. १९)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसितं (ऊ० ११. २. २०) च क्रौञ्चं ( ऊ० १५. १, १७ ) च । वृषा मतीनां पवत (सा० ८२१-३) इति याम-(ऊ० २.१.१०)मन्त्यम्। स्वारस्य क्रौञ्चस्यो-(ऊ० २. १. ९)द्धारः ॥

20 यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

औशनं (ऊ० १. १. ४) सौभर-( ऊ० १. १. १६ )माष्टादंष्ट्र-(ऊ० २. १. १२)मित्युक्थानि। ब्राह्मणोक्तास्तोमाः ॥ २ ॥

23 इति द्वितीयमहः ॥ ६ ॥

---

2. वयं for कवे

## तृतीयमहः

अथोत्तरस्याह्नश्चतुर्विंशं बहिष्पवमानम्। पञ्चदशानि त्रीण्याज्यानि। सप्तदशमच्छावाकस्य। एकविंशो माध्यंदिनः पवमानः। सप्तदशे द्वे पृष्ठे। एकविंशे द्वे। एकविंशं तृतीयं सवनं सोक्थम् इति ॥ 5

तृतीयस्याह्नः कल्पः—

असृक्षत प्र वाजिनः (सा० १०३४-६) इत्युद्धरति। अग्नेरर्कादुत्तरम् ऐडं सैन्धुक्षितम् (ऊ० १५. १. १९)। अभ्यासवतस्त्वाष्ट्रीसाम्नो लोके (ऊ० १५. २. २)। त्रिणिधनं त्वाष्ट्रीसाम (ऊ० २. २. ४)। स्वास्त्वरिष्टम (र० १. १. ८) ॥ १ ॥ 10

समानमितरं तृतीयेनाह्ना चतुर्वीरस्य ॥ २ ॥

इति। दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) एते सोमा अभि प्रियम् (सा० ११७८-८६) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम् ॥ 15

अग्निना-मित्रं हुवे-इन्द्रेण ताहुवे-(सा० ८४४-५५) इत्याज्यानि ॥

उच्चा ते जातमन्धस (सा० ६७२-८) इति गायत्रं क्षुल्लकवैष्टम्भम् (ऊ० २. १. १३) ऐडं सौपर्णम् (ऊ० १३.१.१७)। अभि सोमास (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च मैधातिथं (ऊ० ६. ३. ६) च 20 द्विहिंकारं (ऊ० ४. २. ७) च। तिस्रो वाच (सा० ८५६-६२) इति अङ्गिरसां संक्रोशोऽ-(ऊ० २. १. १७)न्त्यः ॥ 22

---

3. My. पञ्चदशम् for सप्तदशम्

4. MyBKA. Om. पृष्ठे

21. My. Om. तिस्रो ... ऐडं (p. 350, L. 6)

अभि त्वा वृषभा सुत (सां० ७३१-३) इति रथन्तरं (र० ४. २. ५) । कस्तमिन्द्र त्वा वसव (सा० १६८२-३) इति वामदेव्यं (ऊ० १५. १. १८) श्रायन्तीयं (ऊ० ५. २. ६) च रौरवं (ऊ० १. १. २) चेति पृष्ठानि ॥

तिस्रो वाच उदीरत (सा० ८६६-७१) इति गायत्रं चाग्नेश्चार्कः (र० ४. २. ३) ऐडं सैन्धुक्षितम् (ऊ० १५.१.१६) । आ सोता परि षिञ्चता (सा० १३६४-५) सखाय आ निषीदते- (सा० ११५७-६)ति वाचःसाम (ऊ० ७. १. १७) शौक्तं (ऊ० १४. २.१५) च । सुतासो मधुमत्तम (सा० ८७२-४) इति स्वारन्त्रिणिधने त्वाष्ट्रीसामनी (ऊ० १५.२.१; २.२.४) अन्तरान्धीगवम् (ऊ० ७. १.२०) । पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम् । अत्र स्वारं त्वाष्ट्रीसाम द्वयोः पूर्वम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्ण-(ऊ० २. २. ६)सुद्वंशीय- (ऊ० ६. १. ८)मित्युक्थानि ॥

तृतीयस्याह्नः एकविंशं बहिष्पवमानम् । त्रीणि चाज्यानि । पञ्चदशमच्छावाकस्य । चतुर्विंशो माध्यंदिनः पवमानः । एक-विंशानि पृष्ठानि । त्रिणवं तृतीयसवनम् । द्वे चोक्थे । एक-विंशमच्छावाकस्येति स्तोमविधिः ॥ २ ॥

इति तृतीयमहः ॥ ७ ॥

---

## चतुर्थमहः

चतुर्थस्याह्नः कल्पः—

वारवन्तीयस्य लोके श्रुध्यम् (ऊ० १२.१.५) विपरिहरत्यानुष्टुभे । द्विपदासु वारवन्तीयम् (सा० १३६७-६; ऊ० ६. २. १०) दीर्घतमसोऽर्कोऽ-(र० १. ३. ७)न्त्यः ॥ १ ॥

समानमितरमुत्तमेनाह्ना चतुर्थीरस्य ॥ २ ॥

इति। पवमानो अजीजनत् ( सा० ८८८-९१ ) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) आ ते दक्षं मयो भुवम् ( सा० ११३७-८ ) इति बहिष्पवमानम् ॥

होता देवो अमर्त्यो ( सा० १४७७-९ ) यदद्य सूर उदिते 5 (सा० १३०१-३) महाँ इन्द्रो य ओजसा ( सा० १३०७-९ ) इयं वामस्य मन्मनः (सा० ९१६-८) इत्याज्यानि ॥

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ६. २. ३) च सत्रासाहीयम् ( ऊ० ९. १. ९ )। परीतो षिञ्चता सुत-( सा० १३१३-५ )मिति पृश्नि ( ऊ० १५.१.६ ) 10 चाथर्वणं (र० २. १. ३) चाभीशवं ( ऊ० ५. २. ६ ) चोत्सेधश्च ( ऊ० १२. २. २० )। अयं सोम ( सा० १४७१-३ ) इति इहवद्वासिष्ठ-(ऊ० १५. २. ५)मन्त्यम् ॥

यज्जायथा अपूर्व्ये-( सा० १४२९-३१ )ति बृहत् (र० ४. २. ६)। एदु मधोर्मदिन्तर-(सा० १६९४-६)मिति वामदेव्यं (ऊ० 15 १५. २. १६) त्रैशोकं ( ऊ० २. २. १३ ) समन्तं (ऊ० ५. २. १०) चेति पृष्ठानि ॥

परिस्वानो गिरिष्ठा ( सा० १०९३-५ ) इति गायत्रं च गौषूक्तं ( ऊ० १५. २. ७ ) च। स सुन्वेयो वसूनां (सा० १०९६-७ ) प्राणा शिशुर्महीनाम् ( सा० १०१३-५ ) इति 20 दीर्घ-(ऊ० ३. २. ११)वारवन्तीये (ऊ० १५. २. ८)। पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति श्यावाश्वं ( ऊ० १. १. ११ ) च निषेध-(ऊ० १२. १. ६)श्च । परि प्र धन्वे-(सा० १३६७-९)ति 23

---

8. MyBKAT. Om. च ; My. गायत्रामहीयवे for गायत्रं चामहीयवं च

9. BKAT. Om. च

16. V²C. Om. समन्तं

दीर्घतमसोऽर्कः (र० ४. २. ४)। धर्ता दिवः (सा० १२२८-३०)
इति अष्टेडपदस्तोभोऽ-(र० ४. ३. १)न्त्यः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

साकमश्वं (ऊ० १. १. १५) त्रैककुभं (ऊ० ४. १. ७)
5 नार्मेध-(ऊ० १. १. १७)मित्युक्थानि ॥

गौरीवितं (ऊ० ३.१.१७) षोडशिसाम। रात्रिः संधिः ॥

चतुर्थस्याह्नः चतुर्विंशाः पवमानाः। पञ्चदशं होतुराज्यम्।
सप्तदशानि त्रीणि। एकविंशानि पृष्ठानि। त्रयस्त्रिंशोऽग्निष्टोमः।
एकविंशान्युक्थानि षोडशिकानि। पञ्चदशी रात्रिः। त्रिवृत्संधिः।
10 इति स्तोमविधिः ॥

इति चतुर्थमहः ॥ ८ ॥

इति जामदग्न्यश्चतूरात्रः समाप्तः ॥

---

## वासिष्ठश्चतूरात्रः—संसर्पो वा

त्रिवृत्प्रातःसवनम् (ता० ब्रा० २१. ११) इत्यनुवाकेन वासिष्ठ-
15 श्चतूरात्र उक्तः। स एव संसर्प इत्युच्यते ॥

### प्रथममहः

तस्य प्रथमस्याह्नः क्लृप्तिमाह—

या जामदग्न्यस्य प्रथमा सा संसर्पस्य ॥ १ ॥

19 इति। त्रिवृत्प्रातःसवनम्। पञ्चदशं माध्यंदिनं सवनम्। सप्तदशं

---

6. T. सषोडशिकानि for गौरीवितं षोडशिसाम and Om. रात्रिः संधिः ; BKA. Om. गौरीवितं ... संधिः

तृतीयं सवनम् । इति स्तोमक्लृप्तिः । अतिरिक्तास्तृचाः । सप्तदशत्वात् । परिशिष्टं जामदग्न्यस्य प्रथमेनाह्ना समम् ॥ १ ॥

इति प्रथममहः ॥ ९ ॥

---

## द्वितीयमहः

नवर्चसौपर्णे उद्धरति । परीतो षिञ्चता सुतम् (सा० १३१३-५) बार्हदुक्थं (ऊ० ६. ३. ७) च दैर्घश्रवसं (ऊ० ५.२.४) चायास्ये (ऊ० ७. १. ४) ॥ १ ॥ 5

समानमितरं द्वितीयेनाह्ना जामदग्न्यस्य ॥ २ ॥

इति । पवस्व वाचो (ऊ० ७७५ ७) पवस्वेन्दो (ऊ० ७७८-८०) वृषा सोम द्युमाँ असि (ऊ० ७८१-३) वृषा ह्यसि (ऊ० ७८४-६) 10 पवमानस्य ते वय-(७८७-९)मिति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे-मित्रं वयम्-इन्द्रमिद्गाथिन-इन्द्रे अग्ने-( सा० ७९०-९ ; ८००-२)त्याज्यानि ॥

वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं (ऊ० ७. १. १) च । परीतो षिञ्चता सुत-(सा० १३१३-५)मिति 15 बार्हदुक्थं ( ऊ० ६. ३. ७ ) चं दैर्घश्रवसं ( ऊ० ५. २. ४ ) चायास्ये (ऊ० ७. १. ४) । वृषा शोण ( ऊ० ८०२-८ ) इति पार्थ-(ऊ० ७.१.६)मन्त्यम् । शशाकर्णक्लृप्ता बृहती ॥

बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० १. १. ६ ) च माधुच्छन्दसं (ऊ० २.१.४) चेति 20 पृष्ठानि ॥ 21

---

5. नवर्चं॰ (सा० ११८७-९५)

17. U. उत्तरमध्यास्यायाम् for आयास्ये

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च स्वाशिरामर्कः (र० ३.२.४)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति शङ्कु-(ऊ० २.१.६)सुज्ञाने (ऊ० २.१.७)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसितं (ऊ० १२.२.२०) च क्रौञ्चं
5 चोत्तमम् (ऊ० २.१.९)। वृषा मतीनां पवते (सा० ८२१-३) इति याम-(ऊ० २.१.१०)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

औशनं (ऊ० १.१.४) सौभर-(ऊ० १.१.१६)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि। पञ्चदशं प्रातःसवनम्। सप्तदशं माध्यंदिनं
10 सवनम्। एकविंशं तृतीयसवनं सोक्थम् ॥ २ ॥

इति द्वितीयमहः ॥ १० ॥

---

## तृतीयमहः

तृतीयस्याह्नः कल्पः—

द्वादशाहिकस्य तृतीयस्याह्न आज्यबहिष्पवमानम्। गायत्री च ॥१॥
15 समानमितरं तृतीयेनाह्ना जामदग्न्यस्य ॥ २ ॥

इति। दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) इषे पवस्व धारय (सा० ८४१-३) इति बहिष्पवमानम् ॥

20 अग्निना-मित्रं हुवे-इन्द्रेण-ता हुवे (सा० ८४४-५५) इत्याज्यानि ॥

---

8. My. प्रमंहिष्ठीयं हारिवर्णमुद्वंशीयमित्युक्थानि। सप्तदशं प्रात:सवनमेकविंशं माध्यंदिनं सवनं सोक्थम् for औशनं ... सोक्थम् ; K. before औशनं ins : प्रमंहिष्ठीयं हारिवर्णमुद्वंशीयमित्युक्थानि। सप्तदशं प्रात:सवनमेकविंशं माध्यंदिनं सवनं त्रिणवं तृतीयं सवनं सोक्थम

उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च। अभि सोमास आयवः (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च मैधातिथं (ऊ० ९.३.६) च द्विहिंकारं (ऊ० ४.२.७) च। तिस्रो वाच उदीरत (सा० ८५९-६१) इत्यङ्गिरसां संक्रोशो- (ऊ० २. १. १७)ऽन्त्यः ॥

अभि त्वा वृषभा सुत. (सा० ७३१-३) इति रथन्तरम् (र० १.१.१)। कस्तमिन्द्र त्वा वसवा (सा० १६८२-३) इति वामदेव्यं (ऊ० १५.१.१८) श्रायन्तीयं (ऊ० ५.२.९) रौरवं (ऊ० १.१.२) चेति पृष्ठानि ॥

तिस्रो वाच उदीरत (सा० ८५९-६१) इति गायत्रं चाग्नेश्चार्कः (र० ४.२.३)। ऐडं सैन्धुक्षितम् (ऊ० १५.१.१९)। आ सोता परि षिञ्चत-(सा० १३९४-५) सखाय आ निषीदत (सा० ११५७-९) इति वाचःसाम (ऊ० ७.१.१७) शौक्तं (ऊ० १४.२.१५) च। सुतासो मधुमत्तमा (सा० ८७२-४) इति स्वाराद्यं च त्वाष्ट्रीसामा- (ऊ० १५.२.१)न्धीगवं (ऊ० १.१.१२) च त्रिणिधनं च त्वाष्ट्रीसाम (ऊ० २. २. ४)। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥

प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्ण-(ऊ० २.२.६)मुद्वंशीय- (ऊ० ६.१.८)मित्युक्थानि ॥

सप्तदशं प्रातःसवनम्। एकविंशं माध्यंदिनं सवनम्। त्रिणवं तृतीयसवनं सोक्थम् ॥ २ ॥

इति तृतीयमहः ॥ ११ ॥

## चतुर्थमहः

**अथ चतुर्थस्याह्नः—**

उद्धरति पर्यासम्। व्रात्या गायत्री। पुनानः सोम धारये-(सा० ६७५-६ )ति बृहती। गौषूक्तादुत्तरं वारवन्तीयम् (ऊ० १२. १. ४)। पुरोजिती वो अन्धस (सा० ६९७-९) इति निषेधश्च (ऊ० १२. १. ६) श्यावाश्वं (ऊ० १. १. ११) त्वाष्ट्रीसामा-(ऊ० ७. २. १०)हरति द्विपदातिच्छन्दसः ॥ १ ॥

समानमितरमुत्तमेनाह्ना जामदग्न्यस्य ॥ २ ॥

इति। पवमानो अजीजनत् (सा० ८८९-९१) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) इति बहिष्पवमानम् ॥

होता देवो अमर्त्यो (सा० १४७७-९) यदद्य सूर उदिते (सा० १३५१-३) महाँ इन्द्रो य ओजसा (सा० १३०७-९) इयं वामस्य मन्मन (सा० ९१६-८) इत्याज्यानि ॥

अस्य प्रत्ने-(सा० ७५५-८)ति गायत्रं चामहीयवं (ऊ० ९. २. ३) च जराबोधीयं (ऊ० ९.३.१०) च सत्रासाहीयं (ऊ० ९. १. ९) च। पुनानः सोम धारये-(सा० ६७५-६)ति पृश्नि (ऊ० १५.२.३) चाथर्वणं (र० ४.३.२) चाभीशवं (ऊ० १५.२.४) चोत्सेधश्च (ऊ० ६.१.११)। अयं सोम (सा० १४७१-३) इति इहवद्वासिष्ठ-(ऊ० १५. २. ५)मन्त्यम् ॥

यज्जायथा अपूर्व्ये-(सा० १४२९-३१)ति बृहत् (र० ३.२.१६)। एदु मधोर्मदिन्तरम् (सा० १६८४-६) इति वामदेव्यं (ऊ० १५. २. ६) त्रैशोकं (ऊ० २. २. १३) च समन्तं (ऊ० ५.२.१०) चेति पृष्ठानि ॥

परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं गौषूक्तं (ऊ० १५. २. ७) वारवन्तीयम् (ऊ० १२.१.४)। स सुन्वेयो

वसूनां (सा० १०९६-७) प्राणा शिशुर्महीनाम् ( सा० १०१३-५ ) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये (ऊ० १२.२.५)। पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति निषेधश्च ( ऊ० १२. १. ६ ) श्यावाश्वं ( ऊ० १. १. ११ ) च त्वाष्ट्रीसाम यदूर्ध्वेडम् ( ऊ० ७.२.१० ) । परि प्र धन्वे-( सा० १३६७-८ )ति वाजदावर्यः (ऊ० १२.१.७) । अया रुचे-(सा० १५९०-२)ति नित्यवत्साः ( र० ३. २. २ ) । धर्ता दिव ( सा० १२२८-३० ) इति दीर्घतमसोऽर्कौऽ-(र० ३.१.१०)न्त्यः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (उ० १. १. १४) ॥

साकमश्वं ( ऊ० १. १. १५ ) त्रैककुभं ( ऊ० ६. १. ७ ) नार्मेध-(ऊ० १. १. १७)मित्युक्थानि ॥

गौरीवितं ( ऊ० ३. १. २ ) षोडशिसाम । रात्रिः संधिः । एकविंशं प्रातःसवनम् । त्रिणवं माध्यंदिनं सवनम्। त्रयस्त्रिंशं तृतीयसवनम् । प्रत्यवरोहीण्युक्थानि । त्रिणवं प्रथमम् । द्वे एकविंशे सषोडशिके । पञ्चदशी रात्रिः । त्रिवृत्संधिरिति । अत्र सूत्रम्— संसर्पस्य चतुर्थेऽहनि (ला० श्रौ० ६.१२.८) इत्यादि ॥ २ ॥

इति चतुर्थमहः ॥ १२ ॥

इति वासिष्ठश्चतूरात्रः समाप्तः ॥

---

## वैश्वामित्रश्चतूरात्रः

त्रिवृदग्निष्टोमः । पञ्चदश उक्थः । सप्तदश उक्थः । एकविंशोऽतिरात्रो विश्वामित्रस्य संजयः ( तां० ब्रा० २१. १२ ) इत्यनुवाकेन वैश्वामित्रश्चतूरात्र उक्तः ॥

### प्रथममहः

तस्य प्रथममहराह—

प्र सोमासो विपश्चितः ( सा० ७६४-६ ) गायत्रमेकस्याम् । आश्वमेकस्याम् (ऊ० १. २. ११ ) जराबोधीयमेकस्याम् ( ऊ०

१४. १. १२)। प्र सोम देववीतये (सा० ७६७-८) इति यौधाजयं (ऊ० १. २. १३) तिसृषु ॥ १ ॥

समानमितरं प्रथमेनाह्ना संसर्पस्य ॥ २ ॥

इति। उपास्मै (सा० ६५१-३) उपोषु जातम् (सा० १३३५-७)
5 पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् ॥

अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि ॥

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रमाश्वं (ऊ० १. २. ११) जराबोधीय-(ऊ० १४. १. १२)मिति सामतृचः। प्र सोम देववीतय (सा० ७६७-८) इति यौधाजयं (ऊ० १.
10 २. १३) तिसृषु। औशन-(ऊ० १.१.४)मन्त्यम् ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ) चेति पृष्ठानि ॥

स्वादिष्ठये-(सा० ६८६)ति गायत्र-संहिते (ऊ० १.१.८)।
15 अया पवस्व देवयुः-पवते हर्यतो हरिर् (सा० ७७२-३) इति सफ-(ऊ० १.२.१५)पौष्कले (ऊ० ६.२.२)। प्र सुन्वानायान्धस (सा० ७७४) इत्यौदल-(ऊ० ११.२.३)गौतमे (ऊ० १.२.१८)। काव-(ऊ० १.१.१३)मन्त्यम्। काववर्जमेकर्चाः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

20 सर्वं त्रिवृत् ॥ २ ॥

21 इति प्रथममहः ॥ १३ ॥

---

9. KAMyT. Om, प्रसोम ... पौष्कले (L 16) ; B. Om. प्रसोम ... संहिते (L. 14)

## द्वितीयमहः

द्वितीयमहराह—

पुनानः सोम धारय ( सा० ६७५-६ ) इत्यायास्ये (ऊ० १. २. २०; २. १. १ ) ॥ १ ॥

समानमितरं तृतीयेनाह्ना संसर्पस्य ॥ २ ॥ 5

इति । पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वय-(सा० ७७५-८६)मिति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७९०-८०२) इत्याज्यानि ॥

वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं (ऊ० ७.१.१ ) च । पुनानः सोम धारये-( सा० ६७५-६ )ति 10 आयास्ये (ऊ० १. २. २०; २. १. १) । वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७.१.६)मन्त्यम् ॥

बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० १. १. ) च माधुच्छन्दसं ( ऊ० २.१.४ ) चेति पृष्ठानि ॥ 15

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं स्वाशिरामर्कः (ऊ० ३.२.४) । पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति शङ्कु-(ऊ० २.१.६ )सुज्ञाने ( ऊ० २.१.७ ) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसितं (ऊ० ११.२.२०) च क्रौञ्चं (ऊ० १५.१.१७) च । वृषा मतीनां पवत (सा० ८२१-५) इति 20 याम-(ऊ० २.१.१०)मन्त्यम् । शङ्कुसुज्ञानासितान्येकर्चानि ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ 22

---

5. MyBKA. संसर्पेण for संसर्पस्य

औशनं (ऊ० १.१.४) सौभर-(ऊ० १.१.१६)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि। सर्वं पञ्चदशम् ॥ २ ॥

इति द्वितीयमहः ॥ १४ ॥

---

## तृतीयमहः

तृतीयमहराह—

सैन्धुक्षितान्धीगवे उद्धरति ॥ १ ॥

समानमितरं तृतीयेनाह्ना संसर्पस्य ॥ २ ॥

इति। दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) एष पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम्।

अग्निनाग्निः समिध्यते (सा० ८४४-५५) इत्याज्यानि ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च। अभि सोमास आयव (सा० ८५६-८) इति गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च मैधातिथं (ऊ० ६. ३. ६) च द्विर्हिंकारं (ऊ० ४. २. ७) च। तिस्रो वाच (सा० ८५९-६१) इत्यङ्गिरसां संक्रोशोऽन्त्यः (ऊ० २. १. १७)। गौतममाद्यायाम्। द्विर्हिंकारमध्यास्यायाम् ॥

अभि त्वा वृषभा सुत (सा० ७३१-३) इति रथन्तरम् (र० १. १. १)। कस्तमिन्द्र त्वा वस-(सा० १६८२-३)विंति वामदेव्यं (ऊ० १५.१.१८) श्रायन्तीयं (ऊ० ५.२.६) रौरवं (ऊ० १. १. २) चेति पृष्ठानि ॥

तिस्रो वाच उदीरत (सा० ८५६-६१) इति गायत्रं चाग्नेश्चार्कः (र० १. ३. १)। आ सोता परि षिञ्चत (सा० १३६४) सखाय आ निषीदते-(सा० ११५७)ति वाचःसाम (ऊ० २.२.१) शौक्तं (ऊ० २.२.२) चैकर्चयोः। सुतासो मधुमत्तमा (सा० ८७२-४) इति स्वारमाद्यं त्वाष्ट्रीसाम (ऊ० १५.२.१) त्रिणिधनं (ऊ० २.२.४) च। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम् ॥ 5

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)॥

प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्ण-(ऊ० २. २. ६)मुद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि। सर्वं सप्तदशम् ॥ २॥ 10

इति तृतीयमहः ॥ १५॥

---

## चतुर्थमहः

चतुर्थमहराह—

जराबोधीयत्रारवन्तीये उद्धरति। द्विपदातिच्छन्दसश्च। परीतो षिञ्चता सुतम् (सा० १०१३-५) इति पृश्नि (ऊ० १५. १. ६) आभीशवम् (ऊ० ५. २. ६) आथर्वणं (र० २. १. ३) ज्योतिष्टोम्यनुष्टुप् ॥ १॥ 15

समानमितरमुत्तमेनाह्ना संसर्पस्य ॥ २॥

इति। पवमानो अजीजनत् (सा० ८८६-६१) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्ये-(सा० १२६६-७३)ति बहिष्पवमानम् ॥ 20

---

14. V²C. Om. उद्धरति

होता देवो अमर्त्यो ( सा० १४७७-९ ) यदद्य सूर उदिते ( सा० १३५१-३ ) महाँ इन्द्रो य आजेसा ( सा० १३०७-९ ) इयं वामस्य मन्मन (सा० ९१६-८) इत्याज्यानि ॥

अस्य प्रत्नामनुद्युत-(सा० ७५५-७)मिति गायत्र-(ऊ० ९. २. ३) मामहीयवं (ऊ० ९.२.३) सत्रासाहीयम् (ऊ० ६.१.६)। परीतो षिञ्चता सुत-(सा० १३१३-५ )मिति पृश्न्या-( ऊ० १५. १. ६ )भौशव-(ऊ० ५. २. ६)माथर्वणम् ( र० २. १. ३ )। अयं सोम (सा० १४७१-३) इति इहवद्वासिष्ठ-(ऊ० १५. २. ५)मन्त्यम् ॥

यज्जायथा अपूर्व्ये-(सा० १४२९-३१)ति बृहत् (र० ४. २. ६)। एदु मधोर्मदिन्तर-(सा० १६८४-६)मिति वामदेव्यं ( ऊ० १५.२.६ ) त्रैशोकं (ऊ० २. २. १३) च समन्तं ( ऊ० ५. २. १० ) चेति पृष्ठानि ॥

परि स्वानो गिरिष्ठा (सा० १०९३-५ ) इति गायत्रं गौषूक्तं (ऊ० १५. २. ७) च । स सुन्वे यो वसूनाम् (सा० १०९६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३.२.११) श्रुध्ये-(ऊ० ६.१.१४)। पुरोजिती वो अन्धसः (सा० ६९७-९) इति श्यावाश्वा-(ऊ० १. १. ११)न्धीगवे (ऊ० १. १. १२)। धर्ता दिव ( सा० १२२८-३०) इति दीर्घतमसो-ऽर्कोऽ-(र० २. १. १०)न्त्यः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

साकमश्वं ( ऊ० १. १. १५ ) त्रैककुभं ( ऊ० ६. १. ७ ) नार्मेध-(ऊ० १. १. १७)मित्युक्थानि ॥

गौरीवितं ( ऊ० ३. १. २ ) षोडशिसाम। रात्रिः संधिः । सर्वमेकविंशम्। एकस्तोमस्य संधेरावापोऽभ्यासो वा ॥ २ ॥

इति चतुर्थमहः ॥ १६ ॥

इति जाहवः वैश्वामित्रो वा चतूरात्रः समाप्तः ॥

इति चतूरात्राः ॥

## अथ पञ्चरात्राः

### देवपञ्चरात्रः—अभ्यासङ्गचः

अथ पञ्चरात्रास्त्रयः। द्वे त्रिवृती सवने (तां० ब्रा० २१.१३) इत्यनुवाकेन देवानां पञ्चरात्र उक्तः ॥

### प्रथमद्वितीये अहनी 5

वैश्वमित्रो द्व्यहः। जराबोधीयस्य लोके सोमसाम (ऊ० १. २. १२)। स्वाशिरामर्कस्य मौक्षम् (ऊ० ४. १. १०) सौभरस्यौपगवम् (ऊ० ४. १. १८) ॥ १ ॥

इति प्रथमद्वितीये अहनी ॥ १७ ॥

---

### तृतीयमहः 10

द्वादशाहिकं तृतीयमहः। वैरूपस्य लोके रथन्तरम् (र० १. १. १)। पाष्ठौहस्याग्नेरर्कः (र० ४. २. ३)। गौरीवितस्य त्रिवृत्साम (ऊ० १५. २. १) ॥ १ ॥

तस्यैतस्य त्र्यहस्याभ्यासङ्गः। स्वादिष्ठया मदिष्ठये-(सा० ६८६-६९१)ति गायत्र-संहिते तृचयोः (ऊ० १. १. ८)। 15 गौतमं तृचे (ऊ० ६. १. १) आसितं तृचे (ऊ० ६. २. २०) वाचश्च साम (ऊ० ७.१.१७) शौक्तं तृचयोः (ऊ०१४.२.१५) ॥२॥

तस्य त्रयाणामह्नां क्लृप्तिमाह—वैश्वामित्रो द्व्यह इति खण्डेन। वैश्वामित्रो द्व्यहः द्वे अहनी उक्ते। जराबोधीयस्य लोके सोमसामेति तयोः प्रथमस्य विशेषः। स्वाशिरामर्कस्य मौक्षं सौभरस्यौपगवमिति 20 द्वितीयस्य। द्वादशाहिकं तृतीयमहरुक्तम्—वैरूपस्य लोके रथन्तरं पाष्ठौहस्याग्नेरर्को गौरीवितस्य त्वाष्ट्रीसामेति। तस्य विशेषः—तस्यैतस्य त्र्यहस्याभ्यासङ्ग इति। पूर्वस्याह्नस्तार्तीयसवनीको यः स्तोमः 23

---

20. LCV². तस्य for तयोः प्रथमस्य

23. MyBKTA. तृतीय for तार्तीय

स उत्तरस्य । आद्ययोः सवनयोर्यदनुषज्यते सोऽभ्यासङ्गः । यद्योगादयं पञ्चरात्रोऽभ्यासङ्ग्य इत्युच्यते । स च यद्यपि पञ्चानामप्यह्नामस्ति तथाप्यनभ्यासक्तस्य त्र्यहस्यातिदेशाद्विशेषतो विधीयते । स्वादिष्ठया मदिष्ठयेति गायत्रसांहिते तृचयोः गौतमं
5 तृचे इति पुनः प्रथमस्याह्नो विशेषः । आसितं तृच इति द्वितीयस्य । वाचःसाम शौक्तं च तृचयोरिति तृतीयस्य । तत्र प्रथमस्य क्लृप्तिः—उपास्मै (सा० ६५१-३) उपोषु (सा० १३३५-७) पवमानस्य ते कवे ( सा० ६५७-६ ) इति बहिष्पवमानम् । अग्न-आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ )त्याज्यानि । प्र
10 सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रमाश्वं (ऊ० १. २. ११) सोमसामे-(ऊ० १. २. १२)ति तृचः । प्र सोम देववीतये ( सा० ७६७-८ ) इति यौधाजयं (ऊ० १. २. १३) तिसृष्वौशन-(ऊ० १.१.४)मन्त्यम् । रथन्तरं (र० १. १. १ ) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.६) च कालेयं (ऊ०
15 १.१.७) चेति पृष्ठानि । स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १.१.८) । अया पवस्व देवयुः ( सा० ७७२ ) पवते हर्यतो हरि-(सा० ७७३)रिति सफ-( ऊ० १.२.१५ )पौष्कले (ऊ० ६.२.२) । प्र सुन्वानायान्धस ( सा० १३८६-८ ) इति औदल-(ऊ० ११.२.३)गौतमे ( ऊ० ११.२.१३ )। काव-(ऊ० १.
20 १.१३)मन्त्यम् । सफपौष्कलौदलान्येकर्चानि । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४) । द्वे त्रिवृती सवने । पञ्चदशमेकमिति स्तोमविधिः ॥

द्वितीयस्याह्नः— पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि पवमानस्य ते वयम् ( सा० ७७५-८९ ) इति बहिष्पवमानम् । अग्निं दूतं वृणीमहे (सा० ७६०-८०२) इत्याज्यानि । वृषा पवस्व
25 धारये-(सा० ८०३-५)ति गायत्रं हाविष्मतं ( ऊ० ७.१.१ ) च । पुनानः सोम धारये-( सा० ६७५-६ )ति आयास्ये (ऊ० १.२.२० ; २७ २. १. १) वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७.१.६)

1. V²BTC. उत्तरस्योत्तरस्य, MyKA. उक्तस्योत्तरस्य for उत्तरस्य ; V²C. अह्नोर्द्वयोः for आद्ययोः

मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १.१.५) च श्यैतं (ऊ० २.१.३) च माधुच्छन्दसं (ऊ० २.१.६) चेति पृष्ठानि। यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रमौक्षे (ऊ०४.१.१०)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति शङ्कु-(ऊ०७.१.८) सुज्ञाने (ऊ० ६.२.८)। अयं पूषे-(सा० ८१८-२०)त्यासितं (ऊ० ११.२.१०) च क्रौञ्चं (ऊ० १५.१.१७) च। वृषा मतीनां पवत (सा० ८२१-३) इति याम-(ऊ० २.१.१०)मन्त्यम्। ककुबुष्णिहावेकर्चौ। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। प्रेष्ठं वः (सा० १२४४-६) इत्यौशनम् (ऊ० ५.१.११)। त्वं न इन्द्र (सा० ११६९-७१) इत्यौपगवम् (ऊ० ४.१.१८)। आष्टादंष्ट्रं पूर्वम् (ऊ० २. १. १२) इत्युक्थानि। द्वे पञ्चदशे सवने सप्तदशमेकम् ॥

तृतीयस्याह्नः—दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम्। अग्निना-मित्रंहु-इन्द्रेण ता हुवे (सा० ८४४-५५) इत्याज्यानि। उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च। अभि सोमास आयव (सा० ८५६-८) इति पौरुमद्रं प्रथमायाम् (ऊ० २.१.१४)। गौतमं तिसृषु (ऊ० २. १. १५)। आष्कारणिधनमध्यास्यायाम् (ऊ० १८.२.२)। तिस्रो वाच (सा० ८५९-६१) इति अङ्गिरसां संक्रोशोऽन्त्यः (ऊ० २. १. १७)। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च महावैष्टम्भं (ऊ० २. १. १८) च रौरवं (ऊ० १. १. २) चेति पृष्ठानि। तिस्रो वाच उदीरत (सा० ८५९-६१) इति गायत्रं चाग्नेश्चार्कः (र० ४. २. ३)। आ सोता परि षिञ्चत (सा० १३६४-५) सखाय आ निषीदत (सा० ११५७-९) इति वाचःसाम

(ऊ० ७.१.१७) शौक्तं (ऊ० १४.२.१५) च। सुतासो मधुमत्तमा (सा० ८७२-४) इति स्वारंत्रिणिधने त्वाष्ट्रीसामनी (ऊ० १५.२.१ ; २.२.४)। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम्। स्वारं त्वाष्ट्रीसाम यद् द्वयोः पूर्वम्। आद्यं तु तृतीये स्वारयोश्च पूर्वमुत्तरम्
5 (ऊ० प्र० सू० ४. ८) इत्युपग्रन्थवचनात्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-(ऊ० २. २. ७)मित्युक्थानि। द्वे सप्तदशे सवने। एकविंशमेकम् ॥

इति तृतीयमहः ॥ १८ ॥

---

10 ## चतुर्थमहः

चतुर्थस्याह्नः क्लृप्तिमाह—

पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्र यद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८९८-८०३) हिन्वन्ति सूरमुस्रयः
15 (सा० ९०४-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) इति होतुराज्यम्। स्वान्युत्तराणि ॥ २ ॥

अयं वां मित्रावरुण (सा० ९१०-२) इन्द्रो दधीचो अस्थभिर्
20 (सा० ९१३-५) इयं वामस्य मन्मनः (सा० ९१६-८)
21 इत्याज्यानि ॥ ३ ॥

---

4. BKAMy. Om. यद् ; MyBK. °सामनत्रय for °साम ; BKATMy. Om. उत्तरम्

पवस्व दक्षसाधन (सा० ६१६-२१) इति गायत्रम्। अदारसृत् (ऊ० ७. २. २) सत्रासाहीयम् (ऊ० १५. २. ६)। तवाहं सोम रारणे-( सा० ६२२-३ )त्याष्टादंष्ट्रम् ( ऊ० २. २. ६ ) आभीशवं ( ऊ० २. २. १० ) स्वःपृष्ठमाङ्गिरसम् (ऊ० २. २. ११ )। उ हुत्रा अस्ये-( सा० १३९६-१४०१ )ति वासिष्ठम् (ऊ० ७. २. ६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च पृश्नि (ऊ० २. २. १४) च ॥ ४ ॥

इति पृष्ठानि ॥

परि प्रिया दिवः कविर् (सा० ६३५-७) इति गायत्रं स्वाशिरामर्कौ (र० ४. १. ६) बृहद्भारद्वाजम् ( ऊ० १५. २. १० )। त्वं ह्यङ्ग दैव्य ( सा० ६३८-९ ) सोमः पुनानः ऊर्मिणे-( सा० ६४०-२)ति बृहत्क-( ऊ० २. २. १६ )क्रोशे (ऊ० १५. २. ११)। पुरोजिती वो अन्धस ( सा० ६६७-६ ) इति नानदं (ऊ० २. २. १८) त्वाष्ट्रीसामा-( ऊ० १५. २. ११ )थर्वणम् (र० ३. १. १)। प्रो अयासीद् (सा० ११५२-४) इति लौशम् (ऊ० ७. २. ११) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

सैन्धुक्षितं ( ऊ० २. २. २० ) सौभरम् ( ऊ० १. १. १६ ) उद्वंशीयम् (ऊ० ६. १. ८) ॥ ७ ॥

इत्युक्थानि ॥

**द्वे एकविंशे सवने । त्रिणवमेकम् ॥ ७ ॥**

**इति चतुर्थमहः ॥ १९ ॥**

## पञ्चममहः

**पञ्चमस्याह्नः—**

पवमानस्य विश्वविद् (सा० ६५८-६०) असृक्षत प्र वाजिनः (सा० १०३४-६) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) आ ते दक्षं मयोभुवम् (सा० ११३७-६) ॥ १ ॥

**इति बहिष्पवमानम् ॥**

होता देवो अमर्त्यः (सा० १४७७-६) पुरूरुणा चिद्ध्यस्ति (सा० ६८५-६) उत्तिष्ठन्नोजसा सह (सा० ६८८-६०) यज्ञस्य हि स्थ ऋत्विजा (सा० १०७३-५) ॥ २ ॥

**इत्याज्यानि ॥**

अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ६. २. ३) च जराबोधीयं (ऊ० ६. ३. १०) चर्षभश्च पवमानः (ऊ० १२. २. १६)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति वाम्रं (ऊ० १५. २. १२) च मानवं (ऊ० १५. २. १३) चानूपं (ऊ० १५. २. १४) चोत्सेधश्च (ऊ० १२. २. २०)। अयं सोम (सा० १४७१-३) इति इहवद्वासिष्ठम् (ऊ० १५. २. ५) अन्त्यम् ॥ ३ ॥

**[ इति माध्यंदिनः पवमानः ॥ ]**

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ६) च वैयश्वं (ऊ० ४. २. १६) च ॥ ३ ॥

**इति पृष्ठानि ॥**

परिस्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रं गौषूक्तं (ऊ० १४. २. ७) वारवन्तीयं (ऊ० १२. १. ४)। स सुन्वे यो वसूनां (सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. ११)श्रुध्ये (ऊ० ११. १. ५)। सोमाः पवन्त इन्दवः (सा० ११०१-३) इति श्यावाश्वा-(ऊ० १५. १. १६)न्धीगवे (ऊ० १५. १. १७) निषेधः (ऊ० १५. १. १८)। परि प्र धन्वे-(सा० १३६७-९)ति वाजदावर्यो (ऊ० १२. १. ७) अया रुचे-(सा० १५९०-२)ति नित्यवत्साः (र० ३. १. १२)। धर्ता दिवः (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽ-(र० ३. १. १०)न्त्यः ॥ ४ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ५ ॥

चतुर्वीरोऽतिरात्रः षोडशिमान् ॥ ६ ॥

इति। साकमश्वं (ऊ० १.१.१५) त्रैककुभं (ऊ० ६.१.७) नार्मेध-(ऊ० १.१.१७)मित्युक्थानि। गौरीवितं (ऊ० १.२.१७) षोडशिसाम। आहीनिकी रात्रिः संधिः। द्वे त्रिणवे सवने। त्रयस्त्रिंशमेकम्। प्रत्यवरोहीण्युक्थानि। त्रिणवं प्रथमम्। द्वे एकविंशे सषोडशिके। पञ्चदशी रात्रिः त्रिवृत्संधिः। इति स्तोमाः॥ ६ ॥

इति पञ्चममहः ॥ २० ॥

इति देवपञ्चरात्रः समाप्तः ॥

---

## पञ्चशारदीयः

त्रिवृदग्निष्टोमः पञ्चदश उक्थः सप्तदश उक्थः पञ्चदश उक्थः सप्तदशोऽतिरात्रः (तां० ब्रा० २१. १४) इत्यनुवाकेन

पञ्चशारदीय उक्तः । तस्य सूत्रम्—पञ्चशारदीये पशुबन्धैर्यजेते-
(ला० श्रौ० ६. १२. १०)त्यादि ॥

स्तोमक्लृप्तिमाह—

एष एव चतुरहो यो देवानां पञ्चरात्रस्यानभ्यासक्तः ॥ १ ॥

5 इति । तत्र प्रथमस्याह्नो विशेषमाह—

पुनर्जराबोधीयं स्वं लोकमेति ॥ २ ॥

इति । देवानां पञ्चरात्रे वैश्वामित्रातिदेशेन प्राप्तं यज्जराबोधीयमुद्धृतं
जराबोधीयस्य लोके सोमसामे-( आ० क० ७. ८. १ )ति वचनेन
तदत्र पुनः स्वमेव स्थानमागच्छतीत्यर्थः ॥ २ ॥

10 चतुर्थस्य विशेषमाह—

चतुर्थादह्न उत्तरं षड्रचं सत्रासाहीयमाभीशवं बृहद्भारद्वाजमाथर्वणम् ।
तान्युद्धरति ॥ ३ ॥

उत्तरं षड्रचमिति प्रयद्भाव ( सा० ८९२-७ ) आशुरर्षे-(सा० ८९८-
९०३)त्यनयोः षड्रचयोरुत्तरमित्यर्थः ॥

15 तत्रेयं प्रथमस्य क्लृप्तिः—उपास्मै ( सा० ६५१-३ ) उपोषु
(सा० १३३५-७) पवमानस्य ते कवे ( सा० ६५७-६ ) इति
बहिष्पवमानम् । अग्न आयाहि ( सा० ६६०-७१ ) इत्याज्यानि ।
प्र सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रमाश्वं (ऊ०
( ऊ० १. २. ११ ) जराबोधीय-(ऊ० १४.१.१२)मिति सामतृचः ।
20 प्र सोम देववीतय ( सा० ७६७-८ ) इति यौधाजयं ( ऊ० १.
२. १३ ) तिसृषु । औशन-(ऊ० १.१.४ )मन्त्यम् । रथन्तरं
(र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ०
23 १. १. ६) च कालेयं ( ऊ० १. १. ७) चेति पृष्ठानि ।

---

3. MyBT. स्तोत्र for स्तोम
4. V²KTAMy. अनभ्यास उक्तः ; C. अनभ्यास उक्तेः for अनभ्यासक्तः
6. V²CKTMyB. स्व for स्वं
21. LCV², before रथन्तरं add : अथ

स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १. १. ८)। अया पवस्व देवयुः-पवते हर्यतो हरिर् (सा० ७७२-३) इति सफ-(ऊ० १. २. १५)पौष्कले (ऊ० ९. २. २)। प्र सुन्वानायान्धस (सा० ७७४) इत्यौदल-(ऊ० ११.२.३)गौतमे (ऊ० ११.२.१३)। काव-(ऊ० १. १. १३)मन्त्यम्। कावव्यतिरिक्ता एकर्चाः। 5
यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। सर्वं त्रिवृत्॥

इति प्रथममहः॥

**द्वितीयस्याह्नः**— पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-८९) इति बहिष्पवमानम्। अग्निं दूतम्-मित्रं वयम्-इन्द्रमिद्गाथिनः-इन्द्रे अग्ने-(सा० ७९०-८०२)त्याज्यानि। 10
वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्र-हाविष्मते (ऊ० ७.१.१०)। पुनानः सोम धारये-(सा० ६७५-६)ति आयास्ये (ऊ० १.२.२०; २.१.१)। वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७.१.६)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च माधुच्छन्दसं (ऊ० २. १. ४) चेति पृष्ठानि। 15
यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे (ऊ० १.१०)। पवस्वेन्द्रमच्छे-(सा० ६९२; ६९४)ति शङ्कु-(ऊ० २.१.६)सुज्ञाने (ऊ० २.१.७)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसितं (ऊ० ११.२.२०) कौत्सम् चैडं च (ऊ० २०. १. ५)। वृषा मतीना-(सा० ८२१-३)मिति याम-(ऊ० २.१.१०)मन्त्यम्। 20
शङ्कुसुज्ञानासितान्येकर्चानि॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। औशन-(ऊ० १. १. ४)मौपगव-(ऊ० १०. २. १)माष्टादंष्ट्र-(ऊ० २. १. १२) मित्युक्थानि। सर्वं पञ्चदशम्॥

इति द्वितीयमहः॥ 25

---

9. MyK. कवे for वयम्

**तृतीयस्याह्नः**—दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्र-मिन्दवो-राजा मेधाभिरीयते ( सा० ८३०-५ ) तं त्वा नृम्णानि बिभ्रतम्-इषे पवस्व धारये-( सा० ८३०-४३ )ति बहिष्पवमानम् । अग्निना-मित्रं हुवे-इन्द्रेण ता हुवे ( सा० ८४४-५५ ) इत्याज्यानि । उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं क्षुल्लक-वैष्टम्भम् ( ऊ० २.१.१३ ) च । अभि सोमास आयव (सा० ८५६-८) इति पौरुमद्गमाद्यायाम् ( ऊ० २.१.१४ ) । गौतमा-(ऊ० २.१.१५)न्तरिक्षे (र० १. १. ६) तृचयोः । आष्कारणिधन-मध्यास्यायाम् (ऊ० २. १. १६) । तिस्रो वाच (सा० ८५९-६१) इति अङ्गिरसां संक्रोशोऽ-(ऊ० २. १. १७)न्त्यः । रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च वयं घ त्वे-(सा० ८६४-६)ति महावैष्टम्भं (ऊ० २.१.१८) च । तरणिरित् सिषासति (सा० ८६७-८) इति रौरवं (ऊ० २. १. १९) चेति पृष्ठानि । तिस्रो वाच उदीरत (सा० ८६६-७१) इति गायत्रं चाग्नेश्चार्कः ( र० ४.२.३ ) । आ सोता परि षिञ्चत ( सा० १३६४ ) इति सखाय आ निषीदते-(सा० ११५७)ति वाचश्च साम ( ऊ० २. २. १ ) शौक्तं (ऊ० २. २. २) च एकर्चयोः । सुतासो मधुमत्तमा ( सा० ८७२-४ ) इति त्वाष्ट्रीसामनी स्वाराद्यत्रिणिधने (ऊ० १५.२.१ ; २.२.४) । पवित्रं त ( सा० ८७५-७ ) इत्यरिष्ट-(र० १. १. ८)मन्त्यम् । यज्ञायज्ञीय-मग्निष्टोमसाम (ऊ० १. १. १४) । प्रमंहिष्ठीयं ( ऊ० २.२.५ ) हारिवर्णं ( ऊ० २.२.६ ) तैरश्च्य-( ऊ० १. २. ७ )मित्युक्थानि । सर्वं सप्तदशम् ॥

इति तृतीयमहः ॥

**चतुर्थस्याह्नः**—पवमानो अजीजनत् (सा० ८८६-६१) पुनानो अक्रमीदभि (सा० ६२४-६) प्रयद्गावो न भूर्णयो (सा० ८६२-७) हिन्वन्ति सूरमुस्रयः ( सा० ९०४-६ ) इति बहिष्पवमानम् । अग्निर्वृत्राणि जङ्घनत् ( सा० १३६६-८ ) अयं वां मित्रावरुणा

( सा० ६१०-२ ) इन्द्रो दधीचो अस्थभिर् ( सा० ६१३-५ ) इयं वामस्य मन्मनः (सा० ६१६-८) इत्याज्यानि । पवस्व दक्षसाधन (सा० ६१९-२१) इति गायत्रं चादारसृच्च (ऊ० ७. २. २)। तवाहं सोम रारणे-(सा० ९२२-३)त्याष्टादंष्ट्रं ( ऊ० २. २. ९) च स्वः-पृष्ठं चाङ्गिरसम् (ऊ० २.२.११) । उद्वुवाह अस्येति वासिष्ठ- 5
(ऊ० ७. २. ६)मन्त्यम् । बृहच्च (र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च त्रैशोकं ( ऊ० २. २. १३ ) च पृश्नि (ऊ० २. २. १४) चेति पृष्ठानि । परि प्रिया दिवः कवि-(सा० ९३५-७)रिति गायत्रं स्वाशिरामर्कः (र० ४. १. ६) । त्वं ह्यङ्ग दैव्य ( सा० ६३८ ) सोमः पुनानः ऊर्मिणे-( सा० ८४० )ति 10
बृहत्क-(ऊ० २. २. १६)क्रोशे ( ऊ० १५. २. ११ ) पुरोजिती वो ( सा० ६६७ ) नानदं ( ऊ० २. २. १८ ) च त्वाष्ट्रीसाम च यदूर्ध्वेडम् (ऊ० ७. २. १०)। प्रो अयासी-(सा० ११५२-४)दिति लौश-( ऊ० ७. २. ११ )मन्त्यम् । बृहत्कक्रोशनानदान्येकर्चानि । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। सैन्धुक्षितं (ऊ० २.२.२०) 15
सौभर-( ऊ० १. १. १६ )मुद्वंशीय-( ऊ० ६. १. ८ )मित्युक्थानि । सर्वं पञ्चदशम् ॥ ३ ॥

इति चतुर्थमहः ॥ २१ ॥

---

## पञ्चममहः

पञ्चमस्याह्नः कल्पः—

पवमानस्य विश्वविद् (सा० ९५८-६०) यत् सोम चित्रमुक्थ्यम् 20
(सा० ९९९-१००१) असृक्षत प्र वाजिनः (सा० १०३४-६) । उत्ते शुष्मास ईरते ( सा० १२०५-९ ) आ ते दक्षं मयोभुवम् (सा० ११३७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥ 24

17. LCV². Om. सर्वं पञ्चदशम्

इन्द्राग्नी युवामिम (सा० ९९१-३) इत्यैन्द्राग्नम्। ऋषभ-जराबोधीये उद्धरति। उत्सेधस्य लोकेऽग्नेस्त्रिणिधनम् (ऊ० १५. २. १५) असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च गौषूक्तं (ऊ० ७. २. १६) च। पवस्व वाजसातय (सा० १०१६-८) इति श्यावाश्वा-(ऊ० १५. २. १९) न्धीगवे (ऊ० १५. २. २०)। उद्धरति द्विपदातिच्छन्दसः ॥१॥

समानमितरम् उत्तमेनाह्ना देवानां पञ्चरात्रस्य ॥ २ ॥

इति। आ ते दक्षं मयोभुवमित्यन्तं बहिष्पवमानम्। होता देवो अमर्त्यः (सा० १४७७-६) पुरूरुणा चिद्ध्यस्ति (सा० ६८५-७) उत्तिष्ठन्नोजसा सह (सा० ६८८-९०) इन्द्राग्नी युवामिमे (सा० ६६१-३) इत्याज्यानि। अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ६.२.३) च। परीतो षिञ्चता सुत-(सा० १३१३-५)मिति वाभ्र-(ऊ० १२.२.१२)माद्यायाम्। मानवानूपे (ऊ० १५.२.१३-४) तृचयोः। अग्नेस्त्रिणिधनमध्यास्यायाम् (ऊ० १५.२.१५)। अयं सोम (सा० १४७१-३) इतीहवद्वासिष्ठ-(ऊ० १५.२.५)मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ६) च वैयश्वं (ऊ० ४. १. १६) चेति पृष्ठानि। असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च गौषूक्तं (ऊ० ७. २. १९) च। स सुन्वे यो वसूनाम् (सा० १०६६-७) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति दीर्घ-(ऊ० ३. २. १२) श्रुध्ये (ऊ० ९. १. १४)। पवस्व वाजसातय (सा० १०१६-८) इति श्यावाश्वा-(ऊ० १५.२.१६)न्धीगवे (ऊ० १५. २. २०)। धर्ता दिवः (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽन्त्यः (र० ३.२.१०)। ककुबिष्णिहावेकर्चौ। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। साकमश्वं (ऊ०१.१. १५) त्रैककुभं (ऊ० ६. १. ७) नार्मेध-(ऊ० १. १. १७)मित्युक्थानि। गौरीवितं

(ऊ० १. २. १७) षोडशिसाम। रात्रिः संधिः। सर्वं सप्तदशम्। एकस्तोमन्यायेन संधेरावापोऽभ्यासो वा ॥ २ ॥

इति पञ्चममहः ॥ २२ ॥

इति पञ्चशारदीयः समाप्तः ॥

---

व्रतमध्यः पञ्चरात्रः 5

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्रः (तां० ब्रा० २१. १५) इत्यनुवाकेन व्रतवत्पञ्चरात्र उक्तः। तस्य कल्पः—

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्रः ॥१॥

एकाहक्लृप्ताः ॥ २ ॥ 10

इति। क्लृप्तो ज्योतिष्टोमो गौर्वार्कजम्भस्य लोक (आ० क० ३.१.१-२) इति खण्डेनैकाहप्रकरणोक्तैर्ज्योतिष्टोमादिभिरेते क्लृप्ताः। ज्योतिष्टोमोऽग्निष्टोमः प्रथममहः। गौरुक्थ्यो द्वितीयम्। महाव्रतं तृतीयम्। गौरुक्थ्यश्चतुर्थम्। आयुरतिरात्रः पञ्चमम्। तस्याहिनिकी रात्रिः। प्रथमादह्नोऽन्यत्र सदसि बहिष्पवमानस्तवनम्। प्राक् धिष्ण्य- 15 विहरणान्निष्क्रम्य तृणप्रासनप्रभृतिसमापनम्। दधिभक्षान्तानि चत्वार्यहानि। उदवसानीयान्तं पञ्चमम् ॥ इति ॥ २ ॥

इति व्रतमध्यः पञ्चरात्रः ॥ २३ ॥ 18

---

11. V²CL. Om. क्लृप्तो

17. MyKABT. Om. इति

## ऋतूनां षडहः

अथ षडहास्त्रयः। पृष्ठ्यः षडहः । ऋतवो न प्रत्यतिष्ठन् ( तां० ब्रा० २२. १ ) इत्यनुवाकेन ऋतुषडह उक्तः । तस्य कल्पः—

5 पृष्ठ्यः षडहः समूढो वा व्यूढो वा ॥ १ ॥

इति । ब्राह्मणेन दशरात्रे पृष्ठ्यः षडहो व्यूढ उक्तः । अयं चावच्छिन्नसमूढः स्यादिति केषांचिन्मतम् । व्यूढ इत्यन्येषाम् ॥ १ ॥

स्वमतमाह—

समूढस्त्वेव ॥ २ ॥

10 इति । अस्मिन् पक्षे बहुप्रबलोपपत्तिसद्भावादिति भावः। तथा च निदानम्— पृष्ठ्यमवच्छिन्नं व्यूहेत्समूहेदिति व्यूढः स्यादिति शाण्डिल्यायन (नि० सू० ५.५) इत्यादि । तत्र च स्वमत एव वक्तव्ये विकल्पोऽयं न्यासो व्यूहपक्षस्याप्याचार्यमतत्वान्न हेयत्वमिति प्रदर्शनार्थम् ॥ २ ॥

15 अत एवाह—

तस्योपास्मै गायता नर ( सा० ६५१-३ ) उपोषु जातमप्तुरम् ( सा० १३३५-७ ) पवमानस्य ते कवे ( सा० ६५७-८ ) इति प्रथमस्याह्नो बहिष्पवमानम् ॥ २ ॥

औदलम् ( ऊ० ६. २. १६ ) आसितं ( ऊ० १५. १. १७) 20 त्वाष्ट्रीसाम (ऊ० ६. १. ८) । अविक्लृप्तं चतुर्थमहस्त्वाष्ट्रीसाम (ऊ० १३. २. ६) क्रौञ्चम् ( ऊ० १५. १. १ ) एते स्वराः 22 पृष्ठ्यस्य गौरीवितलोके उद्वंशपुत्राद्रात्रिमुपयन्तीति यदि व्यूढः ॥ ३ ॥

---

3. MyCKV²BT. Om. तस्य कल्पः
5. CTKAMyB. Om. व्यूढो वा
6. CTKAMyB. Om. इति
11. MyB. समूढः , C. व्यूहः for व्यूढः

इति। नवाहयोगाभावात् प्रथमेऽहनि प्रत्नवत् बहिष्पवमानस्य निवृत्तिः। एते स्वरा इति एतानि स्वाराणि सामानीत्यर्थः। एते स्वरा इति वक्ष्यमाणेन वचनेनैतेषामेव ग्रहणार्थमुक्तमिदम्। अन्वहं गौरीवितस्य सत्रप्रमुक्तत्वात् इह नानाः स्वरा विहिताः। चतुर्थं त्वहरविकृतम्। तत्र हि षोडशित्वेन गौरीवितस्य विधानात् असंचारायापूर्वमेव स्वरो व्यधायि ॥ 5

तत्र प्रथमस्याह्नः क्लृप्तिः—उपास्मै (सा० ६५१-३) उपोषु (सा० १३३५-७) पवमानस्य ते कवे (सा० ६५७-८) इति बहिष्पवमानम्। अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१) त्याज्यानि। प्र सोमासो विपश्चितः (सा० ७६४-६) इति गायत्र-माश्वं(ऊ० ६. २. १२) सोमसामे-(ऊ० १४.१.१३)ति सामतृचः। प्र सोम देववीतय (सा० ७६७-८) इति यौधाजयं (ऊ० १.२.१३) तिसृष्वौशान-(ऊ० १. १. ४)मन्त्यम्। रथन्तरं (र० १.१.१) च वामदेव्यं नौधसं च कालेयं (ऊ० १. १. ५-७) चेति पृष्ठानि। पृष्ठे रथमतिवहेयुरित्यादिनोक्ताः पृष्ठधर्माः भवन्ति। प्र सोमासो मदच्युत (सा० ७६९-७१) इति गायत्र-संहिते (ऊ० १.२.१४)। अया पवस्व देवयुः-पवते हर्यतो हरिर् (सा० ७७२-३) इति सफा-(ऊ० १.२.१५)क्षारे (ऊ० १. २. १६)। प्र सुन्वानायान्धस (सा० ७७४) इति औदल-(ऊ० ११.२.३)गौतमे (ऊ० १.२.१८)। काव-(ऊ० १.१.१३)मन्त्यम्। अन्त्यवर्जमेकर्चाः। यज्ञायज्ञीय-मग्निष्टोमसाम (ऊ० १. १. १४)। सर्वं त्रिवृत्। सर्वत्र पथ्या विष्टुतयः ॥ 10 15 20

द्वितीयस्याह्नः—पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-८९) इति बहिष्पवमानम्। अग्निं दूतं-मित्रं 24

---

4. MyK. युक्तत्वात्; V²T. प्रयुक्तत्वात् for प्रमुक्तत्वात्
5. MyKTA. अविदितं; B. अविक्लृप्तं for अविकृतम्
6. B. पूर्वम् for अपूर्वम्
15. CV²MyKAT. Om. भवन्ति

वयम् इन्द्रमिद्गा-चतुर्ऋचम् । इन्द्रे अग्ने-(सा० ७६०-८०२)त्याज्यानि । चतुर्ऋचे अन्त्याया उद्धारः । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च यौक्ताश्वं (ऊ० १. २. १६) च । पुनानः सोम धारये-(सा० ६७५-६)ति आयास्ये (ऊ० १.२.२०; २.१.१) । वृषा शोण
5 (सा० ८०६-८) इति वासिष्ठ-(ऊ० २.१.२)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च माधुच्छन्दसं (ऊ० २. १. ४) चेति पृष्ठानि । यस्ते मद (सा० ८१५-७) इति गायत्रं च हाविष्मतं (ऊ० २. १. ५) च । पवस्वेन्द्रमच्छे-(सा० ६६२; ६६४)ति शङ्कु (ऊ० २.१.६)सुज्ञाने (ऊ०
10 २.१.७) एकर्चयोः । अयं पूषा रयिर्भग (सा० ८१८-२०) इत्यासित-(ऊ० ११.२.२०)माद्यायाम् । क्रौञ्चं (ऊ० १५. १. १७) तिसृषु । वृषा मतीनां पवत (सा० ८२१-३) इति याम-(ऊ० २. १. १०)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । साकमश्व-(ऊ० १.१.१५)मामहीयव-(ऊ० १. १. १)माष्टादंष्ट्र-(ऊ०
15 २.१.१२)मित्युक्थानि । सर्वं पञ्चदशम् ॥

तृतीयस्याह्नः—दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो-राजा मेधाभिरीयते-तं त्वा नृम्णानि बिभ्रतम्-इषे पवस्व धारय (सा० ८३०-४३) इति बहिष्पवमानम् । अग्निना-मित्रंहुइन्द्रेण ता हुवे (सा० ८४४-५५) इत्याज्यानि । उच्चा ते
20 जातमन्धस (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च । अभि सोमास आयव (सा० ८५६-८) इति पौरुमद्गमाद्यायाम् (ऊ० २.१.१४) । गौतमा-(ऊ० २.१.१५)न्तरिक्षे (र० १.१.६) तृचयोः । आष्कारणिधनमध्यास्यायाम् (ऊ० १८.१.२) । तिस्रो वाच (सा० ८५९-६१) इति अङ्गिरसां संक्रोशोऽ-(ऊ० २.१.१७)
25 न्त्यः । वैरूपं (ऊ० ४.१.२०) च वामदेव्यं (ऊ० १.१.५) च महावैष्टम्भं (ऊ० २.१.१८) च रौरवं (ऊ० २.१.१९) च
27 पृष्ठानि । तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं

25. V². वराजं for वैरूपं ; V² C. after वैरूपं ins. पञ्चनिधनं

च पाष्ठौहं च । आ सोता परि षिञ्चते-( सा० १३९४ )ति सखाय आ निषीदते-(सा० ११५७-९)ति वाचश्च साम ( ऊ० २. २. १ ) शौक्तं ( ऊ० २. २. २ ) चैकर्चयोः । सुतासो मधुमत्तमा ( सा० ८७२-४ ) इति त्वाष्ट्रीसामनी स्वाराद्यत्रिणिधने (ऊ० १५.२.१; २.२.४) । पवित्रं त ( सा० ८७५-७ ) इत्यरिष्ट- 5
(र० १. १. ८)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम ( ऊ० १. १. १४ ) । प्रभँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-(ऊ० २. २. ७)मित्युक्थानि । सर्वं सप्तदशम् ॥

चतुर्थस्याह्नः—प्रत आश्विर्नाः ( सा० ८८६-८ ) पवमानो अजीजनत् (सा० ८८९-९१) प्रयद्गावो न (सा० ८९२-७) षड्चम । 10
आशुः षड्चम् (सा० ८९८-९०३) । हिन्वन्ती-(सा० ९०४-६)ति बहिष्पवमानम् । जनस्य-अयं वाम्-इन्द्रो दधी-इयं वामस्ये-(सा० ९०७-१८)त्याज्यानि । पवस्व दक्ष साधन (सा० ९१९-२१) इति गायत्रं चाथर्वणं (र० १. १. ९) च निधनकामं (ऊ० २. २. ८) च । तवाहं सोम रारणे-( सा० ९२२-३ )त्याष्टादंष्ट्रम् ( ऊ० २.२.९ ) 15
आभीशवं (ऊ० २. २. १०) स्वःपृष्ठमाङ्गिरसम् (ऊ० २.२.११) । पुनानो अक्रमीदभी-(सा० ९२४-६)ति सत्रासाहीय-(ऊ० २.२.१२) मन्त्यम् । वैराजं (र० ७.२.५) च वामदेव्यं ( ऊ० १.१.५ ) च त्रैशोकं (ऊ० २.२.१३) च पृश्नि (ऊ० २.२.१४) चेति पृष्ठानि । परि प्रिया दिवः कवि-( सा० ९३५-७ )रिति गायत्रं चौर्णायवं 20
(ऊ० २.२.१५) च । त्वं ह्यङ्ग-सोमः पुनान ऊर्मिणे-(सा० ९३८-४२)ति बृहत्का-(ऊ० २.२.१६)तीषादीये (ऊ० २.२.१७) । पुरोजिती वो अन्धस ( सा० ९९७-९ ) इति नानदा-(ऊ० २. २. १८,न्धीगवे (ऊ० १.१.१२) । सोमः पवते जनिता मतीनाम् (सा० ९४३-५) इति वात्सप्र-(ऊ० २.२.१९)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० 25

---

7. V²C. सन्धुक्षितं सोभरं वसिष्ठस्य प्रियम् for प्रभंहिष्ठीयं ... तैरश्च्यम्
13. CLV². गायत्राथर्वणे for गायत्रं चाथर्वणं

(ऊ० १. १. १४)। सैन्धुक्षितं (ऊ० २. २. २०) सौभरं (ऊ० १.१.१६) वसिष्ठस्य प्रिय-(ऊ० ३.१.१)मित्युक्थानि। गौरीवितं (ऊ० ३. १. २) षोडशिसाम। सर्वमेकविंशम् ॥

पञ्चमस्याह्नः—गोवित्पवस्व (सा० ६५५-७) पवमानस्य विश्ववित् (सा० ६५८-६०) प्र सोमासो अधन्विषुः (सा० ६६१-७) सप्तर्चम्। प्र कविः (सा० ६६८-७४) सप्तर्चम्। यवं यवं (सा० ९७५-८) चतुर्ऋचम्। यास्ते (सा० ६७१-८१) इति बहिष्पवमानम्। तवाश्चि-पुरूरुणो-त्तिष्ठन्न्-इन्द्राग्नीयुवा-(सा० ६८५-६३)मित्याज्यानि। अर्षा सोम द्युमत्तम (सा० ६६४-६) इति गायत्रं च यण्वं (र० १.२.१) च शाकल-(ऊ० ३.१.३)वार्शे (ऊ० ३.१.४)। सोम उष्वाणः सोतृभि-(सा० ६६७-८)रिति मानवं (ऊ० ३.१.५) चानूपं (ऊ० ३.१.६) च वाम्रं (ऊ० ३.१.७) चाग्नेस्त्रिणिधनम् (ऊ० ३.१.८)। यत्सोम चित्रमुक्थ्य-(सा० ६६६-१००१)मिति शैशव-(ऊ० ३.१.६)मन्त्यम्। महानाम्न्यश्च वामदेव्यं (ऊ० १.१.५) च बार्हद्गिरं (र० १.२.२) च रायोवाजीयं (र० १.२.४) चेति पृष्ठानि। असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च सन्तनि (ऊ० ३.१.१०) च। अभि द्युम्नं बृहद्यशः (सा० १०११-२) प्राणा शिशुर्महीना-(सा० १०१३-५)मिति च्यावन-(ऊ० ३.१.११)क्रोशे (ऊ० ३.१.१२)। पवस्व वाजसातय (सा० १०१६-८) इति त्वाष्ट्रीसाम (ऊ० ८. २. ६) च यत्साभ्यासम्। ऋषभश्च शाक्वरः (र० १.२.५)। पार्थं (ऊ० ३.१.१४) चाष्टेडं च पदस्तोभं (र० १.२.६) च। इन्दुर्वाजी पवते गोन्योघा (सा० १०१६-२१) इति दाशस्पत्य-(ऊ० ३.१.१५)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। संजयं (ऊ० ३. १. १६) च सौमित्रं (ऊ० ३.१.१७) च महावैष्टम्भं (ऊ० ३.१.१८) चेत्युक्थानि ॥

सर्वं त्रिणवम् ॥

---

10. L. शाकलं च वार्शं च for शाकलवार्शे ; V². वात्सं च for शाकलवार्शे

15 My. जराबोधीयम् for रायोवाजीयम्

षष्ठस्याह्नः—ज्योतिर्यज्ञस्य (सा० १०३१-३) असृक्षत प्र वाजिनः (सा० १०३४-६) पवस्व देववीरति-( सा० १०३७-४६ )दशर्चम् । सना-( सा० १०४७-५६ )दशर्चम् । तरत्सम-( सा० १०५७-६० ) चतुर्ऋचम् । एते सोमा ( सा० १०६१-३ ) इति बहिष्पवमानम् । इमम्-प्रति-भिन्धि-यज्ञस्ये-( सा० १०६४-७५ )त्याज्यानि । इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं च इषोवृधीयं (ऊ० ३.१.१९) च गायत्री-क्रौञ्चं (ऊ० ३.१.२०) च वाजदावर्यश्च (ऊ० ३.२.१) रैवत्यश्च (र० १.२.७)। मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)ति औक्ष्णोरन्ध्रे च स्वारैडे (ऊ० ३.२.२-३)। वाजजिच्च (ऊ० ३.२.४) वरुणसाम ( ऊ० ३. २. ५) च गोष्ठं (ऊ० ३. २. ६) च । एतमु त्यं दक्ष क्षिप (सा० १०८१-३) इतीहवद्वामदेव्य-( ऊ० ३.२.७) मन्त्यम् । रेवतीषु वारवन्तीयं (ऊ० ३. २. ८) च वामदेव्यं ( ऊ० १. १. ५ ) च ऋषभश्च रैवतः ( र० १. ८. ) श्येनश्चे-(ऊ० २३.१.१८)ति पृष्ठानि । परिस्वानो (सा० १०९३-५) गायत्रं च त्रीणि वैदन्वतानि (ऊ० ३.२.९-११)। स सुन्वे यो वसूनां (सा० १०९६-७) तं वः सखायो मदाये-( सा० १०९८-१०० )ति दीर्घं (ऊ० ३.२.१२) च कार्णश्रवसं (ऊ० ३.२.१३) च। सोमाः पवन्त इन्दव (सा० ११०१-३) इति स्वारं च क्रौञ्चं (ऊ० १६.१.१) च मधुश्चुन्निधनं ( ऊ० ३. २. १५ ) च क्रौञ्चे च वाङ्गिन-धनैडे (ऊ० ३.२.१६-७)। अया पवस्वे-(सा० ११०४-६)ति श्नौष्ट-(ऊ० ३. २. १८)मन्त्यम् । सोमाः पवौहो इति स्वारं क्रौञ्चम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। गूर्दं (ऊ० ३.२.१९) च भद्रं (र० १. २. १०) चोद्वंशपुत्र-(ऊ० ३.२.२०)श्चेत्युक्थानि । सर्वं त्रयस्त्रिंशम् ॥

आहीनिकी रात्रिः पञ्चदशिनी । त्रिवृत्संधिः । षोडशि नास्ति । उद्वंशपुत्राद्रात्रिमुपयन्तीति वचनात् ॥

इति व्यूढः समाप्तः ।।

## समूढः

समूढस्य क्लृप्तिमाह—

अथ यदि समूढः । एतदेव प्रथमस्याह्नो बहिष्पवमानम् । एते स्वराः ॥ १ ॥

द्वितीयस्याह्नो वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् । पञ्चमस्याह्नः पार्थस्य लोक आकूपारं यन्नवमेऽहनि (ऊ० १५. २. २१) ॥ २ ॥

सांवत्सरिकः समूढः उत्तरस्याविक्लृप्ता बृहत्यः सर्वस्य षडहस्य ॥ ३ ॥

इति । समूढस्य प्रथमस्त्र्यहः सर्वो व्यूढवत् । द्वितीयेऽहनि वृषा शोण इति वासिष्ठस्य स्थाने पार्थमिति विशेषः ॥

चतुर्थस्याह्नः—पवमानो अजीजनदित्यनुवाकोक्तो गवामयनिकः समूढः उत्तरस्य त्र्यहस्य कर्तव्यम् । अभीवर्तकालेयानुकल्पनस्य गवामयनप्रयुक्तत्वात् अस्य सर्वस्य षडहस्य दाशरात्रिक्य एव माध्यंदिनबृहत्यः । तत्र चतुर्थस्याह्नः क्लृप्तिः । पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्र यद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८९८-९०३) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) इति बहिष्पवमानम् । अग्निर्वृत्राणि जङ्घनत् (सा० १३९९-८) अयं वां मित्रावरुण इन्द्रो-दधीचो अस्थभिर्-इयं वामस्य मन्मनः (सा० ९१०-१८) इत्याज्यानि । पवस्व दक्षसाधनः (सा० ९१९-२१) इति गायत्रं चाथर्वणं (र० १.१.९) च निधनकामं (ऊ० २.२.८) च । तवाहं सोम रारण-(सा० ९२२-३)त्याष्टादंष्ट्रम् (ऊ० २. २. ९) आभीशवं (ऊ० २. २. १०) स्वःपृष्ठमाङ्गिरसम् (ऊ० २. २. ११)। सोमः पवते जनिता मतीना-(सा० ९४३-५)मिति जनित्र-(ऊ० ८.२.१)मन्त्यम् । वैरूपं (ऊ० ४.१.२०) च वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं

11. V²CLB. Om. पवमानो अजीजनदित्यनु ... चतुर्थस्याह्नः क्लृप्तिः

(ऊ० २. २. १३) च पृश्नि (ऊ० २. २. १५) चेति पृष्ठानि । परि प्रिया दिवः कवि-(सा० ९३५-७,रिति गायत्र-मौर्णायवं (ऊ० २. ८) च । त्वं ह्यङ्ग दैव्य ( सा० ६३८-६ ) सोमः पुनानः ऊर्मिणे-(सा० ६४०-२)ति बृहत्का-(ऊ० २. २. १६)तीषादीये (ऊ० २.२.१७)। पुरोजिती वो अन्धसः (सा० ६६७-६) इति नानदा- 5
( ऊ० २. २. १८ )न्धीगवे। प्र त आश्विनी-(सा० ८८६-८)रिति लौश-( ऊ० ८. २. २ )मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। सैन्धुक्षितं (ऊ० २. २. २०) सौभरं (ऊ० १. १. १६) वसिष्ठस्य प्रिय-(ऊ० ३.१.१)मित्युक्थानि। गौरीवितं (ऊ० ३.१.२) षोडशिसाम। सर्वमेकविंशम्॥ 10

पञ्चमस्याह्नः—पवमानस्य विश्ववित् (सा० ९५८-६०) यत्सोम चित्रमुक्थम् ( सा० ६६६-१००१ ) प्र सोमासो अधन्विषुः (सा० ९६१-७) प्र कविर्देववीतये (सा० ६६८-७४) यवं यवन्तो अन्धसा ९७५-८) यास्ते धारा मधुश्चुत (सा० ६७६-८१) इति बहिष्पवमानम्। अग्ने स्तोमं मनामहे (सा० १४०५-७) पुरूरुणा चिद्ध्यस्ति (सा० 15
६८५-७ ) उत्तिष्ठन्नोजसा सह ( सा० ६८८-६० ) इन्द्राग्नी युवामिमे (सा० ६६१-३) इत्याज्यानि । अर्षा सोम द्युमत्तम (सा० ६६४-६) इति गायत्रं च यण्वं (र० १.२.१) च शाकलं (ऊ० ३.१.३) च वार्शं ( ऊ० ३.१.४ ) च। सोमा उष्वाणः सोतृभि-(सा० ६६७-८)रिति मानवं चानूपं (ऊ० ३.१.५-६) च वाभ्रं 20
(ऊ० ३.१.७) चाग्नेस्त्रिणिधनम् (ऊ० ३.१.८) । इन्दुर्वाजी-( सा० १०१६-२१)ति सम्पान्त्य-( ऊ० ८. २. ५)मन्त्यम्। महानाम्न्यश्च वामदेव्यं ( ऊ० १. १. ५ ) च बार्हद्गिरं (र० १. २. २) च रायोवाजीयं (र० १. २. ४) चेति पृष्ठानि। असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च संतनि (ऊ० ३.१.१०) च। अभि 25
द्युम्नं बृहद्यशः (सा०१०११-२) प्राणा शिशुर्महीना-(सा०१०१३-५)मिति 26

च्यावन-(ऊ० ३.१.१०)क्रोशे (ऊ० ३.१.१२)। पवस्व वाजसातये (सा० १०१६-८) इति त्वाष्ट्रीसाम (ऊ० ८.२.६) च ऋषभश्च शाक्वरः (ऊ० र० १. २. ५) आकूपारं (ऊ० १५ २. २१) चाष्टेडं च पदस्तोभः (र० १. २. ६)। गोवित्पवस्वे-
5 (सा० ६५५-७)ति द्व्यभ्याघातं लौश-(ऊ० ८. २. ७)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। संजयं (ऊ० ३.१.१६) च सौमित्रं (ऊ० ३. १. १७) च महावैश्वमित्रं (ऊ० ३.१.१८) चेत्युक्थानि। सर्वं त्रिणवम्॥

षष्ठस्याह्नः—असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं
10 दश क्षिपः (सा० १२७३) पवस्व देववीरति (सा० १०३७-४६) सना च सोम जेषि च (सा० १०४७-५६) तरत्समन्दी धावति (सा० १०५७-६०) एते सोमा असृक्षते-(सा० १०६१-३)ति बहिष्पवमानम्। यमग्ने पृत्सुमर्त्यम् (सा० १४१५-७) प्रति वां सूर उदिते (सा० १०६७-६) भिन्धि विश्वा अभि द्विषः (सा० १०७०-२) यज्ञस्य हि
15 स्थ ऋत्विजे-(सा० १०७३-५)त्याज्यानि। इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं चेषोवृधीयं (ऊ० ३.१.१६) च गायत्री-क्रौञ्चं (ऊ० ३. १. २०) च वाजदावर्यश्च (ऊ० ३.२.१) रेवत्यश्च (र० १. २. ७)। मृज्यमानः सुहस्त्ये-(सा० १०७६-८०) त्यौक्ष्णोरन्ध्रे (ऊ० ३.२.२-३) वाजजिच्च (ऊ० ३.२.४)
20 वरुणसाम (ऊ० ६.२.५) चाङ्गिरसां गोष्ठः (ऊ० ३. २. ६)। अया पवस्वे-(सा० ११०४-६)तीहवद्वासिष्ठ-(ऊ० ३.२.७)मन्त्यम्। रेवतीषु वारवन्तीयं (ऊ० ३.२.८) च वामदेव्यं (ऊ० १.१.५) च ऋषभश्च शाक्वरः (र० १.२.५) श्येनश्चे-(र० १.२,६)ति पृष्ठानि।
24 परि स्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रं च त्रीणि

---

10. MyBKA. after वीरति ins. : दशार्चः

12. V²LC. अभिप्रियं for असृक्षत

23. MyBK. Om. शाक्वरः ; T. रैवतः for शाक्वरः

च वैदन्वतानि (ऊ० ३.२.९-११)। स सुन्वे यो वसूनाम् ( सा० १०९६-७) तं वः सखायो मदाये-(सा० १०९८-११००)ति दीर्घं (ऊ० ३.२.१२) च कार्णश्रवसं (ऊ० ३.२.१३) च। सोमाः पवन्ते (सा० ११०१-३) इति क्रौञ्चं (ऊ० १६.१.१) च त्रयाणामाद्याम्। मधुश्चिन्निधनं (ऊ०३.२.१५) च क्रौञ्चे (ऊ०३.२.१६-७) च वाङ्निधनैडे। ज्योतिर्यज्ञस्य ( सा० १०३१-३ ) मरुतां धेन्वन्त्यम् (ऊ० ८.२.११)। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। गूर्दं ( ऊ० ३.२.१९ ) भद्रो-(र० १.२.१०)द्वंशपुत्र ( ऊ० ३.२.२० ) उक्थानि। सर्वं त्रयस्त्रिंशम्। उद्वंशपुत्राद्रात्रिमुपयन्तीत्येतदत्रापि समम्। ऋतुषडहे कथं रात्रिरित्यारभ्य कर्तव्येति गौतमः ( नि० सू० ८. ११ ) इत्यविशेषेण निदानवचनात्। तत्र रात्रिराहीनिकी। पञ्चदशी संधिः॥

इतिः समूढः॥

इति ऋतूनां षडहः॥ २४॥

---

## आयुष्कामः षडहः

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्र (तां० ब्रा० २२. २) इत्यनुवाकेनायुष्कामः षडह उक्तः। तस्य कल्पः—

एष एव त्र्यहो य ऋतूनां यथा व्यूढे॥ १॥

तृतीयस्याह्नो वैरूपस्य लोके रथन्तरम् (रं० १. १. १)। सुतासो मधुमत्तम (सा० ८७२-४) इति त्रीणि त्वाष्ट्रीसामान्यैडं मध्ये (ऊ० २. २. ४) स्वारे अभितो (ऊ० ६. १. ८; १६. १. २) बृहत् तिसृषु (र० ४. १. ७)॥ २॥

ज्योतिर्गौरायुरतिरात्रः। एकाहक्लृप्ताः॥ ३॥

इति । अस्य प्रथमस्त्र्यहः ऋतुषडहवत् । द्वितीयस्याह्नो माध्यंदिनान्त्यं वासिष्ठम् (ऊ० २. १. २) । यथा व्यूढ इति विशेषवचनात् । तृतीयस्याह्नो वैरूपस्य लोके रथन्तरम् (र० १. १. १) । आर्भवस्तु तिस्रो वाच उदीरत (सा० ८६६-७१)
5 इति गायत्रं च पार्ष्ठौहं (ऊ० २. १. २०) च । आ सोता परि षिञ्चत (सा० १३६४) सखाय आ निषीदते-(सा० ११५७) वाचश्च साम (ऊ० २.२.१) शौक्तं (ऊ० २.२.२) चैकर्चयोः । सुतासो मधुमत्तमा (सा० ८७२-४) इति त्वाष्ट्रीसाम स्वारयो-राद्यमाद्यायाम् (ऊ० ६. १. ८) । ऐडं मध्यमायाम् (ऊ० १६.१.२)
10 स्वारयोरुत्तरमुत्तमायाम् (ऊ० १५. १. १) । बृहत्तिसृषु (र० ४. १. ७) । पवित्रं त (सा० ८७५-७) इति अरिष्टमन्त्य-(र० १.१.८)मिति ॥

ज्योतिष्टोमोऽग्निष्टोमश्चतुर्थमहः । अत्र तृतीयचतुर्थयोरह्नोरपि रथन्तरपृष्ठत्वेन जामिता स्यादिति तत्परिहारार्थं तृतीयस्यार्भवे
15 बृहदनुकल्पनम् । गौरुकूथ्यः पञ्चममहः । आयुरतिरात्रः षष्ठम् । ज्योतिरादयः एकाहक्लृप्ताः ॥ ३ ॥

इति आयुष्कामः षडहः ॥ २५ ॥

---

## पृष्ठ्यावलम्बः षडहः

अभ्यासङ्गयः पञ्चाहो विश्वजिदतिरात्रः (तां० ब्रा० २२. ३)
20 इत्यनुवाकेन पृष्ठावलम्बः षडह उक्तः । तस्य कल्पः—

एष एव पञ्चाहो य ऋतूनां समूढोऽभ्यासक्तो बृहद्रथन्तर-
22 पृष्ठः ॥ १ ॥

---

21. LCV[2]. Om. यः

इति। ऋतुषडहवत् समूढो देवपञ्चरात्रवत् अभ्यासक्तो बृहद्रथन्तर-पृष्ठः पञ्चाहः ॥ १ ॥

प्रथमस्याह्नः स्वादिष्ठार्भवीया ॥ २ ॥

द्वितीयस्याह्नो वासिष्ठमन्त्यम् (ऊ० २. १. २)। स्वस्थाने पार्थम् (ऊ० ३. १. १४) ॥ ३ ॥

चतुर्थस्याह्नः और्णायवस्योपरिष्टात् बृहद्भारद्वाजम् (ऊ० १५.२.१०) आन्धीगवस्य शुद्धाशुद्धीयम् ( ऊ० १६. १. ३ ) उद्धरति षोडशिनम् ॥ ४ ॥

पञ्चमस्याह्नः सन्तानिन उपरिष्टाद् ऐडं च सैन्धुक्षितं (ऊ० १६. १. ४) गौषूक्तं (ऊ० ७. २. १६) च ॥ ५ ॥

इति। उपास्मै गायता नर ( सा० ६५१-३ ) उपोषु जातमप्तुरम् ( सा० १३३५-७ ) पवमानस्य ते कवे ( सा० ६५७-६ ) इति बहिष्पवमानम्। अग्न आयाहि वीतये (सा० ६६०-७१) इत्याज्यानि। प्र सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रमाश्वं (ऊ० ६.२.१२) सोमसामे-(ऊ० १४.१.१३)ति सामतृचः। प्र सोम देववीतय (सा० ७६७-८) इति यौधाजयं (ऊ० १.२.१३) तिसृषु। औशन-(ऊ० १.१.४)मन्त्यम्। रथन्तरं ( र० १. १. १ ) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १.१.८)। अया पवस्व ( सा० ७७२ ) पवते हर्यतो हरि-( सा० ७७३ )रिति सफा-( ऊ० १.२.१५)क्षारे (ऊ० १.२१.६)। प्र सुन्वानायान्धस (सा० १३८६-८) इत्यौदल-(ऊ० ११.२.३)गौतमे (ऊ० १.२.१८)। काव-(ऊ० १.१.१३) मन्त्यम्। सफाक्षारौदलान्येकर्चानि। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १४)। द्वे त्रिवृती सवने। पञ्चदशमेकम् ॥

**द्वितीयस्याह्नः**—पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वय-( सा० ७७५-८६ )मिति बहिष्पवमानम् । अग्निं दूत-(सा० ७९०-८०२)मित्याज्यानि । पुनानः सोम धारये-(सा० ६७५-७ )ति गायत्रं च यौक्ताश्वं ( ऊ० १.२.१६) चायास्ये
5 (ऊ० १.२.२०; २.१.१)। वृषा शोण (सा० ८०६-८) इति इहवद्वासिष्ठ-(ऊ० २.१.२)मन्त्यम् । षष्ठेऽह्नि वासिष्ठस्याप्रयोगात् संचारा-प्रसङ्गात् इहवद्वासिष्ठस्य पञ्चमे च पार्थस्य दशरात्रवत् स्थितिः । बृहच्च (र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० २.१.३) च माधुच्छन्दसं ( ऊ० २.१.४ ) चेति पृष्ठानि ।
10 यस्ते मदो वरेण्य ( सा० ८१५-७) इति गायत्रं च हाविष्मतं (ऊ० २.१.५) च । पवस्वेन्द्रमच्छे-(सा० ६९२; ६९४)ति शङ्कु-(ऊ० २.१.६)सुज्ञाने (ऊ० २.१.७)। अयं पूषे-(सा० ८१८-२०) त्यासित-(ऊ० ११.२.२०)क्रौञ्चे(ऊ० १५.१.१७)। वृषा मतीना-(सा० ८२१-३) मिति याम-( ऊ० २.१.१० )मन्त्यम् । शङ्कु-सुज्ञाने एकर्चयोः ।
15 यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। साकमश्व-(ऊ० १.१.१५)मामहीयव-(ऊ० १.१.१)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि । द्वे पञ्चदशे सवने। सप्तदशमेकम् ॥

**तृतीयस्याह्नः**—दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्र-मिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते ( सा० ८३३-५ ) तं
20 त्वा नृम्णानि बिभ्रतम् ( सा० ८३६-८ ) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम् । अग्निनाग्निः समिध्यते (सा० ८४४-८५५) इत्याज्यानि । उच्चा ते ( सा० ६७२-४ ) गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च । अभि सोमास आयव ( सा० ८५६-८ ) इति पौरुमद्गमाद्यायाम् (ऊ० २.१.१४) ।
25 गौतमा-( ऊ० १. १. १५ )न्तरिक्षे ( र० १. १. ६ ) तृचयोः । आष्कारणिधनमध्यास्यायाम् (ऊ० २.१.१६)। तिस्रो वाच (सा०
27 ८५९-६१) इति अङ्गिरसां संक्रोशोऽ-( ऊ० २. १. १७ )न्त्यः ।

2, V²C. कवे for वयम्

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च महावैष्टम्भं (ऊ० १.१.१८) च रौरवं (ऊ० १. १. २) चेति पृष्ठानि। तिस्रो वाच उदीरत (सा० ८६६-७१) इति गायत्रं च पार्ष्ठौहं (ऊ० २.१.२०) च। आ सोता परि षिञ्चत (सा० १३६४-५) सखाय आ निषीदत (सा० ११५७-६) इति 5 वाचश्च साम (ऊ० ७. १. १७) शौक्तं (ऊ० १४. २. ५) च। सुतासो मधुमत्तमा (सा० ८७२-४) इति त्वाष्ट्रीसामनी स्वार-त्रिणिधने (ऊ० १५. २. १-२)। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १. १. ८)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्णं (ऊ० 10 २.२.६) तैरश्च्य-(ऊ० २.२.७)मित्युक्थानि। द्वे सप्तदशे सवने। एकविंशमेकम् ॥

चतुर्थस्याह्नः—पवमानो अजीजनत् (सा० ८८६-९१) पुनानो अक्रमीदभि (सा० ६२४-६) प्रयद्धावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा०८९८-९०३) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) 15 इति बहिष्पवमानम्। अग्निर्वृत्राणि जङ्घनत् (सा० १३६६-८) अयं वां मित्रावरुण-इन्द्रो दधीचो अस्थभिर्-इयं वामस्य मन्मनः (सा० ६१०-८) इत्याज्यानि। पवस्व दक्षसाधन (सा० ६१९-२१) इति गायत्रं चाथर्वणं (र० १.१.६) च निधनकामं (ऊ० २. २. ८) च। तवाहं सोम रारणे-(सा० ९२२-३)त्याष्टादंष्ट्र-(ऊ० २.२.६) 20 माभीशवं (ऊ० २.२.१०) स्वःपृष्ठमाङ्गिरसम् (ऊ० २. २. ११)। सोमः पवते जनिता मतीनाम् (सा० ६४३-५) इति जनित्र-(ऊ० ८. २. १)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च पृश्नि (ऊ० २. २. १४) चेति पृष्ठानि। परि प्रिया दिवः कवि-(सा० 25 ९३५-७)रिति गायत्रं चौर्णायवं (ऊ० २.२.१५) च बृहद्भारद्वाजं 26

---

7. L, स्वराद्य V². स्वाराणि for स्वार

(ऊ० १५. २. १०) च। त्वं ह्यङ्ग दैव्य ( सा० ६३८-६ ) सोमः पुनान ऊर्मिणे-(सा० ६४०-४२)ति बृहत्का-( ऊ० २. २. १६ ) तीषादीये (ऊ० २.२१.७)। पुरोजिती वो अन्धस (सा० ६६७-६) इति नानदं ( ऊ० २. २. १८ ) चान्धीगवं (ऊ० १.१.१२) च शुद्धाशुद्धीयं (ऊ० २०.१.१८) च। प्र त आश्विनीर् (सा० ८८६-८) इति लौश-(ऊ० ८. २. २)मन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। सैन्धुक्षितं (ऊ० २. २. २०) सौभरं (ऊ० १. १. १६) वासिष्ठस्य प्रिय (ऊ० ३.१.१ मित्युक्थानि। उद्धरति षोडशिनं वैराजापायात्। तथा च सूत्रम्—विराडपाये चापैतीति। निदानं च—विराजामन्वपायं स्वराजो वपेयुरिति (नि० सू० ३. ७)। द्वे एकविंशे सवने। त्रिणवमेकम् ॥

पञ्चमस्याह्नः—पवमानस्य विश्ववित् (सा० ६५८-६०) यत्सोम चित्रमुक्थ्यम् ( सा० ६६६-१००.१ ) प्र सोमासो अधन्विषुः (सा० ६६१-७) प्र कविर्देववीतये (सा० ६६८-७४) यवं यवं नो अन्धसा ( सा० ६७५-८ ) यास्ते धारा मधुश्चुतः ( सा० ६७६-८१ ) इति बहिष्पवमानम्। अग्ने स्तोमं मनामहे (सा० १४०५-७) पुरूरुणा चिद्ध्यस्ति-उत्तिष्ठन्नोजसा सह-इन्द्राग्नी युवाम् ( सा० ६८५-६३ ) इत्याज्यानि। अर्षा सोम द्युमत्तम (सा० ६६४-६) इति गायत्रं च यण्वं (र० १.२.१) च शाकलं ( ऊ० ३. १. ३ ) च वार्शं (ऊ० ३.१.४) च। सोम उष्वाणः सोतृभिः ( सा० ६६७-८ ) इति मानवं ( ऊ० ३.१.५ ) चानूपं ( ऊ० ३.१.६ ) च। अग्नेस्त्रिणिधनम् (ऊ० ३.१.८)। इन्दुर्वाजी-(सा० १०१९-२१)ति संपान्त्य-(ऊ० ८.२.५)मन्त्यम्। रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) च बार्हद्गिरं ( र० १.२.२ ) च रायोवाजीयं ( र० १.२.४ ) चेति पृष्ठानि। असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च संतनि (ऊ० ३.१.१०) चैडं च सैन्धुक्षितं (ऊ० १६.१.४) गौषूक्तं ( ऊ० ७.२.१६) च। अभि द्युम्नं बृहद्यशः ( सा० १०११-२ ) प्राणा शिशुर्महीनाम्

(सा० १०१३-५) इति च्यावन-(ऊ० ५.३.११)क्रोशे (ऊ० ३.१.१२) पवस्व वाजसातये ( सा० १०१६-८ ) इति त्वाष्ट्रीसाम ( ऊ० ८.२.६) च ऋषभश्च शाक्वरः (र० १.२.५) । पार्थ-( ऊ० ३.१.१४) चाष्टेडं च पदस्तोभः ( र० १.२.६ ) । गोवित्पवस्वे-(सा० ९५५-७)ति द्व्यभ्याघातं लौश-( ऊ० ८. २. ७)मन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । संजयं (ऊ० ३.१.१६) च सौमित्रं (ऊ० ३.१.१७) च महावैश्वामित्रं (ऊ० ३.१.१८) चेत्युक्थानि । द्वे त्रिणवे सवने । त्रयस्त्रिंशमेकम् । सवनशेषत्वादुक्थानि त्रयस्त्रिंशान्येव स्युः ( ला० श्रौ० ९. १२. १६ )इति सूत्रम् ॥ २-५ ॥

षष्ठमहराह—

विश्वजिदतिरात्रः ॥ ६ ॥

इति । स च विश्वजितः पवस्वेन्द्रमच्छेति सत्रासाहीय-श्रुध्ये यचतिरात्र (आ० क० ३. ५. २) इत्यादिना क्लृप्तः ॥ ६ ॥

इति पृष्ठ्यावलम्बः षडहः ॥ २६ ॥

---

## सप्तरात्राः

## सप्तर्षिसप्तरात्रः

अथ सप्तरात्राः सप्त । पृष्ठ्यः षडहो महाव्रतमतिरात्र (तां० ब्रा० २२. ४ ) इत्यनुवाकेन सप्तर्षिसप्तरात्र उक्तः । तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा ॥ १ ॥

समूढस्त्वेव ॥ २ ॥

व्याख्यातमेतत् ॥ १-२ ॥

22. L, Om. व्याख्यातमेतत्

ऐकाहिकं व्रतम् । तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ॥ ३ ॥

इति । व्रतस्यानो विश्वासु हव्यमिति श्यैतं ब्रह्मसाम । गौरीवितस्य लोके औदलम् । समानमितरं सांवत्सरिके-( आ० क० ३. १. ६ ) त्यैकाहिकं व्रतमुक्तं मशकेन । तस्याग्निष्टोमसामान्ते साकमश्वं 5 (ऊ० १.१.१५) सौभरं (ऊ० १.१.१६) नार्मेध-( ऊ० १.१.१७) मित्युक्थानीत्यधिकृत्य सूत्रम्— सप्तरात्राणां प्रथमस्यातिरात्रे पञ्च-विंशान्यहस्तोमत्वादेकविंशानीत्यनुज्योतिष्टोमप्रदेशादि-( ला० श्रौ० ९. १२. १७ )ति । तस्मादेकविंशान्येवोक्थानि । गौरीवितं ( ऊ० १. २. १७ ) षोडशिसाम एकविंशम् । आहीनिकी रात्रिः पञ्चदशी 10 संधिस्त्रिवृत् ॥ ३ ॥

इति सप्तर्षिसप्तरात्रः ॥२७॥

---

## प्राजापत्यः सप्तरात्रः

पृष्ठ्यः षडहः सप्तदशं महाव्रतमतिरात्रः । तस्य त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैकविंशं पुच्छम् (तां० ब्रा० २२. ५) इत्यनुवाकेन 15 प्राजापत्यः सप्तरात्र उक्तः ॥

तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा ॥ १ ॥

समूढस्त्वेव ॥ २ ॥

सप्तदशं व्रतम् । तस्योपास्मै गायता नरः (सा० ६५१-३) पवस्व 20 वाचो अग्रियो (सा० ७७५-७) दविद्युतत्या रुचा (सा० ६५४-६)

---

4. $V^2$CMyBKTA. Om. मशकेन
17. $CV^2$. Om. य ऋतूनां व्यूढो
18. MyBKAT$V^2$C. गतार्थमेतत् for समूढस्त्वेव

उत्ते शुष्मास ईरते (सा० १२०५-९) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् ॥ १ ॥

स्पष्टमिदम् ॥ १ ॥

उत्तरे गायत्र्या उद्धरति पूर्वे अनुष्टुभः । समानमितरं पूर्वेण व्रतेन ॥ २ ॥ 5

तस्य स्तोमान्वयीन्युक्थानि । एकविंशः षोडशी ॥ ३ ॥

इति । सप्तदशान्याज्यानि । अस्य प्रत्नामनुद्युतम् (सा० ७५५-७) इति गायत्रं चामहीयवं (ऊ० ६.२.३) च । परीतो षिञ्चता सुत-(सा० १३१३-५)मिति समन्तं (ऊ० ६. १. ३) प्रथमायाम् । दैर्घश्रवसं (ऊ० ५. २. ४) तिसृषु । यौधाजयमध्यास्यायाम् (ऊ० 10 १६.१.५) । अयं सोम (सा० १४७१-३) इति पार्थ-(ऊ० ६.२.५) मन्त्यम् इति । सप्तदशो माध्यंदिनः । व्रतं होतुः पृष्ठम् । तस्य त्रिवृच्छिरः । पञ्चदशौ पक्षौ । सप्तदश आत्मा । एकविंशं पुच्छमिति विशेषः । इतराणि पृष्ठानि सप्तदशानि । परि स्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं च स्वाशिरामर्कः (र० 15 २.४.१०) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १.१.६) श्रुध्ये (ऊ० ६.१.२०) एकर्चयोः । पुरोजिती वो अन्धस (सा० ६६७-६) इति श्यावाश्वा-(ऊ० १.१.११)न्धीगवे (ऊ० १.१.१२) । सूर्यवतीषु काव-(ऊ० ६.२.११)मन्त्यम् इति । सप्तदश आर्भवः । यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) । इलान्दं (र० २.४.११) 20 वा । इलान्दपक्षे श्वावाश्वस्थाने यज्ञायज्ञीयम् । उक्थादि संधि-स्तोत्रान्तं पूर्वमहाव्रतवत् । तस्य स्तोमान्वयीन्युक्थानि । अहस्तोमं 22

---

14. L. after पृष्ठानि ins. सप्तदशं

19. LCV[2]. Om. सप्तदश आर्भवः

21. BKAT. श्यावाश्वस्य for श्वावाश्व°

सप्तदशम् । प्रकृतिस्तोमं चैकविंशम् । व्रतस्य वा प्रकृतिस्तोमं पञ्चविंशम् । अत्र तु अहस्तोममन्वीयुरुक्थानीत्यर्थः । तथा चोक्तं स्तोमान्वयीनीति सप्तदशानि स्युरधिकारादित्यादि ॥ ३ ॥

इति प्राजापत्यः सप्तरात्रः ॥ २८ ॥

---

5 ## पशुकामस्य सप्तरात्रः

पृष्ठ्यः षडहः छन्दोमपवमानं महाव्रतमतिरात्रः (तां० ब्रा० २२. ६) इत्यनुवाकेन पशुकामः सप्तरात्र उक्तः । तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा ॥ १ ॥

समूढस्त्वेव ॥ २ ॥

10 छन्दोमपवमानं व्रतम् । तस्य पवमानस्य ते वयम् (सा० ७८७-६) इति चतुर्ऋचस्य लोके तृचम् ॥ ३ ॥

विपरिहरति सत्रासाहीयजराबोधीये । आशु च भार्गवं (ऊ० १४. १. १६) मार्गीयवं (ऊ० १४. १. २०) च सौमित्रं (ऊ० १४. २. १) चैटतं (ऊ० १४. २. २) च यौधाजयादुत्तराणि
15 (ऊ० १६. १. ५) । बार्हदुक्थं (ऊ० ६. ३. ७) च द्वैगतं (ऊ० १६. १. ६) च पौरुहन्मनं (ऊ० १६. १. ७) च । स्वाशिरामर्कादुत्तराणि शाम्मदप्रभृतीनि चत्वारि (ऊ० १५. १. ६-१२) । आन्धीगवादुत्तराण्याकूपारं (ऊ० १६. १. ८) च साध्रं (ऊ० १६. १. ६) च स्वासु (सा० १२४१-३)
20 धर्म (ऊ० ५. १. ६) ॥ ४ ॥

21 समानमितरं प्रथमेन व्रतेन साप्तरात्रिकेण ॥ ५ ॥

---

2. CV[2]MyBKAT. Om. अत्र तु अहस्तोमम्
8. CMyBKAIV[2]L. before एष ins. पृष्ठ्यः षडहः

इति । उपास्मै गायता नरः ( सा० ६५१-३ ) उपोषु जातमप्तुरं (सा० १३३५-७) पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्रमिन्दवः ( सा० ८३०-२ ) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । चतुर्विंशम् । पञ्चदशान्याज्यानि । अस्य प्रत्नामनुद्युत-(सा० ७५५-७)मिति गायत्रं चामहीयवं (ऊ० ९.२.३) च सत्रासाहीयं (ऊ० ६. १. ६) च जराबोधीयं (ऊ० ६.३.१०) च आशुभार्गवं (ऊ० १४.१.१६) मार्गीयवं (ऊ०१४.१.२०) सौमित्रं (ऊ०१४.२.१) चैटतं (ऊ०१४.२. २) च । परीतो षिञ्चते-(सा० १३१३-५)ति समन्तं ( ऊ० ६. २. ३ ) दैर्घश्रवसं ( ऊ० ५. २. ४) च रौरवं (ऊ० ९.३.११) च यौधाजयं (ऊ० १६. १. ५) च बार्हदुक्थं (ऊ० ६. ३. ७) च द्वैगतं (ऊ० १६. १. ६) च पौरुहन्मनं ( ऊ० १६. १. ७ ) च । अयं सोम ( सा० १४७१-३ ) इति पार्थमन्त्य-(ऊ० ६. २. ५)मिति । चतुश्चत्वारिंशो माध्यंदिनः पवमानः । समन्तं प्रथमायाम् । पौरुहन्मनमध्यास्यायाम् । व्रतादीनि पृष्ठानि प्रकृतिवत् । परिस्वानो गिरिष्ठा ( सा० १०६३-५ ) इति गायत्रं च स्वाशिरामर्कः (र० २.४.१०) शाम्मदं (ऊ० १५. १. ६) च दावसुनिधनं (ऊ० १५. १. १०) च प्रतीचीनेडं काशीतं ( ऊ० १५. १. ११ ) च हाविष्कृतं (ऊ० १५. १. १२) । पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति सफ-(ऊ० १.१.६)श्रुध्ये (ऊ० ९. १. २०) । पुरोजिती वो अन्धस (सा० ६९७-६) इत्यौदलं (ऊ० १०.१.३) च मधुश्चिन्निधनं (ऊ० ८.२.१५) च श्वावाश्वं (ऊ० १. १.११) चान्धीगवं (ऊ० १.१.१२) चाकूपारं (ऊ० १६.१.८) च साध्रं (ऊ० १६.१. ९) च स्वासु धर्म (ऊ० ५.१.९) सूर्यवतीषु काव-(ऊ० ६.२.११)मन्त्यम् इत्यष्टाचत्वारिंश आर्भवः । अग्निष्टोमसामादि संधिस्तोत्रान्तं प्रथमव्रतवत् ॥ ५ ॥

इति पशुकामः सप्तरात्रः ॥ २९ ॥

## क्षुल्लकजामदग्न्यः सप्तरात्रः

अभ्यासंग्यः पञ्चाहोऽथ त्रयस्त्रिंशमहस्तस्य चतुस्त्रिंशोऽग्निष्टोमः सप्तदशं महाव्रतमतिरात्रस्तस्य चतुर्विंशं बहिष्पवमानं त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैकविंशं पुच्छम् (तां० ब्रा० २२. ७) इत्यनुवाकेन
5 क्षुल्लकजामदग्न्याख्यः सप्तरात्र उक्तः। तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा ॥ १ ॥

समूढस्त्वेव ॥ २ ॥

तस्याभ्यासक्तः पञ्चाहो यथा पृष्ठ्यावलम्बे। चतुर्थस्याह्नः एकविंशः षोडशी। पञ्चमस्याह्नः पार्थस्य लोके आकूपारं (ऊ० १५.
10 २. २) वात्रेयं (ऊ० १६. १. १०) वेति यदि समूढः ॥ ३ ॥

अथ यदि व्यूढश्चतुर्थस्याह्नः शुद्धाशुद्धीयस्य लोक आकूपारम् (ऊ० १६. १. ८)। पञ्चमस्याह्नः पार्थस्यात्रेयं पार्थं वैव। छन्दोमवतो व्रतस्य बहिष्पवमानम्। सप्तदशं व्रतम्। समानमितरम् ॥ ४ ॥

15 इति। ऋतुषडहवन्नानापृष्ठः पृष्ठ्यावलम्बवदभ्यासक्तः पञ्चाहः। चतुर्थस्याह्नः इन्द्र जुषस्वे-(सा० ९२२-४)ति गौरीवितं (ऊ० ३. १. २) षोडशिसामैकविंशम्। वैराजप्रयुक्तः षोडशी। तत्र समूढ-पक्षे पञ्चमस्याह्नः पार्थस्य लोके आकूपारं (ऊ० १५. २. २) वात्रेयं (ऊ० १६. १. १०) वेति विकल्पः। व्यूढपक्षे चतुर्थस्याह्नः।
20 शुद्धाशुद्धीयस्य आकूपारम् (ऊ० १६. १. ८) पञ्चमस्याह्नः। पार्थस्यात्रेयं पार्थमेव। पृष्ठ्यावलम्बाद्विशेषः। षष्ठमहस्त्रयस्त्रिंशं ऋतुषडहवद्वंशपुत्रान्तं चतुस्त्रिंशोऽग्निष्टोमः। एकादशभ्यो हिंकरोति। स तिसृभिः स सप्तभिः स एकया। एकादशभ्यो हिंकरोति।
24 स एकया स तिसृभिः स सप्तभिः। द्वादशभ्यो हिंकरोति

---

18. C. यज्ञे for पक्षे

20. MyBKAT. पुत्रं तस्य for पुत्रान्तं

सोऽष्टाभिः स एकया स तिसृभिरिति। चतुस्त्रिंशस्य विष्टुतिः। दाशरात्रिकेभ्य एकया ज्यायःस्वित्यादिवचनात्। सप्तदशं महाव्रतम् अतिरात्रस्तस्य चतुर्विंशं बहिष्पवमानम्। त्रिवृच्छिरः। पञ्चदशौ पक्षौ। सप्तदश आत्मा। एकविंशं पुच्छम् इति सप्तममहरुक्तम्। तस्य छन्दोमवतो व्रतस्य बहिष्पवमानम्। उपास्मै (सा० ६५१-३) उपोषु जातमप्तुरं (सा० १३३५-७) पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-२) पवमानस्य ते वयम् (सा० ७८७-९) पवमानस्य ते कवे (सा० ६५७-९) इति चतुर्विंशम्। इतरत् सर्वं सप्तदश व्रतातिरात्रवत् ॥ ४ ॥

इति क्षुल्लकनामदशम्यः सप्तरात्रः॥ ३० ॥

---

## इन्द्रसप्तरात्रः

ज्योतिष्टोमोऽग्निष्टोमो गौरुकृथ्य (तां० ब्रा० २२. ८) इत्याद्यनुवाकेन इन्द्रसप्तरात्र उक्तः ॥

तस्य कल्पः—

> ज्योतिष्टोमोऽग्निष्टोमो गौरुकृथ्य आयुरुकृथ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः। एकाहक्लृप्ताः ॥१॥

इति। सर्वजिदिति महाव्रतमुच्यते। एकाहग्रहणं सांवत्सरिकव्यावृत्त्यर्थम् ॥ १ ॥

इति इन्द्रसप्तरात्रः॥ ३१ ॥

---

## जनकसप्तरात्रः

चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि। विश्वजिन्महाव्रतं ज्योतिष्टोमोऽतिरात्रः (तां० ब्रा० २२. ६) इत्यनुवाकेन जनकसप्तरात्र उक्तः। अग्निष्टोममुखानीति चतुर्षु प्रथममहरग्निष्टोमसंस्थम्। इतराण्युक्थसंस्थानीत्यर्थः। स्तोत्रक्लृप्तिमाह—

यां देवानां पञ्चरात्रस्य प्रथमा सा जनकसप्तरात्रस्यानभ्यासक्ता ॥ १ ॥

इति। उपास्मै गायता नर (सा० ६५१-३) उपांशु जातमप्तुरम् (सा० १३३५-७) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम्। अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रमाश्वं (ऊ० ६.२.१२) सोमसामे-(ऊ० १४.१.१३)ति सामतृचः। प्र सोम देववीतय (सा० ७६७-८) इति यौधाजयं (ऊ० १.२.१३) तिसृषु। औशन-(ऊ० १.१.४)मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.६) च कालेयं (ऊ० १. १.७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १.१.८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति सफ-(ऊ० १.२.१५)पौष्कले (ऊ० ६. २. २)। प्र सुन्वानायान्धसः (सा० ७७४) इत्यौदल-(ऊ० ११. २. ३)गौतमे (ऊ० १. २. १८)। काव-(ऊ० १. १. १३)मन्त्यम्। कावमेव तृचे। इतराण्याद्यासु। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। सर्वं त्रिवृत् ॥ १ ॥

द्वितीयस्याह्नः स्तोत्रीयानुरूपौ पर्यासः। वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं हाविष्मतम् (ऊ० ७. १. १) आजिगं (ऊ० ११. २. १४) त एकर्चाः। पुनानः सोम धारये-(सा० ६७५-६)ति त्रिणिधनमायास्यं तिसृषु (ऊ० २.१.१)। मौक्षस्य लोके स्वाशिरामर्कः (र० ३. १. १४)। औपगवस्य सौभरम् (ऊ० १. १. १६) ॥ २ ॥

समानमितरं द्वितीयेनाह्ना देवानां पञ्चरात्रस्य ॥ ३ ॥

इति। पवस्व वाचो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) पवमानस्य ते वय-(सा० ७८७-६)मिति बहिष्पवमानम् । अग्निं दूत-(सा० ७६०-८०२)मित्याज्यानि । वृषा पवस्वे-(सा० ८०३-५)ति गायत्रं ह्याविष्मत-( ऊ० ७. १. १ )माजिग-( ऊ० ११.२.१४ )मिति सामतृचः । पुनानः सोम धारये-(सा० ६७५-६)ति त्रिणिधनमायास्यं (ऊ० २. १. १) तिसृषु । वृषा शोण ( सा० ८०६-८ ) इति पार्थ-( ऊ० ७.१.६ )मन्त्यम् । बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० २.१.३ ) च माधुच्छन्दसं (ऊ० २.१.४) चेति पृष्ठानि । यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्रं च स्वाशिरामर्कः ( र० ३.२.४ ) । पवस्वेन्द्रमच्छे-(सा० ६९२ ; ४)ति शङ्कु-(ऊ० २.१.६)सुज्ञाने ( ऊ० २.१.७ ) । अयं पूषा रयिर्भग (सा० ८१८-२०) इत्यासित-( ऊ० ११.२.२० ) क्रौञ्चे ( ऊ० २.१.६ ) । वृषा मतीनां पवते ( सा० ८२१-३ ) इति याम-( ऊ० २. १. १० )मन्त्यम् । याममेव तृचे । यज्ञायज्ञीयमग्निष्टोमसाम ( ऊ० १. १. १४ ) । औशनं ( ऊ० १.१.४) सौभर-(ऊ० १.१.१६)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि। सर्वं त्रिवृत् ॥ ३ ॥

तृतीयस्याह्नः स्तोत्रीयानुरूपौ पर्यासः । उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं क्षुल्लकवैष्टम्भं ( ऊ० २.१.१३ ) स्वारं सौपर्णं ( ऊ० १०. १. १६ ) त एकर्चाः । अभि सोमास आयवः (सा० ८५६-८) इत्यन्तरिक्षं तिसृषु ( र० १. १. ६ ) । महावैष्टम्भस्य लोके श्रायन्तीयम् (ऊ० ५.२.६)॥१॥

समानमितरं तृतीयेनाह्ना देवानां पञ्चरात्रस्य ॥ ४ ॥

इति । दविद्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्रमिन्दवः (सा० ८३०-२) इषे पवस्व धारय (सा० ८४१-३) इति बहिष्पवमानम् । अग्निनाग्निः समिध्यत ( सा० ८४४-५५ ) इत्याज्यानि । उच्चा ते

जातमन्धस ( सा० ६७२-४ ) इति गायत्रं क्षुल्लकवैष्टम्भं ( ऊ० २. १. १३ ) स्वारं सौपर्ण-(ऊ० १०. १. १९)मिति सामतृचः। अभि सोमास आयव (सा० ८५६-८) इत्यन्तरिक्षं (र० १.१.६) तिसृषु। तिस्रो वाच (सा० ८५९-६१) इत्यङ्गिरसां संक्रोशोऽन्त्यः ( ऊ० २. १. १७ )। रथन्तरं ( र० १. १. १ ) च वामदेव्यं (ऊ० १. १. ५ ) च श्रायन्तीयं ( ऊ० ५. २. ८ ) च रौरवं ( ऊ० १. १. २ ) चेति पृष्ठानि। तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं चाग्नेश्चार्कः (र० ४.२.३)। आ सोता परि षिञ्चत-सखाय आ निषीदते-( सा० ७७२-३ )ति वाचश्च साम (ऊ० २.२.१) शौक्तम् (ऊ० २.२.२)। सुतासो मधुमत्तमा ( सा० ८७२-४ ) इति त्वाष्ट्रीसामनी स्वारंत्रिणिधने ( ऊ० १५.२.१ ; २.२.४ )। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १.१.८)मन्त्यम्। अन्त्यमेव तृचे। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ०१.१.१४)। प्रमँहिष्ठीयं (ऊ० २.२.५) हारिवर्णं (ऊ० २. २.६) तैरश्च्य-(ऊ० २.२.७)मित्युक्थानि। सर्वं त्रिवृत् ॥ ४ ॥

चतुर्थस्याह्नः स्तोत्रीयानुरूपौ पर्यासः। पवस्व दक्षसाधन (सा० ९१९-२१) इति गायत्रमदारसृत् (ऊ० ७. २. २) सत्रासाहीयम् (ऊ० १५. २. ८) त एकर्चाः। तवाहं सोम रारणे-(सा० ९२२-३)ति स्वःपृष्ठमाङ्गिरसं तिसृषु ( ऊ० २. २. ११ )। स्वाशिरामर्कस्य लोके गौषूक्तम् (ऊ० १६. १. ११)। लौशस्य दीर्घतमसोऽर्कः (र० ३. १. १०)। सौभरस्य त्रैककुभम् (ऊ० ६. १. ७) ॥ ५ ॥

समानमितरं चतुर्थेनाह्ना पञ्चशारदीयस्य ॥ ६ ॥

इति। पवमानो अजीजनत् ( सा० ८८९-९१ ) पुनानो अक्रमीदभि ( सा० ९२४-६ ) हिन्वन्ति सूरमुस्रयः ( सा० ९०४-६ ) इति बहिष्पवमानम्। अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८) अयं वां मित्रावरुण-इन्द्रो दधीचो अस्थभिः-इयं वामस्य मन्मनः (सा० ९१०-१८)

इत्याज्यानि। पवस्व दक्षसाधनः ( सा० ६१६-२१ ) इति गायत्र-मदारसृत् (ऊ० ७.२.२) सहत्रासाहीय-(ऊ० १५.२.६)मिति सामतृचः। तवाहं सोम रारणे-(सा० ६२२-३)ति स्वःपृष्ठमाङ्गिरसं (ऊ० २.२. ११) तिसृषु। उद्धु वा अस्ये-(सा० १३९९-१४०१)ति वासिष्ठ-(ऊ० ७.२.६) मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च 5
त्रैशोकं (ऊ० २.२.१३) च पृश्नि (ऊ० २.२.१४) चेति पृष्ठानि। परि प्रिया दिवः कवि-( सा० ६३५ )रिति गायत्रं च गौषूक्तं (ऊ० १६.१.११) च। त्वं ह्यङ्ग दैव्य-सोमः पुनान ऊर्मिणा ( सा० ६४०-२ ) इति बृहत्क-(ऊ० २.२.१६)क्रोशे ( ऊ० १५.२.११ )। पुरोजिती वो अन्धस (सा० ६९७-९) इति नानदं (ऊ० २.२.१८) 10
त्वाष्ट्रीसाम (ऊ० २०.२.१२) च। धर्ता दिवः (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽन्त्यः (र० ३.१.१०)। अन्त्यवर्जमेकर्चाः। यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १.१.१४)। सैन्धुक्षितं (ऊ० २.२.२०) त्रैककुभ-( ऊ० ६. १. ७)मुद्वंशीय-( ऊ० ६. १. ८)मित्युक्थानि। सर्वं त्रिवृत् ॥ ६ ॥ 15

विश्वजिन्महाव्रतं ज्योतिष्टोमोऽतिरात्र षोडशिमान्। एकाहक्लृप्ताः ॥७॥

इति। एकाहिको विश्वजित् पञ्चममहः। महाव्रतं ज्योतिष्टोमोऽतिरात्रः षोडशिमान् सप्तममहः। तस्याहीनिकी रात्रिः ॥७॥

इति जनकसप्तरात्रः ॥ ३२ ॥

---

## पृष्ठ्यस्तोमः सप्तरात्रः 20

पृष्ठ्यः स्तोमः षडहो विश्वजिदतिरात्रः (तां० ब्रा० २२. १०) इत्यनुवाकेन पृष्ठ्यस्तोमः सप्तरात्र उक्तः। तस्य कल्पः— 22

1. L. बृहत्कातीषादीये for बृहत्कत्रैशोके

एष एव षडहो य ऋतूनां समूढोऽनभ्यासक्तो बृहद्रथन्तर-
पृष्ठ्यः। चतुर्थस्याह्नः प्रत्यस्मै पिपीषित (सा० १४४०-३) इति
गौरीवितं (ऊ० १६. १. १२) षोडशिसाम। षष्ठस्याह्नो रेवतीनां
लोके दार्ढच्युतम् (ऊ० १६. १. १३)। त्रिपरिहृत्यौक्ष्णोरन्ध्रे
5 (ऊ० ३. २. २; १)। विश्वजिदतिरात्रः॥ १॥

इति। षट्पृष्ठसंयोगाभावाद्रेवतीनामुद्धारः। औक्ष्णोरन्ध्रयोर्व्यत्यासो बृहत्या इडारम्भणार्थः। पृष्ठ्यःषडहे तु रेवतीनामैडौक्ष्णोरन्ध्रस्य च संनिपाते जामिप्रसङ्गादिडारम्भणत्वमुपेक्षितम्॥

विश्वजिदतिरात्रः सप्तममहः॥ १॥

10 इति पृष्ठ्यस्तोमः सप्तरात्रः समाप्तः॥ ३३॥

---

## अष्टरात्रः

पृष्ठ्यः षडहो महाव्रतं ज्योतिष्टोमोऽतिरात्रः (तां० ब्रा० २२. ११) इत्यनुवाकेन अष्टरात्र उक्तः। तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा॥ १॥
15 समूढस्त्वेव॥ २॥

ऐकाहिकं व्रतम्। ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः॥ ३॥

इति। ऋतुषडवत्। समूढो वा व्यूढो वा नानापृष्ठः। प्रथमः षडहः। षष्ठेऽहनि रात्रिः। ऐकाहिकं व्रतम्। सप्तममहः। अषोडशिको ज्योतिष्टोमोऽतिरात्रोऽष्टममहः। तस्याहीनिकी रात्रिः॥३॥

20 इति अष्टरात्रः॥ ३४॥

---

3. CMyBAKT. रैवतानां for रेवतीनां
17. MyBKAT. Om. व्यूढोवा
11. MyBKA. Om. तस्याहीनिकी रात्रिः

## देवानां नवरात्रः

अथ द्वौ नवरात्रौ। तयोः प्रथमः पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्रः ( तां० ब्रा० २२. १२ ) इत्यनुवाकेनोक्तः। तस्य कल्पः—

एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा ॥ १ ॥
समूढस्त्वेव ॥ २ ॥

ज्योतिर्गौरायुरतिरात्रः। एकाहक्लृप्ताः ॥ ३ ॥

इति। ऋतुषडहवन्नानापृष्ठः प्रथमः षडहः। ज्योतिष्टोमोऽग्निष्टोमः। सप्तममहः। गौरुकृथ्योऽष्टमः। आयुरतिरात्रो नवमम्। एते ज्योतिरादय एकाहक्लृप्ताः ॥ ३ ॥

इति देवानां नवरात्रः ॥ ३५ ॥

---

## पशुकामस्य नवरात्रः

ज्योतिष्टोमोऽग्निष्टोमो गौरुकृथ्य आयुरुकृथ्योऽभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः (तां० ब्रा० २२. १३) इत्यनुवाकेन द्वितीयो नवरात्र उक्तः। तस्य कल्पः—

ज्योतिष्टोमोऽग्निष्टोमो गौरुकृथ्य आयुरुकृथ्यः। तस्यायुषः पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् (ऊ० १. १. ११)। आन्धीगवमेकस्याम् (ऊ० १. १. १२)। आकूपारमेकस्याम् (ऊ० १४. १. ८)। बृहत्तिसृषु (र० २. २. ५)। बृहन्निधनं वार्कजम्भम् (र० ४. १. ८) ॥ १ ॥

पृष्ठ्यावलम्बस्य पञ्चाहो विश्वजिदतिरात्रो विश्वजिदतिरात्रः ॥ २ ॥

इति। ज्योतिष्टोमोऽग्निष्टोमः प्रथममहः। गौरुकृथ्यो द्वितीयम्। आयुरुकृथ्यस्तृतीयम्। तस्यायुषः। पुरोजिती वो अन्धस (सा०

६९७-९) इति श्यावाश्व-(ऊ० १. १. ११)मान्धीगव-(ऊ० १. १. १२)माकूपार-(ऊ० १४. १. ८)मिति सामतृचः। बृहत् (र० १. १. ५) तिसृषु। बृहन्निधनं वार्कजम्भ-(र० ४. १. ८)मिति विशेषः। ऐकाहिका एते। पृष्ठ्यावलम्बस्य पञ्चाहः। एष एव पञ्चाहो य ऋतूना-( आ० क० ७. १२. ४ )मित्यादिनोक्तः। नवममहर्विश्वजिदतिरात्रः ॥ २ ॥

इति पशुकामस्य नवरात्रः ॥ ३६ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायाम् आर्षेयकल्पव्याख्यायां सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

# त्रिककुब्दशरात्रः

अथ दशरात्राश्चत्वारः । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश उक्थ्यः । सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवोऽग्निष्टोमो विश्वजिदतिरात्रः (तां० ब्रा० २२. १४) इत्यनुवाकेन त्रिककुब्दशरात्र उक्तः । तत्र प्रथमस्याह्नः कल्पः— 5

अग्न आयूंषि पवसे (सा० १५१८-२०) इत्यनुरूपः । शग्ध्यूषु शचीपते (सा० १५७९-८०) इत्यभीवर्तो (ऊ० ११. २. ६) ब्रह्मसाम । प्र सुन्वानायान्धस (सा० १३८६-८) इत्यौदल-(ऊ० ७. २. १६) दैवोदासे (ऊ० १६. १. १४) । अभि प्रियाणी-(सा० ७००-२)ति यज्ञायज्ञीयम् (ऊ० १६.१.१५) अन्त्यम् ॥ १ ॥ 10

नमस्ते अग्न ओजस (सा० १६४८-५०) इति जराबोधीयमग्निष्टोमसाम (ऊ० १६. १. १६) स्वासु वा (सा० १६६३-५; ऊ० १४. १. ५) ॥ २ ॥ 15

समानमितरं प्रथमेनाह्ना जनकस्य सप्तरात्रस्य ॥ ३ ॥

इति । उपास्मै गायता नर (सा० ६५१-३) अग्न आयूंषि पवसे (सा० १५१८-२०) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । अग्न आ याहि वीतये (सा० ६६०-७१) इत्याज्यानि । प्र सोमासो विपश्चितः (सा० ७६४-६) इति 20 21

---

6. LCV². ककुब् for त्रिककुब्

गायत्रमाश्वं (ऊ०६.२.१२) सोमसामे-(ऊ० १४.१.१३)ति साम्नतृचः। प्र सोम देववीतये (सा० ७३७-८) इति यौधाजयं (ऊ०१. २. १३) तिसृषु। औशन-(ऊ० १.१.४)मन्त्यम्। रथन्तरं (र० १.१.१) च वामदेव्यं (ऊ० १. १. ५) च। शग्ध्यूषु शचीपते (सा० १५७९-८०) इत्यभीवर्तः (ऊ० ११. २. ६) स्वासु कालेय-(ऊ० १.१.७)मिति पृष्ठानि। स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते (ऊ० १.१.८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरि-(सा० ७७३)रिति सफ-(ऊ० १.२.१५) पौष्कले (ऊ० १.२.१६)। प्र सुन्वानायान्धस (सा० १३८६-८) इत्यौदल-(ऊ० ११.२.३)दैवोदासे (ऊ० १६.१.१४)। अभि प्रियाणीति यज्ञायज्ञीयमन्त्यम्। अन्त्यमर्जमेकच्चर्चाः। नमस्ते अग्न ओजसः (सा० १६४८-५०)इति जराबोधीय-(ऊ. १६.१.१६)मग्निष्टोमसाम। स्वासु वा (ऊ० १६६३-५; ऊ० १४.१.५)। तस्य गायत्री छन्दः। सर्वं त्रिवृत्॥ ३॥

इति प्रथममहः ॥१॥

---

## द्वितीयमहः

द्वितीयस्याह्नः कल्पः—

वृषा मतीनां पवते (सा० ८२१-३) इति यज्ञायज्ञीयमन्त्यम् (ऊ० १६.१.१७)। सौभरम् (ऊ० १.१.१६) अग्निष्टोमसाम स्वासु॥ १॥

समानमितरं द्वितीयेनाह्ना दर्वोनां पञ्चरात्रस्य॥ २॥

इति। पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-८९) इति बहिष्पवमानम्। अग्निं दूतं वृणीमहे (सा० ७९०-८०२) इत्याज्यानि। वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च हाविष्मतं (ऊ० ७. १. १) च। पुनानः सोम धारये-(सा० ६७५-७)त्यायास्ये। वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७.१.६)मन्त्यम्। बृहच्च (र०

१. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च माधुच्छन्दसं (ऊ० २.१.४) चेति पृष्ठानि। यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे (ऊ० ४.१.१०)। पवस्वेन्द्रमच्छे-(सा० ६१२ ; ४)ति शङ्कु-(ऊ० २.१.६)सुज्ञाने (ऊ० २. १. ७)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसित-(ऊ० ११. २.२०) क्रौञ्चे (ऊ० २.१.९)। वृषा मतीना-( सा० ८२१-३ )मिति यज्ञायज्ञीय-(ऊ०१६.१.१७)मन्त्यम्। शङ्कुसुज्ञानासीतान्येकर्च्चानि। सौभर-(ऊ० १.१.८)मग्निष्टोम स्वासु। तस्य ककुप्छन्दः। औशन-(ऊ० १.१.४)मौपगव-(ऊ०१०,२.१)माष्टादंष्ट्र-(ऊ० २.१.१२) मित्युक्थानि। सर्वं पञ्चदशम् ॥ २ ॥

इति द्वितीयमहः ॥ २ ॥

---

## तृतीयमहः

तृतीयस्याह्नः—

दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-२) इषे पवस्व धारय ( सा० ८४१-३ ) अग्निनाग्निः समिध्यते (सा० ८४४-५५) इत्याज्यानि ॥ १ ॥

इति बहिष्पवमानम् ॥

उच्चा ते जातमन्धसः ( सा० ६७२-४ ) इति गायत्रमेकस्याम् वैरूपमेकस्याम् ( ऊ० ७, १. १२ )। सौमित्रमेकस्याम् ( ऊ० १६. १. १९ )। आ सोम स्वानो अद्रिभिर् (सा० १६८९-९०) इत्यन्तरिक्षं तिसृषु ( र० ४. १. ९ )। तिस्रो वाच ( सा० ८५९-६१ ) इत्यङ्गिरसां संक्रोशोऽ-( ऊ० २. १. १७ )न्त्यः ॥ २ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं (र० १. १. १) च वामदेव्यं च (ऊ० १. १. ५) नौधसं (ऊ० १. १. ६) च रौरवं (ऊ० १. १. २) च ॥ ३ ॥

इति पृष्ठानि ॥

तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० ७. १. १६) चा सोता परि षिञ्चत (सा० १३९४-५) सखाय आ निषीदते-(सा० ११५७-९)ति वाचश्च साम (ऊ० ७. १. १७) शौक्तं (ऊ० ७. १. १८) च। सुतासो मधुमत्तमा (सा० ८७२-४) इति त्वाष्ट्रीसाम (ऊ० १५. २. १०) चान्धीगवं (ऊ० ६. १. २०) च। पवित्रं त (सा० ८७५-७) इति यज्ञायज्ञीयम् (ऊ० १५. १. १) अन्त्यम् ॥ ४ ॥

[ इत्यार्भवः पवमानः ॥ ]

अन्त्यव्यतिरिक्ता एकर्चाः ॥ ४ ॥

श्रुध्यम् (ऊ० ११. १. ७) अग्निष्टोमसाम स्वासु (सा० १५६१-३) ॥५॥

तस्योष्णिक्छन्दः। सर्वं त्रिवृत् ॥ ५ ॥

इति तृतीयमहः ॥ ३ ॥

---

## चतुर्थमहः

चतुर्थस्याह्नः—

पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) राजामेधाभिरीयते (सा० ८३३-५) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि जङ्घनत् ( सा० १३६६-८ ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

अयं वां मित्रावरुणा-इन्द्रो दधीचो अस्थभिः-इयं वामस्य मन्मनः (सा० ६१०-१८) इत्याज्यानि ॥ २ ॥

पवस्व दक्षसाधनः (सा० ६१६-२१) गायत्रं च त्वाष्ट्रीसाम च (ऊ० १६. २. १)। यदीङ्खयन्तीर् (सा० १७५) इत्यभि सोमास आयव (सा० ८५६-८) इत्याष्टादंष्ट्रं (ग्रा० गे० ५.७.१७५.१ ; ऊ० १६.२.२) चार्थवणं (र० ४.३.७) चाभीशवं (ऊ० १६.२.३) च स्वःपृष्ठमाङ्गिरसम् ( ऊ० १६. २. ४ ) । उद्वा वासिष्ठम् (ऊ० ७. २. ६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

आष्टादंष्ट्रं प्रथमायाम् । स्वःपृष्ठमाङ्गिरसमध्यास्यायाम् ॥ ३ ॥

बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च वयमेनमिदाह्य (सा० १६६१-२) इति वासिष्ठम् ( ऊ० १६. २. ५ ) । स्वासु (सा० ६३३-४) पृश्नि (ऊ० २.२.१४) ॥ ४ ॥

इति पृष्ठानि ॥

परि प्रिया दिवः कविर् ( सा० ६३५-७ ) इति गायत्रं चौर्णायवं च (ऊ० ७. २. ८) त्वं ह्यङ्ग दैव्य (सा० ६३८-६) सोमः पुनान ऊर्मिणे-( सा० ६४०-२ )ति बृहत्क-( ऊ० २. २. १६ )क्रोशे (ऊ० १५. २. ११) । पुरोजिती वो अन्धस ( सा० ६६७-९ ) इति यज्ञायज्ञीयं ( ऊ० ८. २. १६ ) च क्षुल्लककालेयं ( ऊ० १६. २. ६ ) च। प्र त आश्विनीर् (सा० ८८६-८) इति लौशम् (ऊ० ८.२.२) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

बृहत्कक्रोशे एकर्चयोः ॥ ५ ॥

विशोविशीय-( ऊ० १५. १. २ )मग्निष्टोमसाम स्वासु ( सा० १५६४-६ ) ॥ ६ ॥

तस्यानुष्टुप्छन्दः । सर्वं सप्तदशम् ॥ ६ ॥

इति चतुर्थमहः ॥ ४ ॥

---

पञ्चममहः

पञ्चमस्याह्नः—

पवमानस्य विश्ववित् ( सा० ६५८-६० ) यत्सोम चित्रमुक्थ्यम् (सा० ९९९-१००१) प्र यद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते ( सा० ८९८-९०३ ) यास्ते धारा मधुश्चुतः (सा० ९७९-८१) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्ने स्तोमं मनामहे ( सा० १४०५-७ ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

पुरूरुणा चिद्ध्यस्ति-उत्तिष्ठन्नोजसा सह-इन्द्राग्नी युवामिमे ( सा० ९८५-९ ) इत्याज्यानि ॥ २ ॥

अर्षा सोम द्युमत्तम ( सा० ९९४-६ ) इति गायत्रं यण्वं (र० १. २. १) शाकलम् (ऊ० १३. १. ३) । सोम उष्वाणः सोतृभिर् ( सा० ९९७-८ ) इति वाभ्रम् ( ऊ० ३. १. ७ ) आनूपम् (ऊ० ३. १. ६) अग्नेस्त्रिणिधनम् ( ऊ० ३.१.८ )। अभि त्रिपृष्ठम् ( सा० १४०८-१० ) इति सम्पा-(ऊ० ७. २. १७)न्त्या ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) चेन्द्रमिद्देवतातये ( सा० १५८७-८ ) त्वमिन्द्रयशा असी-( सा०

१४११-२ )ति यौक्तस्रुचं (ऊ० ११. २. १२) च द्विर्हिंकारं (ऊ० १६. २. ७) च ॥ ४ ॥

इति पृष्ठानि ॥

असाव्यंशुर्मदाये-( सा० १००८-१० )ति गायत्रं च गौषूक्तं (ऊ० ७. २. १६ ) चाभिद्युम्नं बृहद्यशः ( सा० १०११-२ ) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति च्यावन-( ऊ० ३. १. ११)वार्शे (ऊ० १६. २. ८) । पवस्व वाजसातये (सा० १०१६-८) इति यज्ञायज्ञीयं (ऊ० १६. २. ६) च रयिष्ठं (ऊ० ८. १. १) च । गोवित्पवस्वे-( सा० ९५५-७ )ति द्व्यभ्याघातं लौशम् ( ऊ० ८. २. ७ ) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

अग्निं नर ( सा० १३७३-५ ) इति बृहदाग्नेयमग्निष्टोमसाम ( ऊ० १६. २. १० ) ॥ ६ ॥

तस्य विराट् छन्दः ॥ ६ ॥

तृतीयस्याह्न उक्थानि ॥ ७ ॥

प्रमंहिष्ठीयं हारिवर्णं तैरश्च्य-( ऊ० २. २. ५-७ )मित्युक्थानि । सर्वमेकविंशम् ॥ ७ ॥

इति पञ्चममहः ॥ ५ ॥

---

षष्ठमहः

षष्ठस्याह्नः—

असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) बभ्रवे नु स्वतवसे (सा० १४४४-६) इति षड्ऋचस्य तृचम् ( सा० १४४४-६ )। उच्चे शुष्मास ईरते (सा० १२०५-६) एते सोमा असृक्षत (सा० १०६१-३) ॥ १ ॥

इति बहिष्पवमानम् ॥

यमग्ने पृत्सु मर्त्यम् (सा० १४१५-७) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

प्रति वां सूर उदिते-भिन्धि विश्वा अपद्विषः-यज्ञस्य हि स्थ ऋत्विजे-(सा० १०६७-७५)त्याज्यानि ॥ २ ॥

पवमानस्य जिघ्नतः (सा० १३१०-२) इति गायत्रं चादारसृच्च (ऊ० ५. १. १४)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति शौक्तं (ऊ० ) च यश-(र० १. ३. ६)श्चाभीशवं (ऊ० ५. २. ६) च प्रतोदश्च (ऊ० १६. २. ११)। साकमुक्ष (सा० १४१८-६) इतीहवद्वासिष्ठम् (ऊ० ८. १. ७) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

शौक्तं प्रथमायाम् । प्रतोदोऽध्यास्यायाम् ॥ ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्रयन्तीयं (ऊ० ५. २. ६) च पृष्ठं (ऊ० १६. २. १२) च ॥ ४ ॥

इति पृष्ठानि ॥

त्वं सोमासि धारयुर् (सा० १३२३-५) इति गायत्रं चाश्वसूक्तं (ऊ० ५. २. ११) च। स सुन्वे यो वसूनाम् (सा० १०९६-७) तं वः सखायो मदाये-(सा० १०९८-१००)ति दीर्घं (ऊ० ३. २. ११) च कार्णश्रवसं (ऊ० ३. २. १२) च। सोमाः पवन्त इन्दवः (सा० ११०१-३) इति क्रौञ्चे (ऊ० ३. २. १५-६)। त्रिरस्मै सप्त धेनवो दुदुह्रिरे (सा० १४२३-५) इति मरुतां धेनु (ऊ० ८. १. १२) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

दीर्घकार्णश्रवसे एकर्चे ॥ ५ ॥

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम ॥ ६ ॥

सर्वं सप्तदशम् ॥ ६ ॥

इति षष्ठमहः ॥ ६ ॥

---

सप्तममहः 5

सप्तमस्याह्नः—

ये सोमासः परावति ( सा० ११६३-५ ) अमित्रहा विचर्षणिः (सा० १३४७-९) प्र स्वानासो रथा इव ( सा० १११९-२७ ) असृग्रमिन्दवः पथा (सा० ११२८-३६) आ ते दक्षं मयोभुवम् ( सा० ११३७-९ ) ॥ १ ॥ 10

इति बहिष्पवमानम् ॥

बभ्रवे नु स्वतवस ( सा० १४४४-९ ) इति षड्चस्य पूर्वस्तृचः पूर्वस्मिन्नहनि विनियुक्तः। उत्तम उत्तरस्मिन्नहनि विनियुज्यते अमित्रहा-विचर्षणि-(सा० १४४७-९)रिति । तथा च निदानम्—बभ्रवे नु स्वतवसे इति षड्चः षष्ठसप्तमयोर्विहरति सन्तानार्थं (नि०सू० ९.३) 15 इत्यादि ॥ १ ॥

होता देवो अमर्त्यः (सा० १४७७-९) प्र वो मित्राय गायत ( सा० ११४३-५ ) इन्द्रायाहि चित्रभानव् ( सा० ११४६-८ ) इन्द्राग्नी रोचना दिवः (सा० १६९३-५) ॥ २ ॥

इत्याज्यानि ॥ 20

---

13. CV¹MyBKAT, Om, उत्तमः

अध्वर्यो अद्रिभिः सुतम् ( सा० १२२५·७ ) इति गायत्रं च मार्गीयवं (ऊ० ४. २. २) चैडं च सौपर्णम् (ऊ० १६.२.१३) रोहितकूलीयं (ऊ० १६. २. १४) च। तवाहं सोम रारणे- (सा० ६२२-३)ति पौरुहन्मनं ( ऊ० १६. २. १५ ) च द्वैगतं
5 (ऊ० १६. २. १६) च गौङ्गवं ( ऊ० १६. २. १७ ) च द्विनिधनमायास्यम् ( ऊ० १६. २. १८ ) । प्र काव्यमुशनेव ब्रुवाण (सा० १११६-८) इति वाराहम् (ऊ० १६. २. १६ ) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

10 रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च वाशं (ऊ० १६६६-८; १६. २. २०) च वैयश्वं (ऊ० ४. २. १६) च ॥ ४ ॥

इति पृष्ठानि ॥

पवस्व देव आयुषग् (सा० १२३५-७) इति गायत्रं स्वाशिरामर्कः
15 (र० १. ३. २) ऐडं सैन्धुक्षितम् (ऊ० १७. १. १) । एष स्य धारया सुतो ( सा० १२३४-५ ) गोमन्न इन्द्र अश्ववद् (सा० १६११-३) इति शार्कर-(ऊ० ४. १. ११) त्रैते (ऊ० १७. १. २)। पुरोजिती वो अन्धस (सा० ६९७-९) इति क्रौञ्चं (ऊ० १७. १. ३) गौतमं ( ऊ० १७. १. ४ ) यज्ञायज्ञीयम्
20 ( ऊ० ८. २. १६ )। प्रो अयासीद् (सा० ११५२-४) इति ऐडं यज्ञसारथि (ऊ० १७. १. ५) अन्त्यम् ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

आ ते अग्न इधीमही-( सा० १०२२-४ )ति स्रौग्मत-(ऊ० १७. १. ६)मग्निष्टोमसाम ॥ ६ ॥

25 तस्य पङ्क्तिश्छन्दः। सर्वं त्रिणवम् ॥ ६ ॥

26 इति सप्तममहः ॥ ७ ॥

---

14. LCV[a]. अर्कं चैडं for अर्कः ऐडं

## अष्टममहः

**अष्टमस्याह्नः—**

पवमाना असृक्षत (सा० १६९९-७००) अपघ्नन् पवते मृधः (सा० १२१३-५) पवस्व देववीरति (सा० १०३७-४६) सना च देव जेषि च (सा० १०४७-५६) तरत् स मन्दी धावति (सा० १०५७-६०) अया वीती परिस्रव (सा० ११५०-२) ॥ १ ॥

इति बहिष्पवमानम् ॥

विश्वेभिरग्ने अग्निभिर् (सा० १६१७-९) यदद्य सूर उदिते (सा० १३५१-३) महाँ इन्द्रो य ओजसा (सा० १३०७-९) तोशा वृत्रहणा हुवे (सा० ११०२-४) ॥ २ ॥

इत्याज्यानि ॥

इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति दार्ढच्युतपञ्चमानि (ऊ० ३. १. १९-२०; ३. २. १; १६. १. १३) ॥

गायत्रं चेषोवृधीयं (ऊ० ३. १. १९) च क्रौञ्चं (ऊ० ३.१.२०) च वाजदावर्यश्च (ऊ० ३.२.१) दार्ढच्युतम् (ऊ० १६.१.१३)।

मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)ति गोष्ठपञ्चमानि (ऊ० ३. २. १-५) ॥

औक्ष्णोरन्ध्रे (ऊ० ३. २. १-२) च वाजजित् (ऊ० ३. २. ३) वरुणसाम (ऊ० ३. २. ४) गोष्ठं (ऊ० ३. २. ५) च ॥

ह्वा उद्धुवाइ शिशु-(सा० १३७५-७)मिति वासिष्ठम् (ऊ० १२.१.७) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

बृहच्च (र० १. १. ५) वामदेव्यं च (ऊ० १. १. ५) त्रैशोकं च (ऊ० २. २. १३) वैखानसं च (ऊ० ४. १. ६) ॥ ४ ॥

इति पृष्ठानि ॥

परि स्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं च त्रीणि च वैदन्वतानि (ऊ० ३. २. ८-१०) त्वँ ह्यङ्ग दैव्य (सा० ६३८-६) पवस्व देववीतय (सा० १३२६-८) सौपर्णं च (ऊ० ५. २. १६) वैश्वमनसं (ऊ० ५. २. १७) च। परि त्यं हर्यतं हरिम् (सा० १३२६-३१) इति आकूपारम् (ऊ० ६. १. ३) च त्वाष्ट्रीसाम (ऊ० १७. १. ८) च यज्ञायज्ञीयं (ऊ० १७. १. ९) च यद्वाहिष्ठीयं (ऊ० ५. २. २०) च। धर्ता दिव (सा० १२२८-३०) इति दीर्घतमसोऽर्कोऽ-(र० ३. १. १०)न्त्यः ॥ ५ ॥

[ इति आर्भवः पवमानः ॥ ]

अग्निं वो देवमग्निभिः सजोषा (सा० १२१९-२०) इति रायोवाजीयमग्निष्टोमसाम (र० ४. २. १) ॥ ६ ॥

सैन्धुक्षितं (ऊ० २. २. २०) त्रैककुभम् (ऊ० ६. १. ७) उद्वंशीयम् (ऊ० ६. १. ८) ॥ ७ ॥

इत्युक्थानि ॥

सर्वं त्रयस्त्रिंशम् ॥ ७ ॥

इति अष्टममहः ॥ ८ ॥

---

## नवममहः

नवमस्याह्नः—

उपोषु जातमप्तुरम् (सा० १३३५-७) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या (सा० १२६६-७३) एष कविरभिष्टुतः (सा० १२८६-९१) ॥ १ ॥

इति बहिष्पवमानम् ॥

उप त्वा रण्वसंदृशम् ( सा० १७०५-७ ) आ नो मित्रावरुणा ( सा० ६६३-५ ) तमिन्द्रं वाजयामसि ( सा० १२२२-४ ) इन्द्राग्नी आगतं सुतम् (सा० ६६९-७१) ॥ २ ॥

इत्याज्यानि ॥

उच्चा ते जातमन्धस ( सा० ६७२-४ ) गायत्रं चामहीयवं (ऊ० १. १. १) चाजिगं (ऊ० ६. १. ६) चाभीकं (ऊ० ६. १. १०) च । पुनानः सोम धारये-( सा० ६७५-६ )ति पौरुमद्गं ( ऊ० १७. १. १० ) चाक्षारणिधनं च काण्वं (ऊ० १७. १. ११) मैधातिथं (ऊ० १३. १. ७) चोत्सेधश् (ऊ० ६. १. २)चौशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं च (र० १. १. १) वामदेव्यं ( ऊ० १. १. ५ ) च नैपातिथं ( ऊ० ४. २. १५ ) च कालेयं ( ऊ० १. १. ७ ) च ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-(सा० ६८८-९१)ति गायत्रं चाग्नेश्चार्कोऽ-(र० ४. १. १२)भि द्युम्नं बृहद्यशः ( सा० १०११-२ ) इन्द्रमच्छा सुता इमे (सा० ५. १. १) इत्यैषिरं ( ऊ० ५. १. १ ) च रोहितकूलीयं ( ऊ० ६. १. १७ ) चाभी नो वाजसातमम् ( सा० १२३८-४० ) इति श्यावाश्वं ( ऊ० १२. १. १५ ) च निषेधश् (ऊ० १७. १. १२) च साध्रं (ऊ० १७. १. १३) च यज्ञायज्ञीयं (ऊ० १७. १. १४) च कावम् (ऊ० १. १.१३) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

इमं स्तोममर्हते जातवेदसे ( सा० १०६४-६ ) इति समन्तमग्निष्टोमसाम (ऊ० १७. १. १५) ॥ ६ ॥

तस्य जगती छन्दः। सर्वं त्रिणम् ॥ ६ ॥

इति नवममहः ॥ ९ ॥

---

## दशममहः

दशममहराह—

विश्वजिदतिरात्रः ॥ १ ॥

इति ॥ १ ॥

इति दशममहः ॥ १० ॥

इति त्रिककब्दशरात्रः समाप्तः ॥

---

## कुसुरुबिन्ददशरात्रः

### प्रथममहः

त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदश उकृथ्यास्त्रयः सप्तदश उकृथ्या एकविंशोऽतिरात्रः ( तां० ब्रा० २२. १५. १ ) इत्यनुवाकेन कुसुरुबिन्ददशरात्र उक्तः। तस्य कल्पः—

या बृहस्पतिसवस्य सा कुसुरुबिन्दस्य प्रथमा। तस्यै जनुषैकर्चौ ॥ १ ॥ उप-दवि-पवे-( सा० ६५१-९ )ति बहिष्पवमानम् । अग्न-आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ )त्याज्यानि । उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं ( ऊ० १. १. १ ) च जराबोधीय-(ऊ० ११. १. १४)मिति सामतृचः। पुनानः सोम धारये-(सा० ६७५-६)ति यौधाजयं ( ऊ० १. १. ३ ) तिसृषु । औशन-(ऊ० १. १. ४)मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं

( ऊ० १. १. ५ ) च नौधसं ( ऊ० १. १. ६ ) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । स्वादिष्ठये-(सा० ६८६-६९)ति गायत्र-संहिते (ऊ० १. १. ८) । अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् ( सा० ७७३ ) इति सफ-(ऊ० १. ३. १५)पौष्कले (ऊ० ६. २. २) । पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति श्यावाश्वा-(ऊ० १. १. ११-२)न्धीगवे । काव-( ऊ० १.१.१३ ) मन्त्यम् । अन्त्यवर्जमेकर्चाः । यज्ञायज्ञीयमग्निष्टोमसाम ( ऊ० १. १. १४) । सर्वं त्रिवृत् ॥

इति प्रथममहः ॥ ११ ॥

---

## द्वितीयमहः

### द्वितीयमहराह—

हाविष्मतस्य लोके यौक्ताश्वम् (ऊ० १. २. १९) स्वाशिरामर्कस्य हाविष्मतम् ( ऊ० २. १. ५ ) शङ्कुसुज्ञानयोः सत्रासाहीय-(ऊ० ६. २. ७)श्रुध्ये (ऊ० ६.१.२०) । उद्धरत्युकृयानि ॥ १ ॥

समानमितरं द्वितीयेनाह्ना जनकसप्तरात्रस्य ॥ २ ॥

इति । पवस्व वाचो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) पवमानस्य ते वयम् ( सा० ७८७-९ ) इति बहिष्पवमानम् । अग्निं दूतं वृणीमह (सा० ७९०-८०२) इत्याज्यानि । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च हाविष्मतं ( ऊ० ७. १. १ ) च । पुनानः सोम धारये-(ऊ० ६७५-६)ति आयास्ये-(ऊ० १. २. २०; २. १. १) । वृषा शोण ( सा० ८०६-८ ) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् । बृहच्च ( र० १. १. ५ ) वामदेव्यं (ऊ० १. १. ५) च श्यैतं ( ऊ० २. १. ३ ) च माधुच्छन्दसं ( ऊ० २. १. ४ ) चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे (ऊ० ४. १. १०) । पवस्वेन्द्रमच्छे-

(सा० ६९२-६ )ति सत्रासाहीय-( ऊ० ९. २. ७ )श्रुध्ये (ऊ० ६. १. २०)। अयं पूषा रयिर्भग ( सा० ८१८-२० ) इति आसितं (ऊ० ११. २. २०) च क्रौञ्चं (ऊ० १५. १. १७) च। वृषा-मतीना-( सा० ८२१-३ )मिति याम-( ऊ० २. १. १० )मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। सर्वं त्रिवृत् ॥

इति द्वितीयमहः ॥ १२ ॥

---

## तृतीयमहः

तृतीयमहराह—

यां पूर्वा सोत्तरा ॥ १ ॥

या प्रथमस्याह्नः क्लृप्तिः सैव तृतीयस्येत्यर्थः ॥ १ ॥

इति तृतीयमहः ॥ १३ ॥

---

## चतुर्थमहः

चतुर्थमहराह—

पत्रस्वेन्द्रमच्छे-( सा० ६९२-६ )ति सत्रासाहीय-(ऊ० ६. २. ७) श्रुध्ये (ऊ० ९. १. २०)। वृषा मतीनां पवत (सा० ८२१-३) इति यामम् (ऊ० २. १. १०) अन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४)। साकमश्वं ( ऊ० १. १. १५ ) सौभरम् (ऊ० १. १. १६) आष्टादंष्ट्रम् (ऊ० २. १. १२) इत्युक्थ्यानि ॥ १ ॥

समानमितरं द्वितीयेनाह्ना त्रिककुभः ॥ २ ॥

इति । पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् ( सा० ७७५-८६ ) इति बहिष्पवमानम् । अग्निं दूत-(सा० ७९०-८०२)मित्याज्यानि । वृषा पवस्वे-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं (ऊ० ७.१.१) च । पुनानः सोम धारये-(सा० ६७५-६)ति आयास्ये (ऊ० १. २. २०; २. १. १) । वृषा शोण (सा० 5
८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च माधुच्छन्दसं ( ऊ० २. १. ४ ) चेति पृष्ठानि । यस्ते मदो वरेण्य-( सा० ८१५-७ ) इति गायत्र-मौक्षे ( ऊ० ४. १. १० ) । पवस्वेन्द्रमच्छे (सा० ६६२-६)ति सत्रासाहीय-( ऊ० ९. २. ७ )श्रुध्ये 10
( ऊ० ९. १. २० ) एकर्च्चयोः । अयं पूषा रयिर्भग ( सा० ८१८-२० ) इति आसित-(ऊ० ११. २. २०)मेकस्याम् । क्रौञ्चं ( ऊ० २. १. ९ ) तिसृषु । वृषा मतीना-( सा० ८२१-३ )मिति याम-(ऊ० २. १. १०)मन्त्यम् । यज्ञायज्ञीय-( ऊ० १. १. १४ ) मग्निष्टोमसाम । साकमश्वं ( ऊ० १. १. १५ ) सौभर-( ऊ० १. 15
१. १६ )माष्टादंष्ट्र-( ऊ० २. १. १२ )मित्युक्थानि । सर्वं पञ्चदशम् ॥

इति चतुर्थमहः ॥ १४ ॥

---

## पञ्चममहः

पञ्चममहराह— 20

एते असृग्रमिन्दवो ( सा० ८३०-२ ) राजा मेधाभिरीयते (सा० ८३३-५) इति पुरस्तात् पर्यासस्य तृचे । जनुषैकर्चयोः (सा० ७७२-३) सफ-(ऊ० १. २. १५)पौष्कले ( ऊ० ९. २. ३ )। तृतीयस्याह्नः उक्थानि ॥ १ ॥ 24

---

20. MyBKAT. पञ्चमस्याह्नः for पञ्चममहराह

समानमितरं ज्योतिष्टोमेन ॥ २ ॥

इति । उपास्मै-दविद्युतत्या रुचा ( सा० ६५१-६ ) एते असृग्रमिन्दवो-
राजा मेधाभिरीयते (सा० ८३०-५) पवमानस्य ते कवे (सा० ६५७-९)
इति बहिष्पवमानम् । अग्न आ याहि वीतये ( सा० ६६०-७१ )
5 इत्याज्यानि । उच्चा ते (सा० ६७२-४) गायत्रं चामहीयवं (ऊ०
१. १. १) च । पुनानः सोम धारये-( सा० ६७५-६ )ति रौरव-
यौधाजये (ऊ० १. १. २-३) । औशन-(ऊ० १. १. ४)मन्त्यम् ।
रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) च
नौधसं ( ऊ० १. १. ६ ) च कालेयं ( ऊ० १. १. ७ ) चेति
10 पृष्ठानि । स्वादिष्ठये-( सा० ६८९-९१ )ति गायत्र-संहिते (ऊ० १.
१. ८) । अया पवस्व देवयुः ( सा० ७७२ ) पवते हर्यतो हारि-
(सा० ७७३)रिति सफ-(ऊ० १. २. १५)पौष्कले (ऊ० ९. २. २)।
पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति श्यावाश्वान्धीगवे
(ऊ० १. १. ११-२)। काव-( ऊ० १. १. १३ )मन्त्यम् । सफ-
15 पौष्कलश्यावाश्वान्येकर्चेषु । यज्ञायज्ञीय-(ऊ० १.१.१४)मग्निष्टोमसाम ।
प्रमँहिष्ठीयं हारिवर्णं तैरश्च्य-( ऊ० २. २. ५-७ )मित्युक्थानि ।
सर्वं पञ्चदशम् ॥

इति पञ्चममहः ॥१५॥

---

## षष्ठमहः

20 चतुर्थस्याह्नः क्लृप्तिः षष्ठस्यातिदिशति—

या पूर्वा सोत्तरा ॥ १ ॥

इति ।

23 इति षष्ठमहः ॥१६॥

---

15. MyBKAT. एकर्चानि for एकर्चेषु

## सप्तममहः

सप्तममहराह—

तीव्रसुत आज्य बहिष्पवमानं माध्यंदिनश्च । संहितस्य लोकेऽग्नेरर्कः ॥ १ ॥

समानमितरमेतस्यैव रथन्तरेण पञ्चदशेन ॥ २ ॥

इति । उपास्मै गायता नरो दविद्युतत्या रुचा (सा० ६५१-६) एते असृग्रमिन्दवस् ( सा० ८३०-२ ) तं त्वा नृम्णानि बिभ्रतम् ( सा० ८३६-४० ) पवमानस्य ते कवे (सा० ७८७-६) इति बहिष्पवमानम् । अग्न-आ नो मित्रात्याहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति गायत्रं चामहीयवं ( ऊ० १. १. १) च । अभि सोमास आयव ( सा० ८५६-८ ) इति द्विहिंकारं (ऊ० ४. २. ७) च मैधातिथं ( ऊ० ६. ३. ६ ) च रौरवं ( ऊ० ७. १. १३ ) च यौधाजयं ( ऊ० १. १. ३ ) चौशन-(ऊ० १. १. ४)मन्त्यम् । द्विहिंकारमाद्यायाम् । यौधाजय-मध्यास्यायाम् । रथन्तरं ( र० १. १. १ ) च वामदेव्यं (ऊ० १. १. ५) च नौधसं ( ऊ० १. १. ६ ) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१)ति गायत्रं चाग्नेश्चार्कः ( र० ४. ३. ६ ) । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-पौष्कले ( ऊ० १. १. ९-१० ) एकर्चयोः । पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति श्यावाश्वा-(ऊ० १. १. ११-२)न्धीगवे । काव-(ऊ० १. १. १३)मन्त्यम् । यज्ञायज्ञीय-( ऊ० १. १. १४ )मग्निष्टोमसाम । प्रमँहिष्ठीयं स्वारं हारिवर्णं तैरश्च्य-(ऊ० २. १. ५-७)मित्युक्थानि । सर्वं सप्तदशम् ॥

इति सप्तममहः ॥ १७ ॥

## अष्टममहः

अष्टममहराह—

द्वितीयस्य स्वरसाम्न आज्यबर्हिष्पवमानं बृहती च । पवमानस्य ते वयम् ( सा० ७८७-९ ) इति पर्यासः । मौक्षस्य लोके
5 स्वाशिरामर्कः (र० १. २. १) ॥ १ ॥

समानमितरमेतस्यैव बार्हतेन पञ्चदशेन ॥ २ ॥

इति । पवस्व वाचो-पवस्वेन्दो-वृषा सोम द्युमाँ असि (सा० ७७५-८३) उत्ते शुष्मास ईरते ( सा० १२०५-९ ) पवमानस्य ते वयम् (सा० ७८७-९) इति बर्हिष्पवमानम् । अग्निं दूत-( सा० ७९०-८०२ )
10 मित्याज्यानि । वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं ( ऊ० ७. १. १ ) च । परीतो षिञ्चता सुत-(सा० १३१३-५ )मिति समन्तं ( ऊ० ९. १. ३ ) च दैर्घश्रवसं (ऊ० ५. २. ४) चायास्यं ( ऊ० ७. १. ४ ) च । वृषा शोण ( सा० ८०६-९ ) इति पार्थ-( ऊ० ७. १. ६ )मन्त्यम् ।
15 ककुबुष्णिहाविकचौं । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । साकमश्वं (ऊ० १. १. १५) सौभर-( ऊ० १. १. १३ )माष्टादंष्ट्र-(ऊ० २. १. १२)मित्युक्थानि । सर्वं सप्तदशम् ॥

इति अष्टममहः ॥ १८ ॥

---

## नवममहः

20 या सप्तमस्याह्नः क्लृप्तिः सैव नवमस्येत्याह—

21 या पूर्वा सोत्तरा ॥ १ ॥

---

13. V²CL, आयास्ये for आयास्यं

इति । तत्र विशेषमाह—

तस्याग्नेरर्कस्य लोके संहितम् (ऊ० १. १. ८) कावस्य दीर्घतमसोऽर्कः (र० ४. १. ६) । उद्वंशीयान्तान्युक्थानि ॥ २ ॥

स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९७-६)ति सफपौष्कले (ऊ० १. १. ६-१०) एकर्चयोः । पुरोजिती वो अन्धस (सा० ६६७-६) इति श्यावाश्वा-(ऊ० १.१.११-१२) न्धीगवे । कावस्यर्क्षु दीर्घतमसोऽर्कोऽन्त्यः (र० ३. १. १०) इत्यार्भवः । प्रभँहिष्ठीयं हारिवर्णं तैरश्च्य-(ऊ० २. १. ५-७)मित्युक्थानि । इतरत् सप्तमेनाह्ना समम् ॥ २ ॥

इति नवममहः ॥ १६ ॥

---

## दशममहः

दशममहराह—

एकविंशोऽतिरात्रः । य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशी ॥ १ ॥

इति । अत्र निदानम्—तस्य स्तोमान्वयी षोडशीत्यविचारमेकविंश (नि०सू० ६. ४) इति ॥ १ ॥

इति दशममहः ॥ २० ॥

इति कुसुरुबिन्ददशरात्रः समाप्तः ॥

---

## छन्दोमवान् दशरात्रः

### [ प्रथमादिपञ्चमान्तान्यहानि ]

अभ्यासङ्गयः पञ्चाहश्चत्वारश्छन्दोमा विश्वजिदतिरात्रः (तां० ब्रा० २२. १६) इत्यनुवाकेन छन्दोमवान् दशरात्र उक्तः । तस्य कल्पः—

5 पृष्ठ्यावलम्ब्यस्य पञ्चाहः । प्रथमस्याह्नः प्रत्नवद् (सा० ७५५-६३) बहिष्पवमानम् ॥ १ ॥

पञ्चमस्याह्नोऽसृक्षते-(सा० १०३४-६)त्यनुरूपः ॥ २ ॥

इति । अत्र विश्वजिता छन्दोमानां प्रत्यूहितत्वात् षष्ठस्याह्नो लोपान्नवाहयोगाभावेऽपि दशमस्य विद्यमानत्वात्तदर्थं प्रत्नवतो 10 नवर्चस्य विधानार्थं षाष्ठिकश्चानुरूपो दशमार्थमेव पञ्चमे विधीयते । उक्तं हि—दशमस्य बहिष्पवमानम् । द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः । प्रथमाच्च बहिष्पवमानम् । तन्नवर्च-( ला० श्रौ० ३. ७. १ )मित्यादि ॥

प्रथमस्याह्नः—अस्य प्रत्ना-(सा० ७५५-६३) नवर्चं बहिष्पवमानम् । 15 अग्न-आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ )त्याज्यानि । प्र सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रमाश्वं (ऊ० १. २. ११) सोमसामे-( ऊ० १. २. १२ )ति सामतृचः । प्र सोम देववीतये ( सा० ७६७-८ ) इति यौधाजयं ( ऊ० १. १. १३ ) तिसृषु । औशन-(ऊ० १. १. ४)मन्त्यम् । रथन्तरं (र० १.१.१) 20 च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं ( ऊ० १. १. ७ ) चेति पृष्ठानि । स्वादिष्ठये-( सा० 22 ६८९-९१)ति गायत्र संहिते (ऊ० १. १. ८) । अया पवस्व देवयुः

9. My. विद्यमानात् for विद्यमानत्वात् ; BTKA. तदर्थः for तदर्थं
10. $LV^2$. षाष्टक. ; KA. षाष्टीकः ; T. षाष्ठीकः for षाष्ठिकः ; $V^2$CMyBKAT. after एव ins. अत्र ; L. अपञ्चमे for पञ्चमे
11. $LV^2$C. रिहि for उक्तं हि

(सा० ७७२) पवते हर्यतो हरि-(सा० ७७३)रिति सफा-(ऊ० १. २. १५-६)क्षारे । प्र सुन्वानायान्धस (सा० ७७४) इति औदल-(ऊ० ११. २. ३)गौतमे (ऊ० १. २. १८) । काव-(ऊ० १. १. १३)मन्त्यम् । सफाक्षारौदलान्येकर्चानि । यज्ञायज्ञीय-(ऊ० १.१.१४)मग्निष्टोमसाम । द्वे त्रिवृती सवने । पञ्चदशमेकम् ॥

द्वितीयस्याह्नः—पवस्व वाचो-पवस्वेन्दो-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-८९) इति बहिष्पवमानम् । अग्निं दूतं-मित्रं हुवे इन्द्रमिद्गाथिनः-इन्द्र अग्ने-(सा० ७९०-८०२)त्याज्यानि । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च यौक्ताश्वं (ऊ० १. २. १९) च । पुनानः सोम धारये-( सा० ६७५-६ )ति आयास्ये (ऊ० १. १. २०; १. २. १)। वृषा शोण ( सा० ८०६-८ ) इति इहवद्वासिष्ठ-(ऊ० २. १. २)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० २. १. ३ ) च माधुच्छन्दसं (ऊ० २. १. ४) चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च हाविष्मतं (ऊ० २. १. ५) च । पवस्वेन्द्रमच्छे-(सा० ६९२; ६९४)ति एकर्चयोः शङ्कु-(ऊ० २.१. ६-७) सुज्ञाने । अयं पूषा रयिर्भग (सा० ८१८-२०) इति आसितं (ऊ० ११. २. २०) च क्रौञ्चं ( ऊ० २. १. ९ ) च । वृषा मतीना-(सा० ८२१-२)मिति याम-( ऊ० २. १. १० )मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । साकमश्व-(ऊ० १. १ १५)मामहीयव-( ऊ० १. १. १ )माष्टादंष्ट्र-( ऊ० २. १. १२ ) मित्युक्थानि । द्वे पञ्चदशे सवने । सप्तदशमेकम् ॥

तृतीयस्याह्नः—दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो-राजा मेधाभिरीयते-तं त्वा नृम्णानि बिभ्रतम्-इषे पवस्व धारये-(सा० ८३०-४३)ति बहिष्पवमानम् । अग्निना-मित्रं हुवे-इन्द्रेण-ता हुवे (सा० ८४४-४५) इत्याज्यानि । उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २.१.१३) च । अभि सोमास आयव (सा० ८५६-८) इति पौरुमद्ग-( ऊ० २. १. १४ )माधायाम् । गौतमा-(ऊ० २. १. १५)न्तरिक्षे (र० १. १. ६) तृचयोः । आष्कारणिधन-

मध्यास्यायाम् (ऊ० २. १. १६)। तिस्रो वाच (सा० ८५६-६१) इति अङ्गिरसां संक्रोशोऽन्त्यः (ऊ० २. १. १७)। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च महावैष्टम्भं (ऊ० २. १. १८) च रौरवं (ऊ० २. १. १९) चेति पृष्ठानि। तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्रं च पाष्ठौहं (ऊ० २. १. २०) च। आ सोता परि षिञ्चत (सा० १३९४) सखाय आ निषीदत-(सा० ११५७)ति वाचश्च साम (ऊ० २.२.१) शौक्तं (ऊ० २. २. २) च। सुतासो मधुमत्तमा (ऊ० ८७२-४) इति त्वाष्ट्रीसामनी स्वाराद्यत्रिणिधने (ऊ० १५. २. १; २. २. ४) पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १. १. ८)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-(ऊ० २. २. ७) मित्युक्थानि। द्वे सप्तदशे सवने। एकविंशमेकम्॥

चतुर्थस्याह्नः—पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्रयद्गावो न भूर्णयः (सा० ८९२-७) आयुरर्ष बृहन्मते (सा० ८९८-९०३) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) इति बहिष्पवमानम्। अग्निर्वृत्राणि जङ्घनत् (सा० १३९६-८)। अयं वां मित्रावरुणा-इन्द्रो दधीचो अस्थभिर्-इयं वामस्य मन्मनः (सा० ९१०-८) इत्याज्यानि। पवस्व दक्षसाधन (सा० ९१९-२१) इति गायत्रं चाथर्वणं (र० १. १. ९) च निधनकामं (ऊ० २. २. ८) च। तवाहं सोम रारणे-(सा० ९२२-३) त्याष्टादंष्ट्र-(ऊ० २. २. ९)माभीशवं (ऊ० २. २. १०) स्वः-पृष्ठमाङ्गिरसम् (ऊ० २. २. ११)। सोमः पवते जनिता मतीना-(सा० ९४३-५)मिति जनित्र-(ऊ० ८. २. १)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च पृश्नि (ऊ० २. २. १४) चेति पृष्ठानि। परि-प्रिया दिवः कवि-(सा० ९३५-७)रिति गायत्रं चौर्णायवं (ऊ० २. २. १५) च। बृहच्च (र० १. १. ५) भारद्वाजं (ऊ० ६.

२. १५) च । त्वं ह्यङ्ग दैव्य ( सा० ६३८-६ ) सोमः पुनान ऊर्मिणे-( सा० ६४०-२ )ति बृहत्का-( ऊ० २. २. १६ )तीषादीये (ऊ० २. २. १७)। पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति नानदं ( ऊ० २. २. १८ ) चान्धीगवं ( ऊ० १. १. १२ ) च शुद्धाशुद्धीयं ( ऊ० २०. १. १८ ) च । प्र त आश्विनी-(सा० ८८६-८)रिति लौश-(ऊ० ८.२.२)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १.१.१४) मग्निष्टोमसाम । सैन्धुक्षितं ( ऊ० २. २. २० ) सौभरं (ऊ० १. १. १६) वसिष्ठस्य प्रिय ( ऊ० ३. १. १ )मित्युक्थानि । षोडशिन उद्धारः। द्वे एकविंशे सवने । त्रिणवमेकम् ॥

पञ्चमस्याह्नः—पवमानस्य विश्ववविद् (सा० ६५८-६०) असृक्षत प्र वाजिनः ( सा० १०३४-६ ) प्र सोमासो अधन्विषुः ( सा० ६६१-७ ) प्र कार्वेदेववीतये ( सा० ६६८-७४ ) यवं यवं नो अन्धसा (सा० ६७५-७८) यास्ते धारा मधुश्चुतः ( सा० ६७६-८१ ) इति बहिष्पवमानम् । अग्नं स्तोमं मनामहे (सा० १४०५- ) पुरूरुणा-चिद्ध्यस्ति-उत्तिष्ठन्नोजसा सह-इन्द्राग्नी युवाम् ( सा० ६८५-८६ ) इत्याज्यानि । अर्षा सोम द्युमत्तम ( सा० ६६४-६ ) इति गायत्रं च यण्वं (र० १. २. १) च शाकलं (ऊ० ३. १. ३) च वार्शं (ऊ० ३. १. ४) च । सोम उष्वाणः सोतृभि ( सा० ९९७-८ )रिति मानवं (ऊ० ३.१.५) चानूपं (ऊ० ३.१.६) च वाभ्रं (ऊ० ३. १. ७) चाग्नेस्त्रिणिधनम् (ऊ० ३. १. ८)। इन्दुर्वाजी-(सा० १०१९-२१ )ति सम्पान्त्य-(ऊ० ८. २. ५)मन्त्यम्। रथन्तरं ( र० १. १. १ ) च वामदेव्यं ( ऊ० १. १. ५ ) च बार्हद्गिरं ( र० १. २. २ ) च रायोवाजीयं (र० १. २. ४) चेति पृष्ठानि । असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च संतनि ( ऊ० ३. १. १० ) च ऐडं च सैन्धुक्षितं (ऊ० १६. १. ४) गौषूक्तं (ऊ० ७. १. १९) च । अभिद्युम्नं बृहद्यशः ( सा० १०११-२ ) प्राणा शिशुर्महीना-( सा० १०१३-५)मिति च्यावन-(ऊ० ३. १. ११)क्रोशे ( ऊ० ३.१.१२ )। पवस्व वाजसातये ( सा० १०१६-८ ) इति त्वाष्ट्रीसाम च

यत्साभ्यासम् ( ऊ० ८. २. ६ ) । ऋषभश्च शाक्वरः (र० १. २. ५) पार्थं (ऊ० ३. १. १४) चाष्टेडं च पदस्तोभः (र० १. २. ६) । गोवित्पवस्वे-( सा० ६५५-७ )ति द्व्यभ्याघातं लौश (ऊ० ८. २. ७)मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । संजयं (ऊ० ३. १. १६) च सौमित्रं (ऊ० ३. १. १७) च वैश्वामित्रं (ऊ० ३.१.१८)चेत्युक्थानि। द्वे त्रिणवे सवने । त्रयस्त्रिंशमेकम् ॥ २ ॥

इति पञ्चममहः ॥ २१ ॥

---

## षष्ठमहः

अथ चत्वारश्छन्दोमाः । दशरात्रे सप्तमादीनि चत्वार्यहानि । तान्यत्र षष्ठादीनि । तेषां प्रथमस्य समूढक्लृप्तिमाह—

ये सोमासः परावतीति ( सा० ११६३-५ ) प्रतिपत् । ऋतावनं वैश्वानरम् (सा० १७०८-१०) इति होतुराज्यम् । कण्वरथन्तरस्य लोके सोमसाम ( ऊ० १७. १. १६ ) प्र काव्यमुशनेव ब्रुवाण (सा० १११६-८) इति वाराहमन्त्यम् ( ऊ० १६. २. १९ ) । आत्रेयं स्वरः ( ऊ० १७. १. १७ ) । प्रो अयासीद् (सा० ११५२-४ ) इति ऐडं यज्ञसारथि ( ऊ० १७. १. ५ ) अन्त्यम् ॥ १ ॥

समानमितरं सप्तमेनाह्ना द्वादशाहस्य ॥ २ ॥

इति । ये सोमासः परावति (सा० ११६३-५) प्र स्वानासो रथा इव (सा० १११९-२७) असृग्रमिन्दवः पथा (सा० ११२८-३९) आ ते दक्षं मयोभुवम् (सा० ११३७-९) इति बहिष्पवमानम् । ऋतावनं वैश्वानरं । प्र वो मित्राय गायत-इन्द्रायाहि चित्रभानो-तमीडिष्व यो अर्चिषे-(सा० ११४३-५१)त्याज्यानि । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च सन्तनि ( ऊ० ४. १. १ ) च स्वारं सौपर्णं (ऊ० ११. २. १५) च रोहितकूलीयं ( ऊ० ४. १. ३ )

च । पुनानः सोम धारये-(सा० ६७५-६)ति सोमसाम (ऊ० १६. २. १६) च गौङ्गवं (ऊ० ४. १. ५) च द्विनिधनमायास्यम् (ऊ० ४. १. ६) । प्र काव्यमुशनेव ब्रुवाण (सा० १११६-६) इति वाराह-(ऊ० १६. २. १६)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) चाभिनिधनं काण्वं (ऊ० ४. १. ८) च वैखानसं (ऊ० ४. १. ६) चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं मौक्ष-(ऊ० ४. १. १०)मध्यर्धेडं सोमसामे-(ऊ० ८. ३. ८)ति सामतृचः । अग्नेरर्कास्तिसृषु (र० १. ३. १) । एष स्य धारया सुत-(सा० ५८४) सखाय आ निषीदते-(सा० ११५७-६)ति शार्कर-(ऊ० ४.१.११)प्लवौ (ऊ० ४.१.११-२)। पुरोजिती वो अन्धस (सा० ६६७-६) इति आत्रेयं (ऊ० १६. २. १७) च कार्तयशं (ऊ० ४. १. १४) च । प्र वाज्यक्षा (सा० ११६०-२) इति सौहविषम् (ऊ० ४. १. १५) । प्रो अयासी-(सा० ११५२-४)दित्यैडं यज्ञसारथ्य-(ऊ० १६. २. ५) न्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । वात्सं (ऊ० ४. १. १७) च सौश्रवसं (ऊ० ४. १. १८) च वीङ्कं (ऊ० ४. १. १६) चेत्युक्थानि । सर्वं चतुर्विंशम् ॥ २ ॥

इति षष्ठमहः ॥ २२ ॥

---

## सप्तममहः

द्वितीयस्य छन्दोमस्य समूढक्लृप्तिमाह—

हिन्वन्ति सूरमुस्रयः (सा० ६०४-६) इति प्रतिपत् । विश्वेभिरग्नेरग्निभिर् (सा० १६१७-९) इति होतुराज्यम् । उद्धवाइ शिशु-(सा० ११७५-७)मिति वासिष्ठम् (ऊ० १७.१.१८) अन्त्यम् ॥१॥

कौत्सं स्वारो (ऊ० १७.१.१६) हाउ धर्ते-(सा० १२२८-३०) त्यैडं शार्ङ्गम् (ऊ० १७. १. २०) अन्त्यम् ॥ २ ॥

समानमितरमष्टमेनाह्ना द्वादशाहस्य ॥ ३ ॥

इति। हिन्वन्ति सूरमुस्रयः (सा० ६०४-६) एते सोमा अभि प्रियम् ( सा० ११७८-८६ ) सोमः पुनानो अर्षति ( सा० ११८७-६५ ) सोमा असृग्रमिन्दवः ( सा० ११६६-२०४ ) उत्ते शुष्मास ईरते (सा० १२०५-६) अयावीती परिस्रवं ( सा० १२१०-२ ) अपघ्नन् पवते मृधः (सा० १२१३-५) अया पवस्व धारये-(सा० १२१६-८)ति बहिष्पवमानम्। विश्वेभिरग्ने अग्निभिर् ( सा० १६१७-६ )मित्रं वयं हवामहे ( सा० ७६३-५ ) तमिन्द्रं वाजयामसि ( सा० १२२२-४ ) इन्द्रे अग्ना नमो बृहत् ( सा० ८००-२ ) इत्याज्यानि। अध्वर्यो अद्रिभिः सुतम् (सा० १२२५-७) इति गायत्रं च वैरूपं (ऊ० ४. १. २०) चाशुभार्गवं (ऊ० ४. २. १) च मार्गीयवं (ऊ० ४.२.२) च सौमित्रं (ऊ० ४. २. ३) चैटतं (ऊ० ४. २. ४) च साकमश्वं ( ऊ० ४. २. ५ ) च विलम्बसौपर्णं ( ऊ० ४. २. ६ ) च। अभि सोमास आयवः ( सा० ८५६-८ ) इति द्विहिंकारं च वामदेव्यं (ऊ० ४. २. ७) च गायत्रपार्श्वं (ऊ० ४. २. ८) च पौरुहन्मनं (ऊ० ४. २. ६) च द्वैगतं (ऊ० ४. २. १०) च हारायणं (ऊ० ४. २. ११) चाच्छिद्रं ( ऊ० ४. २. १२ ) च बार्हदुक्थं ( ऊ० ४. २. १३ ) च। हाइ उहु वाइ शिशु-(सा० ११७५-७)मिति वासिष्ठ-(ऊ० १७. १. ७)मन्त्यम्। द्विहिंकारं प्रथमायाम्। बार्हदुक्थमध्यास्यायाम्। रथन्तरं ( र० १. १. १ ) च वामदेव्यं (र० १. १. ५) च नैपातिथं (ऊ० ४. १. १५) च वैयश्वं (ऊ० ४. १. १६) चेति पृष्ठानि। पवस्व देवः आयुष-(सा० १२३५-७)गिति गायत्रं च स्वाशिरामर्कः (र० १. ३. २) सुरूपं (ऊ० ४. २. १७) भासं (ऊ० ४. २. १८) च काक्षीवतं (ऊ० ४. २. १६) च गायत्रसामासितं (ऊ० ४. २. २०) च। अभिद्युम्नं बृहद्यशः (सा० १०११) प्राणा शिशुर्महीना-(सा० १०१३)मिति ऐषिरत्रैते (ऊ० ५. १. १२)। अभी नो वाजसातमम् (सा० १२३८-४०) इति स्वारं च कौत्स-( ऊ० १६. २. १६ )मैडं

च कौत्सं (ऊ० ५. १. ४) वा। शुद्धाशुद्धीयं (ऊ० ४. १. ५) च क्रौञ्चं (ऊ० ५. १. ६) च रयिष्ठं (ऊ० ५. १. ७) च औदलं (ऊ० ५. १. ८) च। पवस्व सोम महान्त्समुद्र (सा० १२४१-३) इति धर्मं (ऊ० ४. २. ६)। हाउ धर्ते-(सा० १२२८-३०)त्यैडं शार्ङ्ग-(ऊ० १७. १. २०)मन्त्यम्। ऐषिरत्रैते एकर्चे। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। गायत्रौशनं (ऊ० ५. १. ११) सांवर्तं (ऊ० ५.१.१२) मारुत-(ऊ० ५. १. १३)मित्युक्थानि। सर्वं चतुश्चत्वारिंशम्। तत्र समीपन्तीप्रयोगावुक्तौ ॥ ३ ॥ 5

इति सप्तममहः ॥ २३ ॥

---

### अष्टममहः 10

तृतीयस्य छन्दोमस्य समूढक्लृप्तिमाह—

उपोषु जातमप्तुरम् (सा० १३३५-७) इति प्रतिपत्। उप त्वा रण्वसंदृशम् (सा० १७०५-७) इति होतुराज्यम्। हाउ हुवा अक्रान् (सा० १२५३-५) इति वासिष्ठम् (ऊ० १७. २. १) अन्त्यम्। परि त्यं हर्यतं हरिम् (सा० १३२६-३१) इति गौरीवितलोके आसित-(ऊ० १७.२.२)मेकस्याम्। दीर्घतमसोऽर्कं (ऊ० ४. १. १३) एकस्याम्। आकूपारमेकस्याम् यत् स्वयोनि (ऊ० १७. २. ३)। असावि सोमो अरुषो वृषा हरिर् (सा० १३१६-८) इति ऐडं यामम (ऊ० १७. २. ४) ॥ १ ॥ 15

समानमितरं नवमेनाह्ना द्वादशाहस्य ॥ २ ॥ 20

---

1. LCV[2]. च for वा
6. L. गायत्र्योशनं for गायत्रौशनं

इति। उपोषु जातमप्तुरम् (सा० १३३५-७) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्या (सा० १२६६-७३) एष उ स्य वृषा रथः (सा० १२७४-६) एष वाजी हितो नृभिर् (सा० १२८०-५) एष कविरभिष्टुतः (सा० १२८६-९१) स सुतः
5 पीतये वृषा (सा० १२९२-७) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। उप त्वा रण्वसदृशं (सा० १७०५-७) मित्रं हुवे पूतदक्षम् (सा० ८४७-९) महाँ इन्द्रो य ओजसा (सा० १३०७-९) ता हुवे ययोरिदम् (सा० ८५३-५) इत्याज्यानि। पवमानस्य जिघ्नतः (सा० १३१०-१२) इति गायत्रं चादारसृच्च (ऊ० ५.१.१४)
10 सुरूपं (ऊ० ५. १. १५) च हरिश्रीनिधनं (ऊ० ५. १. १६) च सैन्धुक्षितं (ऊ० ५. १. १७) च बाभ्रवं (ऊ० ५. १. १८) चेडानां संक्षार-(ऊ० ५. १. १९)मृक्रृषभश्च पवमानः (ऊ० ५. १. २०)। परीतो षिञ्चता सुत-(सा० १३१३-५)मिति पृष्ठं (ऊ० ५. २. १) तिसृषु। कौल्मलबर्हिष-(ऊ० ५. २. २)मर्कपुष्पं (ऊ०
15 ५. २. ३) दैर्घश्रवस-(ऊ० ५. २. ४)मिति सामतृचः। देवस्थानं (र० १. ३. ३) तिसृषु। संकृति तृचे (र० १. ३. ४)। वैयश्व-मेकस्याम् (ऊ० ५. २. ५)। भर्गस्तिसृषु (र० १. ३. ५)। आभीशवमेकस्याम् (ऊ० ७. २. ४)। यशस्तिसृषु (र० १.३.६)। वासिष्ठ-(ऊ०२.१.२)मध्यास्यायाम्। हाउ उहु वा अक्रानिति वासिष्ठ-(ऊ०
20 १६. २. १)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ९) च समन्तं (ऊ० ५. २. १०) चेति पृष्ठानि। त्वं सोमासि धारयु-(सा० १३२३-५)रिति गायत्रं चाश्वसूक्तं (ऊ० ५. २. ११) च शाम्मदं (ऊ० ५. २. १२) च दावसुनिधनं (ऊ० ५.२.१३) च प्रतीचीनेडं च काशीतं (ऊ० ५.
25 २. १४) च हाविष्कृतं (ऊ० ५. २. १५) च। त्वं ह्यङ्ग दैव्य (सा० ९३८-९) पवस्व देववीतये (सा० १३२६-८) इति सौपर्णं
27 (ऊ० ५. २. १६) च वैश्वमनसं (ऊ० ५. २. १७) च।

16. V²C. Om. संकृति तृचे

परि त्यं हर्यतं हरि-( सा० १३२९-३१ )मिति आसितोत्तरं (ऊ० १७. १. २) दीर्घतमसोऽर्कः (र० १. ३. ४) स्वयोन्याकूपार-(ऊ० १. २. ४)मिति सामतृचः। निहवं (ऊ० ५. २. १९) तिसृषु। यद्वाहिष्ठीयं (ऊ० ५. २. २०) चासितं (ऊ० ६. १. १) च साध्रं (ऊ० ६. १. २) चाकूपारं (ऊ० ६. १. ३) च। पवस्व सोम महे दक्षाये-(सा० १३३२-४)ति विधर्मं (ऊ० ६. १. ४)। असावि सोमो अरुषो वृषा हरिर् (सा० १३१६-८) इत्यैडं याम-(ऊ० १७.१.४)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १.१.१४)मग्निष्टोमसाम। ऐध्मवाहं (ऊ० ६. १. ६) त्रैककुभ-(ऊ० ६. १. ७)सुद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि। सर्वमष्टाचत्वारिंशम् ॥ २ ॥

इत्यष्टममहः ॥ २४ ॥

---

## नवममहः

चतुर्थस्य छन्दोमस्य क्लृप्तिमाह—

अन्तरोत्सेधनिषेधौ मैधातिथम्। आ जागृविर् (सा० १३५७-९) इत्यौशनम् (ऊ० १७. २. ५) अन्त्यम्। स्त्राशु रथन्तरर-(० १. १. १) वामदेव्ये (ऊ० १. १. ५)। परि प्र धन्वे-(सा० १३६७-९)ति वाजजित् (सा० १७. २. ६)। सूर्यवतीषु (सा० १३७०-२) कावम् (ऊ० ९. २. ११) अन्त्यम् ॥ १ ॥

यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम ॥ २ ॥

समानमितरं दशमेनाह्ना द्वादशाहस्य ॥ ३ ॥

इति। असृक्षत प्र वाजिनः (सा० १०३४-६) पवमानस्य विश्वजित् (सा० ९५८-६०) पवमानो अजीजनत् (सा० ८८९-९१) एते असृग्रमिन्दवः (सा० ८३०-२) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) अस्य प्रत्ना (सा० ७५५-६३) नवर्चम् इति बहिष्पवमानम्।

सुषमिद्धो न आवह (सा० १३४७-५०) यदद्य सूर उदिते (सा० १३५१-३) उ त्वा उन्दन्तु सोमा (सा० १३५४-६) इन्द्राग्नी आगतं सुतम् (सा० ६६९-७१) इत्याज्यानि। उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १)
5 चाजिगं (ऊ० ६. १. ९) चाभीकं (ऊ० ६. १. १०) च। पुनानः सोम धारये-(सा० ६७५ ६)त्युत्सेधश्च (ऊ० ६. १. ११) मैधातिथं (ऊ० १३. १. ७) च निषेधं (ऊ० ६. १. १३) चाजागृवि-(सा० १३५७-९)रित्यौशन-(ऊ० १७. १. ५)मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च।
10 उदु त्ये मधुमत्तमा (सा० १३६२-३) इत्यभीवर्तः (ऊ० ६. १. १६) स्वासु कालेय-(ऊ० १. १. ७)मिति पृष्ठानि। स्वादिष्ठये-(सा० ६८९-९१)ति गायत्र-संहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-(ऊ० १. १. ९)रोहितकूलीये (ऊ० ६. १. १७)। पर्यूष्वि-(सा० १३६४-६)ति श्यावाश्वा-(ऊ० ६.१.१८)न्धीगवे
15 (ऊ० ६.१.१९)। परि प्र धन्वे-(सा० १३६७-९)ति वाजजित् (ऊ० ७. १.६)। सूर्यवतीषु (सा० १३७०-२) काव-(ऊ० ९.२.११)मन्त्यम्। सर्वं चतुर्विंशम्। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। त्रयस्त्रिंशम्। अत्र दशमधर्मा मानसं च कर्तव्याः। सह धर्मैः सर्वत्र पृष्टः स्याद्दशमव्रते (ला० श्रौ० ३. ६. १६-७) चेति वचनात्।
20 दशमस्याह्नोऽनङ्गमेके मानसं ब्रुवते (ला० श्रौ० १०. ३. १) इत्युपक्रम्या-गन्तु स्यादधिकृत्याम्नाना-(ला०श्रौ० १०.३.४)दिति वचनाच्च ॥ ३ ॥

22 इति नवममहः ॥ २५ ॥

---

19. T व्रतं for व्रते

## दशममहः

दशममहराह—

विश्वजिदतिरात्रः ॥ १ ॥

इति ॥ १ ॥

इति दशममहः ॥ २६ ॥ 5

इति छन्दोमवान् दशरात्रः समाप्तः ॥

---

## देवपूर्दशरात्रः

### प्रथममहः

त्रिष्टोमोऽग्निष्टोमो ज्योतिरुक्थ्यस्त्रिष्टोमोऽग्निष्टोमो गौरुक्थ्यो-ऽभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयुरुक्थ्यो विश्वजिदग्नि- 10
ष्टोमस्य सर्वस्तोमोऽतिरात्रः (तां० ब्रा० २२. १७) इत्यनुवाकेन देवपूर्दशरात्र उक्तः। तस्य कल्पः—

त्रिष्टोमोऽग्निष्टोमोऽयमेव ॥ १ ॥

अयमिति सर्वप्रकृतिभूतो ज्योतिष्टोमः परामृश्यते ॥ १ ॥

तस्य त्रिष्टोमत्वं यथा स्यात् तथा दर्शयति— 15

तस्य सवनभाजः स्तोमाः समावद्भाजो वा ॥ २ ॥

त्रिवृत्पञ्चदशसप्तदशास्त्रयस्तोमा यथाक्रमं त्रीणि सवनानि भजन्त इति सवनभाजः। चत्वारि स्तोत्राणि त्रिवृन्ति। चत्वारि पञ्चदशानि चत्वारि सप्तदशानीत्येवं समानि स्तोत्राणि भजन्त इति समावद्भाजो वा स्युरित्यर्थः। समावच्छब्दः समानापरपर्याय इति प्रथममहरुक्तम् ॥२॥ 20

इति प्रथममहः ॥२७॥ 21

---

11. V²CL. पूर्वं (L. पूर्वं) दशरात्रः, BTMy. पूर्दशरात्रः, K. पुनर्दशरात्रः for देवपूर्दशरात्रः

14. V²CL. संसर्प, T. सर्वत्र for सर्व

17. MyBKAT. Om. स्तोमाः··· अहरुक्तम् ॥ ज्योतिर्···साह॰ (p. 438, L. 3)

## द्वितीयमहः

### द्वितीयमहराह—

ज्योतिरुकूथ्यः । तस्य साहस्रं बहिष्पवमानं यथा प्रथमस्य । संहितस्य लोके मौक्षम् ( ऊ० १२. २. ४ ) नार्मेधस्याष्टादंष्ट्रम् (ऊ० २. १. १२)। उद्धरति रात्रिम् ॥ १ ॥

समानमितरं द्वितीयेनैकस्तोमेन ॥ २ ॥

इति । पवस्व वाचो अग्रियो ( सा० ७७५-७ ) दविद्युतत्या रुचा (सा० ६५४-६) पवमानस्य ते कवे (सा० ७८७-९) इति बहिष्पवमानम्। अग्निं दूतं-मित्रं वयमिन्द्रमिद्गाथिनो-इन्द्रे अग्ने-(सा० ७९०-८०२) त्याज्यानि । उच्चा ते जातमन्धस (सा० ६७२-५) इति गायत्रं चामहीयवं ( ऊ० १. १. १ ) च । पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं ( ऊ० ६. २. २ ) च यौधाजयं (ऊ० १. १. ३) च। वृषा शोण ( सा० ८०६-८ ) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च कालेयं ( ऊ० १. १. ७ ) चेति पृष्ठानि । स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रमौक्षे (ऊ० १२. २. ४)। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफ-( ऊ० १. १. ८ ) श्रुध्ये (ऊ० ८.१.२०)। पुरोजिती वो अन्धस ( सा० ६९७-९ ) इति श्यावाश्वान्धीगवे (ऊ०१.१.११-२)। सूर्यवतीषु (सा०१३७०-२) काव-(ऊ० ९. २. ११)मन्त्यम्। सफश्रुध्ये एकर्चयोः । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। साकमश्वं ( ऊ० १. १. १५) सौभर-(ऊ० १. १. १६)माष्टादंष्ट्र-(ऊ० २. १. १२)मित्युक्थानि । ज्योतिरिति समाख्यया ज्योतिष्टोमा स्तोमाः । उकूथ्य इति वचनाद्रात्रेः षोडशिनश्चोद्धारः । अत्र निदानम्— उकूथ्यसंस्थं ज्योतिषं बृहत्पृष्ठं बार्हतं तन्त्र-(नि० सू० ९. ६)मित्यादि ॥२॥

इति द्वितीयमहः॥ २८ ॥

---

## तृतीयमहः

या प्रथमस्य क्लृप्तिः सैव तृतीयस्येत्याह—

या पूर्वा सोत्तरा ॥ १ ॥

इति ॥ १ ॥

इति तृतीयमहः ॥ २९ ॥ 5

---

## चतुर्थमहः

चतुर्थमहराह—

गौरुकृथ्यः ॥ १ ॥

इति । ऐकाहिकोऽयम् ॥ १ ॥

इति चतुर्थमहः ॥ ३० ॥ 10

---

## पञ्चममहः

पञ्चममहराह—

अभिजिदग्निष्टोमः । तस्याभिजितः पुनानः सोम धारये-(सा० ६७५-७)ति अभीवर्तस्तिसृषु ( ऊ० ८. २. १३)। रौरवमेकस्याम् (ऊ० १. १. २) । कण्वरथन्तरमेकस्याम् ( ऊ० ४. १. ४ )। 15 मैधातिथमेकस्याम् ( ऊ० ८. १. ७ ) । यौधाजयं तिसृषु (ऊ० १.१.३)। यद्यु वै कण्वरथन्तरं तृचस्थं चिकीर्षेदभीवर्तकण्वरथन्तरे अन्योन्यस्य स्थानं व्यतिहरेत् कण्वरथन्तरयौधाजये वा ॥ १ ॥

इति । पुनानः सोम धारयेत्यभीवर्तो रौरवयौधाजये इति पूर्वमुक्तम् । इह तु रौरवस्थाने रौरवं कण्वरथन्तरं मैधातिथमिति सामतृचः 20 कार्यः । यदि तु कण्वरथन्तरस्य रथन्तरपरोक्षत्वेनापचितत्वात् तृचे करणमिष्टं तदा पुनानः सोम धारयेति कण्वरथन्तरं तिसृषु । 22

---

20. A. °स्वस्थाने for स्थाने ; T before रौरवं ins. अभीवर्त

21. MyKAB. Om. कार्यः ··· सामतृचो (p.340, L. 1)

रौरवमभीवर्तो मैधातिथमिति सामतृचो यौधाजयं तिसृष्विति अभीवर्तस्तिसृषु रौरवं यौधाजयं मैधातिथमिति सामतृचः। कण्वरथन्तरं तिसृष्विति वा ॥ १ ॥

समानमितरम् ॥ २ ॥

5 इतरत् सर्वमैकाहिकेनाभिजिता समम्। अत्र गौरभिजितोर्द्वयोरपि बृहत्पृष्ठत्वात् जामितामाहुरित्यभिजितोर्मध्यंदिने कण्वरथन्तरं कल्पितम्। तथा च निदानम्—कण्वरथन्तरमभियन्ति रथन्तर-निधनानीति बृहत्संनिपातेषु-अजामिकरणानी-(नि०सू०१. १३)ति ॥ २ ॥

इति पञ्चममहः ॥

---

10 षष्ठमहः

षष्ठमहराह—

या पूर्वा सोत्तरा ॥ १ ॥

इति। गौरुकृथ्य एकाहः क्लृप्त इत्यर्थः ॥ १ ॥

इति षष्ठमहः ॥ ३२ ॥

---

15 सप्तमादिदशमान्तान्यहानि

सप्तमादीनि चत्वार्यहानि—

विश्वजिदग्निष्टोम आयुरुकृथ्यो विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः। एकाहक्लृप्ताः ॥ १ ॥

इति ॥ १ ॥

इति सप्तमादीन्यहानि ॥ ३३ ॥

20 इति दैवपूर्दशरात्रः समाप्तः ॥

---

17. LC. afer °रात्रः ins. इति

18. LC. before एका° ins. सर्वे°

## पौण्डरीक एकादशरात्रः

अभ्यासङ्गयः षडहस्त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्र (तां० ब्रा० २२. १८) इत्यनुवाकेन पौण्डरीक एकादशरात्र उक्तः । तस्य द्वादशाहोपसत्कत्वपक्षे द्वादशाहे सुत्यामित्यादि द्वादशाहवत् । षडुपसत्कत्वपक्षे षडहे सुत्यामित्यादि । सुत्यासु यज्ञसारथिगानम् । 5 लोकद्वारं सुब्रह्मण्या च प्रकृतिवदेव । स्तोमक्लृप्तिमाह—

प्रथमादिपञ्चमान्तान्यहानि

पृष्ठ्यावलम्बस्य पञ्चाहः ॥ १ ॥

इति । एष एव पञ्चाहो य ऋतूना-( आ० क० ७. १२. ४ ) मित्यादिना पृष्ठ्यावलम्बस्य पञ्चाह उक्तः । तस्य प्रथमस्य क्लृप्तिः—उपास्मै गायता नरः (सा० ६५१-३) उपोषु जातमप्तुरम् 10 ( सा० १३३५-७ ) पवमानस्य ते कवे ( सा० ६५७-९ ) इति बहिष्पवमानम् । विश्वरूपा ज्योतिर्गानयोर्धूर्गानानां च निवृत्तिः । अहिंकारविसृष्टहिंकारभकाराः प्रवर्तन्ते । अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं प्रथमायाम् । आश्वं (ऊ० ६. २. १२) द्वितीयायाम् । 15 सोमसाम (ऊ० १४. १. १३) तृतीयायाम् । प्र सोम देववीतये ( सा० ७६७-८ ) इति यौधाजयं ( ऊ० १४. १. १५) तिसृषु । औशन-(ऊ० १. १. ४)मन्त्यम् । रथन्तरं ( र० १. १. १ ) च वामदेव्यं (ऊ० १.१.५) च नौधसं (ऊ० १.१.६) च कालेयं (ऊ० १. १.७) चेति पृष्ठानि । अस्मिन् षडहे बृहद्रथन्तरयोस्तोत्रे पृष्ठ्ये 20 रथमतित्रहेयुर् ( ला० श्रौ० ३. ५. १-२ ) इत्यादिनोक्तौ रथदुन्दुभिघोषौ न कार्यौ । रथन्तरादिषट्पृष्ठसंप्रयोगे विहितत्वाद्रथघोषादीनाम् । 22

---

2. B². Ms. begins श्रीगणेशाय नमः अभ्यासङ्गः ···

9. LCV². °लम्बे for लम्बस्य ; T. after °लम्बस्य add : पौण्डरीकस्य

21. CV²MyIB¹⁻². रथन्तरदुन्दुभि for रथदुन्दुभि

22. MyBKAT. संप्रयोगनिमित्तत्वात्, CV². संप्रयुक्तत्वात् for संप्रयोगे विहितत्वात्

तदुक्तमुपग्रन्थे— कथं विप्रयुक्तानामिति क्रियेरन्नित्येके । संप्र-
युक्तानामाम्नानात् । कथं विप्रयुक्तानां प्रतियामेत्यथापि बृहद्रथन्तरयोः
संप्रयुक्तयोरेव तत्पृष्ठे रथन्यतिवर्तनं च दुन्दुभ्याहननं च भवति
नासंप्रयुक्तयो-(उ० ग्रा० सू० ३. ५)रिति । अयं च षडहो बृहद्रथन्तर-
5 पृष्ठ इति षट्पृष्ठसंप्रयोगोऽत्र नास्ति ॥

अथार्भवः । स्वादिष्ठये-(सा०६८९-६९१)ति गायत्र-संहिते (ऊ०
१. १. ८) । अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो
हरि-(सा० ७७३)रिति एकर्चयोः सफा-(ऊ० १. २. १५-६)क्षारे ।
प्र सुन्वानायान्धस (सा० ७७४) इत्यौदलं (ऊ० ११. २. ३)
10 प्रथमायाम् । गौतमं (ऊ० १. २. १८) तिसृषु । काव-(ऊ० १.१.१३)
मन्त्यम् । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । द्वे त्रिवृती
सवने । पञ्चदशमेकम् । प्रागुदयनीयादतिरात्राद्दधिभक्षान्तानि
सर्वाण्यहानि । अहरन्तेषु वसतीवरीपरिहरणकाले श्वःसुत्याप्रवचनी-
सनामग्रहा सुब्रह्मण्या कार्या । हारियोजनातिप्रैषकालेऽपि श्वः-
15 सुत्याप्रवचनीं सुब्रह्मण्यां केचिदिच्छन्ति । तत्सूत्रकारस्य नाभिमतमिति
पूर्वमेव प्रतिपादितम् ॥

द्वितीयस्याह्नो यज्ञसारथ्यादि सुब्रह्मण्यान्तं पूर्ववत् । पवस्व वाचो-
पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-
८९) इति बहिष्पवमानम् । द्वितीयादीनामह्नां बहिष्पवमानैः सदसि
20 स्तुवीरन् । प्राग्धिष्ण्यविहरणान्निष्क्रम्य तृणप्रासनप्रभृति चात्वाले
समापयेयुः । अग्निं दूतं-मित्रं वयम्-इन्द्रमिद्गा-चतुर्ऋचम् । इन्द्रे अग्ने-
(सा० ७९०-८०२)त्याज्यानि । चतुर्ऋचेऽन्त्यामुद्धरेत् । वृषा पवस्व
23 धारये-(सा० ८०३-५)ति गायत्रं यौक्ताश्वं (ऊ० ७. १. २) च

1: MyBKACV²B² Om. क्रियेरन्नित्येके
2. CLV²B². °यामेत्य° for °यामेत्य°
3. BCLB². एवैतरैः पृष्ठैः, V². एवतरैः पृष्ठैः, MyK. एचैतरै । पृष्ठैः for एव तत्पृष्ठे
4. V²C. °रथन्तरः for °रथन्तरपृष्ठः

यत् पूर्वम् । पुनानः सोम धारये-(सा०६७५-६)ति ऐडं त्रिणिधनमायास्ये (ऊ० १. २. २०; २. १. १) । वृषा शोण (सा० ८०६-८) इति वासिष्ठ-(ऊ० २. १. २)मन्त्यम् । पार्थ-(ऊ० ७. १. ६)मन्त्यं केचिदिच्छन्ति । तदार्षेयकल्पस्य नेष्टम् । द्वितीयस्याह्नो वासिष्ठमन्त्य-( आ० क० ७. १२. ४ )मिति पृष्ठ्यावलम्बे वचनात् 5 अस्य च तत्प्रकृतिकल्पत्वात् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं ( ऊ० २. १. ३ ) च माधुच्छन्दसं ( ऊ० २. १. ४ ) चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च हाविष्मतं ( ऊ० २. १. ५ ) च । पवस्वेन्द्रमच्छे-( सा० ६६२-६ )त्येकर्चयोः शङ्कुसुज्ञाने (ऊ० २. १. 10 ६-७) । अयं पूषा रयिर्भग ( सा० ८१८-२० ) इति आसितं (ऊ० ११. २. २०) च क्रौञ्चं (ऊ० १५. १. १७) च यदुत्तरम् । वृषा मतीना-(सा० ८२१-३)मिति याम-(ऊ० २. १. १०)मन्त्यम् । यज्ञायज्ञीय-( सा० १. १. १४ )मग्निष्टोमसाम । एह्यू षु ब्रवाणि-(सा० ७०५-७)ति साकमश्वम् ( ऊ० १. १. १५ ) । एवाह्यसि-( सा० 15 ८२४-६)त्यामहीयवम् (ऊ० २.१.११)। इन्द्रं विश्वा (सा० ८२७-९) इत्याष्टादंष्ट्रम् ( ऊ० २. १. १२ ) इत्युक्थानि । द्वे पञ्चदशे सवने । सप्तदशमेकम् । स्तोमविमोचनादिदधिभक्षान्तं सुब्रह्मण्या च पूर्ववत् ॥

तृतीयस्याह्नः—दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवो-राजा मेधाभिरीयते-तं त्वा नृम्णानि बिभ्रतम्-इषे पवस्व धारये- 20 ( सा० ८३०-४३ )ति बहिष्पवमानम् । अग्निना-मित्रं हुवे-इन्द्रेणता हुवे (सा० ८४४-५५) इत्याज्यानि । उच्चा ते जातमन्धस (सा० ६७२-५) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) 24

---

4. B². तृतीयस्य for द्वितीयस्य

12. CV²B². उक्तम् for उत्तरम्; L. Om. यदुत्तरम्

18. B². भक्षणान्तं for भक्षान्तं

च। अभि सोमास आयवः (सा० ८५६-८) इति पौरुमद्गं (ऊ० २. १. १४) प्रथमायाम्। गौतमं (ऊ० २. १. १५) तिसृषु। अन्तरिक्षं (र० १. १. ६) तिसृषु। प्र हिन्वान (सा० ५३६) इत्यध्यास्यायाम् आष्कारणिधनं (ऊ० २. १. १६)। तिस्रो वाच (सा० ८५६-६१) इति अङ्गिरसां संक्रोशोऽन्त्यः (ऊ० २.१.१७)। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च। वयं घत्वे-(सा० ८६४-६)ति महावैष्टम्भं (ऊ० २. १. १८) च। तरणिरित् सिषासतां-(सा० ८६७-८)ति रौरवं (ऊ० २. १. १६) चेति पृष्ठानि। तिस्रो वाच उदीरते-(सा० ८६६-७१)ति गायत्रं च पाष्ठौहं (ऊ० २. १. २०) च। आ सोता परि षिञ्चत (सा० (सा० १३६४-५) सखाय आ निषीदते-(सा० ११५७-६)ति वाचश्च साम शौक्तं (ऊ० २. २. १-२) च। सुतासो मधुमत्तमा (सा० ८७२-४) इति त्वाष्ट्रीसामनी स्वाराद्यत्रिणिधने (ऊ० १५. २. १; २. १. ४)। पवित्रं त (सा० ८७५-७) इत्यरिष्ट-(र० १. १. ८)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-(ऊ० २. २. ७)मित्युक्थानि। द्वे सप्तदशे सवने। एकविंशमेकम्। स्तोमविमोचनादि पूर्ववत् ॥

**चतुर्थस्याह्नः**—पवमानो अजीजनत् (सा० ८८६-६१) पुनानो अक्रमीदभि (सा० ६२४-६) प्रयद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८६८-६०३) हिन्वन्ति सूरमुस्रयः (सा० ६०४-६) इति बहिष्पवमानम्। अग्निर्वृत्राणि जङ्घनत् (सा० १३६६-६) अयं वां मित्रावरुण-इन्द्रो दधीच अस्थभिर्-इयं वामस्य मन्मनः (सा० ६१०-१८) इत्याज्यानि। पवस्व दक्षसाधन (सा० ६१६-२१) इति गायत्रं चाथर्वणं (र० १. १. ९) च निधनकामं (ऊ० २. २. ८) च। तवाहं सोम रारणे-(सा० ६२२-३)त्याष्टादंष्ट्र-(ऊ०२.२.९)माभीशवम् (ऊ०२.२.१०) स्वःपृष्ठमाङ्गिरसम् (ऊ० २.२.६)। सोमः पवते जनिता मतीना-(सा० ६४३-५)मिति

जनित्र-(ऊ० ८. २. १)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च पृश्नि (ऊ० (ऊ० २. २. १४) चेति पृष्ठानि। परि प्रिया दिवः कवि-(सा० ६३५-७)रिति गायत्रं चौर्णायवं (ऊ० २. २. १५) च बृहद्भारद्वाजं (ऊ० १५. २. १०) च। त्वं ह्यङ्ग दैव्य (सा० 5
६३८-६) सोमः पुनानः ऊर्मिणे-(सा० ६४०-२)ति बृहत्कातीषादीये (ऊ० २. २. १६-७)। पुरोजिती वो अन्धस (सा० ६६७-६) इति नानदं (ऊ० २. २. १८) चान्धीगवं (ऊ० १. १. १२) च शुद्धाशुद्धीयं च यत्पदनिधनम् (ऊ० १६. १. ३)। प्र त आश्विनी-(सा० ८८६-८)रिति लौश-(ऊ० ८. २. २)मन्त्यम्। यज्ञायज्ञीय- 10
(ऊ० १. १. १४)मग्निष्टोमसाम। अग्नि व (सा० ६४६-८) इति सैन्धुक्षितम् (ऊ० २. २. २०)। वयमु त्वे-(सा० ७०८-६)ति सौभरम् (ऊ० १. १. १६)। इममिन्द्रे-(सा० ६४६-५१)ति वसिष्ठस्य प्रियम् (ऊ० ३. १. १)। इत्युक्थानि। उद्धरति षोडशिनम्। सूत्रेऽपि तथैव सिद्धान्तितम्—पौण्डरीकचतुर्थे षोडशी 15
षष्ठाभावा-(ला० श्रौ० )दित्यादिना। द्वे एकविंशे सवने। त्रिणवमेकम् ॥

पञ्चमस्याह्नः—पवमानस्य विश्वविद् (सा० ६५८-६०) यत्सोम चित्रमुक्थ्यम् (सा० ६६६-१००१) प्र सोमासो अधन्विषुः (सा० ६६१-७) प्र कविर्देववीतये (सा० ६६८-८४) यवं यवं नो अन्धसा 20
(सा० ६७५-८) यास्ते धारा मधुश्चुतः (सा० ६७६-८१) इति बहिष्पवमानम्। अग्ने स्तोमं मनामहे (सा० १४०५-७) पुरूरुणा चिद्धयस्ति (सा० ९८५-७) उत्तिष्ठन्नोजसा सह (सा० ६८८-६०) इन्द्राग्नी युवाम् (सा० ६६१-३) इत्याज्यानि। अर्षा सोम द्युमत्तम 24

---

15. L. षोडशिस्तोमेनेति, V²C. षोडशिस्तोत्रेऽपि, B². षोडशिस्तोमेऽपि for षोडशिनम्। सूत्रेऽपि ; LCMyV²T. षोडशि for षोडशी

16. V²L. पृष्ठाभावात्, T. षष्ठभावात्, MyKAB. षष्टिभवात् for षष्ठाभावात्

( सा० ६६४-६ ) इति गायत्रं च यण्वं ( र० १. २. १ ) च शाकलं (ऊ० ३. १. ३) च वार्शं (ऊ० ३. १. ४) च। साम उष्वाणे-(सा० ६६७-८)ति मानवं (ऊ० ३.१.५) चानूपं (ऊ० ३.१.६) वाम्र-(ऊ० ३. १. ६-७)मग्नेस्त्रिणिधनं (ऊ० ३.१.८) च। इन्दुर्वाजी-(सा० २०१९-२१)ति संपान्त्य-(ऊ० ८. २. ५)मिति माध्यंदिनः। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च। इन्द्रो मदाये-(सा० १००२-४)ति बार्हद्गिरम् (र० १. २. २)। स्वादोरित्ये-( सा० १००५-७ )ति रायोवाजीय-( र० १. २. ४ )मिति पृष्ठानि। असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च सन्तनि ( ऊ० ३. १. १० ) चैडं च सैन्धुक्षितं ( ऊ० १६. १. ४ ) गौषूक्तं (ऊ० ७. २. १६) चाभिद्युम्नं बृहद्यशः (सा० १०११-२) प्राणा शिशुर्महीना-( सा० १०१३-५ )मिति च्यावनक्रोशे (ऊ० ३. १. ११-२)। पवस्व वाजसातये (सा० १०१६-८) इति त्वाष्ट्रीसाम च ( ऊ० ८. २. ६ ) यत्स्वारयोरुत्तरमृषभश्च शाक्वरः (र० १. २. ५) पार्थं ( ऊ० ३. १. १४ ) चाष्टेडश्च पदस्तोभः (र० १. २. ६)। गोवित्पवस्वे-( सा० ६५५-७ )ति द्व्यभ्याघातं लौश-( ऊ० ८. २. ७ )मन्त्यम्। यज्ञायज्ञीय-( ऊ० १. १. १४ )मग्निष्टोमसाम। आ ते अग्न इधीमही-( सा० १०२२-४ )ति संजयम् (ऊ० ३.१.१६)। इन्द्राय साम गायते-(सा० १०२५-७)ति सौमित्रम् ( ऊ० ३. १. १७ )। असावि सोम इन्द्र त (सा० १०२८-३०) इति महावैश्वामित्र-(ऊ० ३. १. १८)मित्युक्थानि। द्वे त्रिणवे सवने। त्रयस्त्रिंशमेकम् ॥ १ ॥

इति प्रथमादिपञ्चमान्तान्यहानि ॥

---

## षष्ठमहः

पृष्ठ्यस्तोमस्य षष्ठमहः। वैदन्वतेभ्य उत्तरं पयः। षट्त्रिंशं तृतीय-सवनं सोक्थम् ॥ २ ॥

इति षष्ठमहरुक्तम्। तस्य द्वे त्रयस्त्रिंशे सवने। षट्त्रिंशमेकमिति

**स्तोमक्लृप्तिः** । अभ्यासङ्ग्यः षडह (तां०ब्रा० २२.१८.१) इत्यभ्यासङ्ग-विधानात् षट्त्रिंशं तृतीयसवनं सोक्थमिति कल्पवचनाच्च ।

**षष्ठस्याह्नः**—असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं दश क्षिपः-पवस्व देववीरति (सा० १०३७-४६) सना च सोम जेषि च (सा० १०४७-५६) तरत्समन्दी धावति (सा० १०५७-६०) एते सोमा असृक्षते-(सा० १०६१-३)ति बहिष्पवमानम् । यमग्ने पृत्सु मर्त्यम् (सा० १४१५-७) प्रति वां सूर उदिते (सा० १०६७-९)भिन्धि विश्वा अप द्विषः (सा० १०७०-२) यज्ञस्य हि स्थ ऋत्विजः (सा० १०७३-५) इत्याज्यानि । इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रं चेषोवृधीयं (ऊ० ३. १. १९) च क्रौञ्चं (ऊ० ३. १. २०) च वाजदावर्यश्च (ऊ० ३. २. १) दार्ढ्यच्युतं (ऊ० १६. १. १३) । मृज्यमानः सुहस्त्ये-(सा० १०७९-८०) त्यैडंस्वारे औक्ष्णोरन्ध्रे (ऊ० ३. २. २-३) । वाजजि-(ऊ० ३. २. ४)द्वरुणसाम (ऊ० ३. २. ५) । गोष्ठं (ऊ० ३. २. ६) च । अया पवा पवस्वे-(सा० १२१६-८)ति इहवद्वासिष्ठ-(ऊ० ८. २. १०) मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च । सुरूपकृत्नुमूतये (सा० १०८७-९) इत्यृषभं च रैवतम् (र० १. २. ८) । उभे यदिन्द्र रोदसी-(सा० १०९०-२)ति अरण्येगेयं च श्येन-(अ०गे० ३.४.१३०)मिति पृष्ठानि । परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रं च वैदन्वतानि त्रीणि तृतीयाद्य-चतुर्थान्तानि (ऊ० ३. २. ९-११) । पयश्च (र० ४.३.११) । स सुन्वे यो वसूनाम् (सा० १०९६-७) तं वै सखायो मदाये-(सा० १०९८-१००१)ति दीर्घं (ऊ० ३. २. १२) च कार्णश्रवसं (ऊ० ३. २. १३) च । सोमाः पवन्त इन्दवः (सा० ११०१-३) इति क्रौञ्चं (सा० १६. १. १) च यत्त्रयाणामाद्यम् ।

14. MyBKAT. गोष्ठः for गोष्ठं

19. MyBKAT. श्येनः for श्येनमिति

मधुश्चुन्निधनं ( ऊ० ३. २. १५ ) च क्रौञ्चे वाङ्निधनैडे (ऊ० (ऊ० ३. २. १६-७) । ज्योतिर्यज्ञस्ये-( सा० १०३१-३ )ति मरुतां धेन्व-(ऊ० ८. २. ११)न्त्यम् । यज्ञायज्ञीय-( ऊ० १. १. १४ ) मग्निष्टोमसाम। द्वादशभ्यो हिंकरोति स तिसृभिः सोऽष्टाभिः स एकया । द्वादशभ्यो हिंकरोति स एकया स तिसृभिः सोऽष्टाभिः । द्वादशभ्यो हिंकरोति सोऽष्टाभिः स एकया स तिसृभिरिति षट्त्रिंशस्य विष्टुतिः । त्रिणवाद्यावत्समा (ला०श्रौ० ) इति वचनात् । अग्ने त्वं न ( सा० ११०७-९ ) इति गूर्दम् (ऊ० ३.२.१९)। इमानुक-( सा० १११०-२ )मिति भद्रम् (र० १.२.१०)। प्र व इन्द्रे-(सा० १११३-५)त्युद्वंशपुत्र (ऊ० ३.२.२०) इत्युक्थानि। स्तोमविमोचनादि पूर्ववत् । अस्मिन्नहनि संस्थिते प्रागुत्तरस्याह्नः उपकरणात् बहुभाषणं स्वाध्यायाध्ययनं च वर्जयेयुः। सर्पिर्मधुभ्यामृत्विजो भोजयेदिति षडहः संपूर्णः॥ २ ॥

इति षष्ठमहः ॥

---

## सप्तमाष्टमनवमान्यहानि

त्रयश्छन्दोमा एवमेत्र समूढाः । पुनः कण्वरथन्तरं स्वं लोकमेति ॥ ३ ॥

अथ छन्दोमास्त्रय एवमेव समूढा इति । यथा छन्दोमवति दशरात्रे तथेत्यर्थः। पुनः कण्वरथन्तरं स्वलोकमेतीति द्वादशाहे षष्ठसप्तमयोरह्नोर्बार्हतयोर्जामिप्रसङ्गात् सप्तमस्य माध्यंदिने कण्व-रथन्तरं कल्पितम्। यथा च श्रुतिः । जामि द्वादशाहस्यास्तीति स्माहोग्रदेवो राजनि बार्हतं सप्तम-( तां० ब्रा० १४. ३. १७ ) मित्यादि। छन्दोमवद्दशरात्रे षष्ठस्य लोपाज्जाम्यभावादित्यारम्भणाद् बृहती यथा स्यादिति कण्वरथन्तरस्य लोके सोमसामे-(आ० क० ८. १०. २)त्युक्तम्। इह तु षष्ठस्य सद्भावाज्जामिता स्यादिति तन्निवृत्त्यर्थं स्वस्थाने कण्वरथन्तरं कार्यमित्यर्थः। तत्र सप्तमस्याह्नो

बहिष्पवमानम्— ये सोमासः परावति (सा० ११६३-५) हिन्वानासो रथा इव (सा० ११२०-७) असृग्र मिन्दवः पथा (सा० ११२८-३९) आ ते दक्षं मयोभुवम् (सा० ११३७-९) इति ऋतावनं वैश्वानरम् (सा० १७०८-१०)। प्र वो मित्राय गायत (सा० ११४३-५) इन्द्रा-याहि चित्रभानो (सा० ११४६-८) तमीडिष्व यो अर्चिषे-(सा० ११४९-५१)त्याज्यानि। अष्टाभ्यो हिंकरोतीति विष्टुतिः। वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च संतनि (ऊ० ४. १. १) चैडं च सौपर्णं (ऊ० ४. १, २) रोहित-कूलीयम् (ऊ० ४. १. ३)। पुनानः सोम धारये-(सा० ६७५-७)ति कण्वरथन्तरं (ऊ० ४. १, ४) च गौङ्गवं (ऊ० ४. १, ५) च द्विनिधनं चायास्यम् (ऊ० ४. १, ६)। प्र काव्यमुशनेव ब्रुवाण (सा० १११६-२७) इति वाराह-(ऊ० १६, २. १९)मन्त्यम्। बृहच्च (र० १, १. १) वामदेव्यं (ऊ० १. १. ५) च। वयं घ त्वे-(सा० ८६४- )ति अभिनिधनं काण्वम् (ऊ० ४, १. ८)। न किष्ट-(सा० ११५५-६)मिति वैखानसं (ऊ० ४. १. ९) चेति पृष्ठानि। यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं तिसृषु। अग्नेरर्कौ-(र० १, ३. १)ऽध्यर्धेडं सोमसाम (ऊ० १४. १, १३) मौक्ष-(ऊ० ४. १. १०)मिति सामतृचः। अपि वा गायत्रं मौक्षं सोमसामेति सामतृचः। अग्नेरर्कस्तिसृषु। एष स्य धारया सुतः (सा० ५८४) सखाय आ निषीदते-(सा० ११५७-९)ति शार्करप्लवौ (ऊ० ४. १. ११-२)। पुरोजिती वो अन्धस (सा० ६९७-८) इति आत्रेयं (ऊ० १६. २. १७) च कार्तयशं (ऊ० ४. १. १४) च। प्र वाज्यक्षा (सा० ११६०-२) इति सौहविषम् (ऊ० ४. १. १५)। प्रो अयासी-(सा० ११५२-४)दित्यैडं यज्ञ-सारथ्यन्तम् (ऊ० १६. २, ५)। यज्ञायज्ञीय-(ऊ० १. १. १४) मग्निष्टोमसाम। आ ते वत्स (सा० ११६६-८) इति वात्सम् (ऊ० ४. १. १७)। त्वं न इन्द्रे-(सा० ११६९-७१)त्यौपगवम्

(ऊ० ४. १. १८) । यदिन्द्र-चित्र म इह ने-(सा० ११७२-४)ति वीङ्क-(ऊ० ४. १. १९)मित्युकृथानि । सर्वं चतुर्विंशम् ॥

**अष्टमस्याह्नः**—हिन्वन्ति सूरमुस्रयः (सा० ६०४-६) एते सोमा अभि प्रियम् (सा० ११७८-८६) सोमः पुनानो अर्षति (सा० ११८७-९५) सोमा असृग्रमिन्दवः (सा० ११९६-१२०४) उत्ते शुष्मास ईरते (सा० १२०५-९) अयावीती परिस्रव (सा० १२१०-१२) ऊपघ्नन् पवते मधः (सा० १२१३-५) अया पवस्व धारये-(सा० १२१६-८)ति **बहिष्पवमानम्** । विश्वेभिरग्ने अग्निभिः (सा० १६१७-९) मित्रं वयं हवामहे (सा० ७६३-५) तमिन्द्रं वाजयामसि (सा० १२२२-४) इन्द्रे अग्ना नमो बृहद् (सा० ६००-२) इत्याज्यानि । अध्वर्यो अद्रिभिः सुतम् (सा० १२२५-७) इति गायत्रं च वैरूपं (ऊ० ४. १. २०) चाशुर्भार्गवं (ऊ० ४. २. १) च मार्गीयवं च (ऊ० ४. २. २) सौमित्रं (ऊ० ४. २. ३) चैटतं (ऊ० ४. २. ४) च साकमश्वं (ऊ० ४.२.५) च विलम्ब-सौपर्णं (ऊ० ४. २. ६) च । अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) च गायत्रपार्श्वं (ऊ० ४. २. ८) च पौरुहन्मनं (ऊ० ४. २. ९) च द्वैगतं (ऊ० ४. २. १०) च हारायणं (ऊ० ४.२.११) चाच्छिन्द्रं (ऊ० ४.२.१२) च बार्हदुकृथं (ऊ० ४.२.१३) च । उद्धु वाइ शिशु-(सा० ११७५-७)मिति वासिष्ठ-(ऊ० १६. २. ७)मन्त्यम् । द्विहिंकारं प्रथमायाम् । बार्हदुकृथमध्यास्यायाम् । रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च । यदिन्द्र प्रागुदगि-(सा० १२३१-२)ति नैपातिथं (ऊ० ४. १. १५) च । उभयं शृणवच्चने-(सा० १२३३-४)ति वैयश्वं (ऊ० ४. १. १६) चेति पृष्ठानि । पवस्व देव आयुष-(सा० १२३५-७)गिति गायत्रं च स्वाशिरामर्कः (र० १. ३. २) सुरूपं (ऊ० ४. २. १७) च भासं (र० २. ३. ९) च काक्षीवतं (ऊ० ४. २. १९) च गायत्रीसामासितं (ऊ० ४. २. २०) च । अभि द्युम्नं बृहद्यशः (सा० १०११-२) प्राणा

शिशुर्महीनाम् (सा० १०१३-५) इत्यैषिरत्रैते ( ऊ० ५. १. १-२ ) एकर्चे। अभी नो वाजसातम-(सा० १२३८-४०)मिति स्वारैड-(ऊ० १६. २. १६)कौत्से ( ऊ० ५. १. ४ ) शुद्धाशुद्धीयं (ऊ० ५. १. ५) च क्रौञ्चं ( ऊ० ५. १. ६ ) च रयिष्ठौदले (ऊ० ५. १. ७-८) च। पवस्व सोम महान्त्समुद्र ( सा० १२४१-३ ) इति धर्म (ऊ० ५. १. ६)। हाउ धर्ते-(सा० १२२८-३०)ति ऐडं शार्ङ्ग- ( ऊ० १३. १. २० )मन्त्यम्। यज्ञायज्ञीय-( ऊ० १. १. १४ ) मग्निष्टोमसाम। प्रेष्ठं व (सा० १२४४-६) इत्यौशनम् (ऊ० ५. १. ११)। एन्द्र नो गधि प्रिये-(सा० १२४७-६)ति सांवर्तम् (ऊ० ५. १. १२)। पुरां भिन्दुर्युवा कवि-( सा० १२५०-२ )रिति मारुत- ( ऊ० ५. १. १३ )मित्युक्थानि। सर्वं चतुश्चत्वारिंशस्तोमम्। तस्य चतुश्चत्वारिंशस्तोमस्य तिस्रो विष्टुतयः आम्नाताः। तासु आज्यानां प्रथमा। पृष्ठानां द्वितीया। अग्निष्टोमसाम्नां च तृतीयेत्येकः पक्षः। पक्षान्तरमपि द्वादशाहे दर्शितम्॥

**नवमस्याह्नः**—उपोषु जातमप्तुरम् ( सा० १३३५-७ ) एष देवो अमर्त्यः (सा० १२५६-६५) एष धिया यात्यण्व्या ( सा० १२६६-७३ ) एष उ स्य वृषा रथः (सा० १२७४-६) एष वाजी हितो नृभिः (सा० १२८०-५) एष कविरभिष्टुतः (सा० १२८६-६१) स सुतः पीतये ( सा० १२६२ ७ ) पवमानस्य ते कवे ( सा० ६५७-६ ) इति वहिष्पवमानम्। उप त्वा रण्व संदृशं ( सा० १७०५-७ ) मित्रं हुवे पूतदक्षं ( सा० ८४७-६ ) महाँ इन्द्रो य ओजसा (सा० १३०७-९) ता हुवे ययोरिदम् ( सा० ८५३-५ ) इत्याज्यानि। पवमानस्य जिघ्नत. ( सा० १३१०-२ ) इति गायत्रं चादारसृच्च (ऊ० ५. १. १४) सुरूपं ( ऊ० ५. १. १५ ) च हरिश्रीनिधनं (ऊ० ५. १. १६) च सैन्धुक्षितं (ऊ० ५. १. १७) च। गत- निधनं बाभ्रवं ( ऊ० ५. १. १८ ) चैडानां संक्षार (ऊ० ५. १. १६) ऋषभश्च पवमानः (ऊ० ५. १. २०)। परीतो षिञ्चता सुत-( सा० १३१३-५ )मिति पृष्ठं ( ऊ० ५. २. १ ) तिसृषु।

कौल्मलबर्हिषं (ऊ० ५. २. २) प्रथमायाम्। अर्कपुष्पं (ऊ० ५. २. ३) द्वितीयायाम्। दैर्घश्रवसं (ऊ० ५. २. ४) तृतीयायाम्। देवस्थानं ( र० १. ३. ३ ) तिसृषु। संकृति ( र० १. ३. ४ ) तिसृषु। वैयश्वं ( ऊ० ५. २. ५ ) प्रथमायाम्। भर्गास्तिसृषु
5 (र० १. ३. ५)। आभीशवं (ऊ० ५. २. ६) प्रथमायाम्। यशः ( र० १. ३. ६ )स्तिसृषु। वासिष्ठमध्यास्यायाम्। हाइ उहु वाइ अक्रानि-( सा० १२५३-५ )ति वासिष्ठ-(ऊ० १७. १. १) मन्त्यम्। तस्य बृहत्यामरण्येगेयानि तृचांश्च-(ला० श्रौ० ३. ६. २८) त्यादिवचनादेवं क्लृप्तिः। बृहच्च ( र० १. १. ५ ) वामदेव्यं
10 (ऊ० १. १. ५) च श्रायन्तीयं (ऊ० ५. २. ८) च। यत इन्द्र भयामहे (सा० १३२१-२) इति समन्तं (ऊ० ५. २. १०) चेति पृष्ठानि। त्वं सोमासि धारयु-( सा० १३२३-५ )रिति गायत्रं चाश्वसूक्तं (ऊ० ५. २. ११) च शाम्मदं ( ऊ० ५. २. १२ ) च यद्वावसुनिधनं ( ऊ० ५. २. १३ ) च प्रतीचीनेडं च काशीतं
15 (ऊ० ५. २. १४) हाविष्कृतं (ऊ० ५. २. १५) च। त्वं ह्यङ्ग दैव्य ( सा० ६३८-९ ) पवस्व देववीतये ( सा० १३२६-८ ) इति सौपर्णं (ऊ० ५. २. १६) च वैश्वमनसं (ऊ० ५. २. १७) च। परि त्यं हर्यतं हरि-( सा० १३२९-३१ )मित्यासितोत्तरं (ऊ० १७. १.२) प्रथमायाम्। दीर्घतमसोर्कौ (ऊ० ४. ३. १०) द्वितीयायाम्।
20 आकूपारं (ऊ० १७. १. ३) तृतीयायाम् यत्स्वयोनि। निहव-( ऊ० ५. २. १९ ) यद्वाहिष्ठीया-( ऊ० ५. २. २० )सिताद्यसाश्चा-कूपाराणि ( ऊ० ६. १. १-३ ) तृचेषु। पवस्व सोममहे दक्षाये-(सा० १३३२-४)ति विधर्म ( ऊ० ६. १. ४ )। असावि सोमो अरुषो वृषा हरि-( सा० १३१६-८ )रिति ऐडं याम-( ऊ० १७.
25 १. ४ )मन्त्यम्। यज्ञायज्ञीय-( ऊ० १. १. १४ )मग्निष्टोमसाम।
26 आ घा य (सा० १३३८-४०) इत्यैध्मवाहम् (ऊ० ६. १. ६)।

17. B². Om. वैश्वमनसं च

य एक इ-( सा० १३४१-३ )दिति त्रैककुभम् ( ऊ० ६. १. ७ ) । गायन्ति त्वे-(सा० १३४४-६)ति उद्वंशीय-(ऊ० ६. १. ८)मित्युक्थानि । सर्वमष्टाचत्वारिंशम् । अष्टाचत्वारिंशस्योत्तरया मैत्रावरुणस्यैवाज्यं विदध्यात् । प्रथमयैवान्त्यानि स्तोत्राणि । ३ ॥

इति सप्तमाष्टमनवमान्यहानि ॥ ३६ ॥

## दशममहः

चतुष्टोमयोः पूर्वः ॥ १ ॥ 5

चतुष्टोमयोः पूर्वं दशममहः । तस्य क्लृप्तिः—अयं पूषा रयिर्भगः (सा० ८१८-२०) इति तिस्रोऽनुष्टुभः । चतस्रो गायत्रीः करोति । अयं पूषा रयिर्भगोम् इति त्रिषु पादेषु रेतस्या । व्याख्यद्रोदसी उभोमिति द्वितीया स्तोत्रीया । सोमासः कण्व ते पयोमिति तृतीया । पवमान श्रवा धियोमिति रथन्तरवर्णा इति चतसृभिः 10 बहिष्पवमानम् । अग्न-आ नो मित्रायाहीन्द्राग्नी-( सा० ६६०-७१ ) त्याज्यानि । तेषामष्टिस्तोमश्चतुःपर्यायः कर्तव्यः । द्वाभ्यां हिंकरोति स प्रथमया । द्वाभ्यां हिंकरोति स प्रथमया । द्वाभ्यां हिंकरोति स मध्यमया । द्वाभ्यां हिंकरोति स उत्तमयेति विष्टुतिः । चतुष्टोमयोः चतुष्पर्यायाः । तत्र चतुष्के द्वौ प्रथमायां पर्यायौ 15 स्याताम् इत्यारभ्य तथाष्टिनि द्विकास्तुतस्य पर्याया (ला० श्रौ० ६.८.२-४) इति वचनात् । तत्र प्रथमद्वितीयौ तृचभागस्थानयोर्विधाय द्वितीयस्य तृचभागस्थानस्योत्तरतः प्रत्यगग्रेण कुशाद्वयेन तृतीयं पर्यायं विदध्यात् । तस्योत्तरतस्तृचभागस्थाने चतुर्थम् । अथ माध्यंदिनः—उच्चा ते जातमन्धसः (सा० ६७२-४) इति गायत्रं 20 चामहीयवं ( ऊ० १. १. १ ) च । पुनानः सोम धारये-(सा० ६७५-७)ति रौरवं (ऊ० १. १. २) मैधातिथं (ऊ० १३. १. ७) यौधाजय-( ऊ० १. १. ३ )मिति सामतृचः । प्र तु द्रवे-(सा० ६७७-९)त्यौशन-( ऊ० १. १. ४ )मन्त्यमिति द्वादशः । रथन्तरं 24

6 V²CKAMyBL. पूर्वो for पूर्वं
12. MyBKAT. अष्ट for अष्टि
16. BMyKAT. Om. स्याताम् ··· प्रथमद्वितीयौ (L. 17)

(र० १.१.१) च वामदेव्यं (ऊ० १.१.५) च श्रायन्तीयं (ऊ० ५.२.६) च कालेयं (ऊ० १.१.७) चेति पृष्ठानि षोडशानि। षोडशस्तोमस्य विष्टुतिः। चतसृभ्यो हिंकरोति स द्वाभ्यां स एकया स एकया। चतसृभ्यो हिंकरोति स एकया
5 स द्वाभ्यां स एकया। चतसृभ्यो हिंकरोति स एकया स एकया स एकया स द्वाभ्यामिति। षोडशे चत्वारो द्वादशपर्याया-स्तेषां मध्यमौ सदृशा-(ला० श्रौ० ६. ८. ८)विति वचनात्। उत्तरोत्तराः पर्यायाः। स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्रमच्छे-(सा० ६६२; ६६४)ति
10 सफ-(ऊ० १.१.६)पौष्कले (ऊ० १.१.१०) एकर्चयोः। पुरोजिती वो अन्धसः (सा० ६६७-६) इति श्यावाश्वान्धीगवे (ऊ० १.१.११-२)। यज्ञायज्ञीयं (ऊ० १.१.१४) च काव-(ऊ० १.१.१३)मन्त्यमिति विंशत्यार्भवः। यज्ञा (सा० ७०३-४) एष (सा० ७०५-७) तं ते (सा० ८८०-२) श्रुधी ह[illegible]-(सा० ८८३-५)
15 मिति वारवन्तीयं (ऊ० १३.१.११-४) चतुर्षु तृचेषु षड्भिः षड्भिः स्तोत्रीयाभिः। चतुर्विंशमग्निष्टोमसाम। चतुर्विंशस्य विष्टुतिः षड्भ्यो हिंकरोति स द्वाभ्यां स द्व्याभ्यां स द्व्याभ्यामिति प्रथमः पर्यायः। एवमुत्तरे त्रयः पर्यायाः। चतुर्विंशे चत्वारः षट्काः पर्यायाः (ला० श्रौ० ६.८.६) इत्यादिवचनात्।
20 अस्मिन्नहनि दशमधर्मा मानससंयुक्तेभ्योऽन्ये कर्तव्या इति निदाने प्रतिपादितम्। के पुनर्दशमधर्माः। ऋचं साम दधिक्राव्ण इत्यनयोरुत्तमपादाभ्यासः। आयुर्मे प्राणा इति
23 मन्त्रे पुनरस्मासु दधमसीत्यभ्यासः। अन्येऽपि धर्मा अप्रतिग्रहामे-

---

18. B[2]V[2]CKTBMy उत्तराः for उत्तरे; LV[2]. चतुर्विधैः for चतुर्विंशे
19. KMyTB. Om. आदि
20; 21. MyBKAT. दश° for दशम°; निदाने see नि० सू० ९.७
23. V[2]. अप्रतिभामेत्यस्मिन्, B. अप्रतिह[illegible]मे तस्मिन्, MyK. अप्रतिह्वातेम तस्मिन्, T. अप्रतिभा तस्मिन्, अप्रतिग्रहामेत्यस्मिन्

त्यस्मिन्नहनि अनुष्टुभं मात्रां कृत्वापक्षीरग्नित्यादिनोक्ताः मानस-संयुक्तेभ्योऽन्ये द्रष्टव्याः ॥ १ ॥

इति दशममहः ॥ ३७ ॥

---

## एकादशमहः

विश्वजिदतिरात्रो विश्वजिदतिरात्रः ॥ १ ॥

एकादशमहर्विश्वजिदतिरात्रः। तस्य त्रिवृद् बहिष्पवमानम्। उप त्वा जामयो गिरो (सा० १५७०-२) जनीयन्तो न्वग्रवः (सा० १४६०) उत नः प्रियाः प्रियासु (सा० १४६१) 5
तत्सवितुर्वरेण्यम् (सा० १४६२) सोमानां स्वरणं (सा० १४६३) अग्न आयूंषि पवसे (सा० १४६४) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। उत्तम एव तृचे। इतरे एकर्चाः। यथालिङ्गं देवताभेदः। सुषमिद्धो न आवह (सा० १३४७-५०) ता नः शवतं पार्थिवस्य (सा० १४६५-७) युञ्जन्ति ब्रध्नमरुषं चरन्तम् (सा० १४६८) तमीडिष्व 10
यो अर्चिषे-(सा० ११४९-५१)त्याज्यानि। सुषमिच्चतुर्ऋचे। यथा-गोत्रमुद्धारः। पञ्चदशं होतुराज्यम्। सप्तदशं मैत्रावरुणस्य। एकविंशं ब्राह्मणाच्छंसिनः। पञ्चदशमच्छावाकस्य। अस्य प्रत्ने-(सा० ७५५-७)ति गायत्रं चामहीयवं (ऊ० ९. २. ३) च।
परीतो षिञ्चता सुत-(सा० १३१३-५)मिति कालेयं (ऊ० ९. २. ४) 15
प्रथमायाम्। रथन्तरं (र० १. १. १) तिसृषु। यौधाजय(ऊ०-१.१.३)मध्यास्यायाम्। अयं सोम (सा० १४७१-३) इति पार्थ-(ऊ० ९.२.५)मन्त्यमिति सप्तदशो माध्यंदिनः। रथन्तरस्तुतिकाले पृष्ठ्ये रथमतिवहेयुर् (ला०श्रौ० ३.५.१-२)इत्यादिनोक्तो रथघोषः कर्तव्यः। षट्-पृष्ठ प्रयोगसद्भावात्। विश्वजिति वैराजधर्मान् कुर्यादितरेष्वपि पृष्ठेष्विति 20

---

8. TV²MyBC. Om. बहिष्पवमानम्
12. CV². सप्तविंशं for सप्तदशम्
16. MyB. रथन्तररौरवं for रथन्तरं; V²MyKTA. before यौधाजयं add : दैर्घश्रावसं तिसृषु
19. T. (उ)क्ताः रथघोषाः कर्तव्याः for (उ)क्तः रथघोषः कर्तव्यः
20. LC. प्रयोग° for संप्रयोग°

आचार्यमति-(ला० श्रौ० ३. ६. २०-१)रिति वचनाच्च। वैराजं (र० १. १. १०) च महानाम्न्यश्च वैरूपं (ऊ० ४. १. २०) च रेवत्य-(र० १. २. ७)श्चेति पृष्ठानि। एकविंशं होतुः पृष्ठम्। त्रिणवं मैत्रावरुणस्य। सप्तदशं ब्राह्मणाच्छंसिनः। एकविंशमच्छा-
5 वाकस्य। वैराजस्य स्तोत्र उपाकृत (ला० श्रौ० ३. ५. ५) इत्यादिना वैराजस्य धर्मा उक्ताः। अपस्सावका उप निधाये-(ला० श्रौ० ३. ५. १३)त्यादिना महानाम्नीनाम्। उप वाजयमाना (ला० श्रौ० ३. ५. ३) इत्यादिना वैरूपस्य। वारवन्तीयस्य स्तोत्रे धेनुः (ला० श्रौ० ३. ६. १) इत्यादिना रेवतीनाम्। परिस्वानो गिरिष्ठा (सा० १०६३ ५) इति
10 गायत्र-संहिते (ऊ० ६. २. ६)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-(ऊ० १. १. ६)श्रुध्ये (ऊ० ६. १. २०)। पर्यूषु प्र-( सा० १३६४-६ )ति वामदेव्यम् (ऊ० ६. २. ६)। पुरोजिती वो अन्धस (सा० ६६७-६) इति आन्धीगवं (ऊ० १. १. १२) यज्ञायज्ञीये (ऊ० ८. २. १६)। परि प्र धन्वासु (सा० १३६७-६) द्विपदासु
15 वारवन्तीयम् (ऊ० ६. २. १०)। सूर्यवतीषु (सा० १३७०-२) काव-(ऊ० ६. २. ११)मन्त्यमिति त्रिणव आर्भवः। त्वमग्ने यज्ञानां होते-( सा० १४७४-६ )ति बृहदग्निष्टोमसाम ( र० २. ४. ५ ) त्रयस्त्रिंशम्। बृहतः स्तोत्रे दुन्दुभिमाहन्युः। साकमश्वं (ऊ० १. १. १५) सौभरं (ऊ० १. १. १६) नार्मेध-( ऊ० १. १. १७ )
20 मित्युक्थानि। त्रिणवं प्रथमम्। द्वे एकविंशे। इन्द्र जुषस्वे-(सा० ६५२-४)ति गौरीवितं ( ऊ० ३. १. २ ) षोडशिसामैकविंशम्। आहीनिकी रात्रिः पञ्चदशी। संधिस्त्रिवृत्। स्तोमविमोचनाद्युद-वसनीयान्तम्। आहरान्तिकी सुब्रह्मण्यात्र न कर्तव्या उत्तरार्थाऽऽहरन्तिकी-(ला० श्रौ० १. ४. ६)ति वचनात्॥

25 अथापस्तम्बेन पौण्डरीकस्य प्रकारान्तरेणाहःकॢप्तिरुक्ता—
26 अभ्यासङ्गयः पञ्चाहश्चत्वारश्छन्दोमा महाव्रतं विश्वजित् सर्वपृष्ठोऽतिरात्र

---

5. V²LCB². Om. वैराजस्य ··· धेनुः इत्यादिना (L. 9)
25. KATBMy. तथा for अथ

(आप०श्रौ० २२.२४.१२) इति । अत्र महाव्रतव्यतिरिक्तं यथा छन्दोमवद्दशरात्रे तथा कर्तव्यम् । महाव्रतं तु ऐकाहिकम् । अत्र स्युर्मानसा धर्माः । तथा दाशमिकाः इति केचिदाचक्षते । तत्र निर्णयं ब्रूमहे वयम्—

व्रतं यदूर्ध्वं दशमाद् व्रतान्ते मानसं सदा । 5
वदन्ति सांवर्गजिता गौतमा इति सूत्रतः ॥ १ ॥

सांवर्गजितपक्षेण व्रतान्ते मानसं भवेत् ।
येऽन्ये दाशमिका धर्माः कार्याः पूर्वत्र तेऽहनि ॥ २ ॥

पक्षान्तरेण पूर्वे हि धर्माः कार्याः समानसाः ।
तत्सर्पराज्ञादन्येषां धर्माणां करणं व्रते ॥ ३ ॥ 10

पक्षेऽपि न च कस्मिंश्चिद् दृष्टमित्यवधार्यताम् ।
परस्मिन् पौण्डरीके तु न धर्मा नापि मानसम् ॥ ४ ॥

इति । अथ व्यूढो नवरात्रो महाव्रतं वैश्वानरः (आ०श्रौ० १०.४.१) इत्याश्वलायनोक्तः पौण्डरीकः । तत्र व्यूढो नवरात्रो व्यूढद्वादशाहवत् कर्तव्यः । विशेषस्तूच्यते । औदलमासितं त्वाष्ट्रीसामाविकृतं 15 चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेते स्वराः पृष्ठ्यस्य गौरीवितलोके । आत्रेयं सप्तमस्याह्नः स्वारं कौत्समष्टमस्य । नवमस्याह्नः— परि त्यं हर्यतं हरि-( सा० १३२९-३१ )मिति गौरीवितलोके । 18

---

1. MyBKTA. °व्रतस्य for व्रत° ; MyKTBA. यः for यथा
2. T. before तथा adds :- यथा
6. $V^2CB^2$. संसर्ग for सांवर्ग
12. $CB^2$. °धर्माणामपि for धर्मा नापि मानसम् ; $V^2$. Om. नापि मानसम् and add :- णामपि पौण्डरीकमृद्धिकामः पृष्ठ्यस्तोमः छन्दोमगौतमस्तोमो विश्वजित्
13. $B^2C$. Om. इति । अथ ··· महाव्रतम् ; $V^2MyBKAT$. Om. इति । अथ
15. MyBKA. अविक्लृप्तम्, T. विक्लृप्तम् for अविकृतम्

आसित-(ऊ० ७. १. २)मेकस्याम् । दीर्घतमसोऽर्कः (र० ४. ३. १०) एकस्याम् । आकूपारमेकस्याम् ( ऊ० ६. १. ३ ) यत्स्वयोनि कर्तव्यम् । एवं माध्यंदिनान्त्यं सामराजमेव नियतम् । न तु दीर्घतमसोऽर्कः । बृहत्यां चासौ नानुकल्पनीयोऽसंचाराय । महा-
5 व्रतमैकाहिकं वैश्वानरशब्देन ज्योतिष्टोमोऽतिरात्र उच्यते । तस्याहीनिकी रात्रिः ॥ ४ ॥

इति एकादशमहः ॥ ३७ ॥

इति पौण्डरीक एकादशरात्रः ॥

इत्थं वरदराजेन वामनार्यस्य सूनुना ।
10 अहीनकल्पो व्याख्यातो गोविन्दः प्रीयतामिति ॥

इति श्रीवामनार्यसुतवरदराजविरचितायामार्षेय-
12 कल्पव्याख्यायामष्टमोऽध्यायः ॥ ८ ॥

---

1. LV²CB². आसीतम् for आसितम् throughout in these MSS
3 V²CB². (अ)न्तं for (अ)न्त्यं
4. L. after (अ)र्कः ins. दीर्घतमसोऽर्कपक्षे
5. LV²CB². एकाहिकं for ऐकाहिकं
9. CV²LB². उक्तं for इत्थं
12. B². after अध्याय ॥ it adds : शुभं भवतु । लिषितं दुबे जयदेवनंद ॥ पौण्डरीकवरदराजीपुस्तकमिदं रत्नाकरपौण्डरीकयाजिनां अहीनवरदराजी ॥ The MS. B² ends with this *adhyaya*

# नवमोऽध्यायः

# सत्राणि

## द्वादशरात्रं सत्रम्

अथ त्रयोविंशमुखैरध्यायैर्ब्राह्मणे त्रिभिः ।
सत्राण्युक्तानि तान्यत्र कल्पान्ते नवमादिभिः ॥ 5

सूत्रकारेण दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्षे उपपादयेयुर् (ला० श्रौ० १०.१.१) इत्यादिना तेषां दीक्षाकालादिकमुक्तम् । निदानं तु अथातः सत्राणि । तेषां द्वादशाहः प्रथमः (नि० सू० ६. १०) इत्यादि । तत्र द्वादशाहस्य ब्राह्मणोक्तां क्लृप्तिमुपजीव्य विशेषमाह—

द्वादशाहस्य षोडशिमन्तावतिरात्रौ ॥ १ ॥ 10

इति । स च व्यूढसमूढरूपत्वेन द्विविधः सन् सत्राहीनात्मकत्वेन पुनर्द्वैविध्याच्चतुर्विध इत्युक्तम् । तत्र व्यूढः सत्रात्मकः पुरस्तादुक्तः । अहीनात्मकस्तु गौरीवितस्वरो नानास्वरो वेति पक्षद्वयम् । संभवे गौरीवितस्वरस्य सामकल्पे विशेषो नास्तीति कर्मकल्पके विशेषः प्रागेवोक्तः । नानास्वरस्य तु पौण्डरीकव्यूढनवरात्रवत् स्वरक्लृप्तिः । अहीनन्यायादन्यत् सर्वं सत्रभूतव्यूढद्वादशाहवत् । समूढश्च द्वादशाहो न कल्पकारेणोक्त इति न्यायेन कल्पनीयः । तत्र पृष्ठ्यषडहस्य समूढक्लृप्तिः गवामयनोक्ता । छन्दोमानां छन्दोमवद्दशरात्रोक्ता । प्रथमस्याह्नोऽस्य प्रत्ना-(सा० १४६४-५०२) 19

---

6. L. before दीक्षा ins. सूत्रकारेण ; LCV[2]My. प्रसवोक्थानानि, K. प्रसवोक्तानानि for प्रसवोत्थानानि

14. KBA. after °कल्पे ins. विशेषकल्पे ; MyBKAT. Om. इति

16. TMyKBA. before व्यूढ ins. सत्रभूत

नवर्चमेव बहिष्पवमानम् । नवाहयोगस्य विद्यमानत्वात् । द्वितीयस्याह्नो वृषा शोण (सा० ८०६-८) इति पार्थं (ऊ० ७. १. ६) माध्यंदिनान्त्यम् । तृतीयेऽह्नि न विशेषः । चतुर्थस्याह्नः पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा०
5 ९२४-६) इति स्तोत्रीयानुरूपौ । अग्निर्वृत्राणि (सा० १३९६-८) इति होतुराज्यम् । सोमः पवत (सा० ९४३-५) इति जनित्रं (ऊ० ८. २. १) माध्यंदिनान्त्यम् । प्र त आश्विनी-(सा० ८८६-८)रिति लौश-(ऊ० ८. २. २)मार्भवान्त्यम् । पञ्चमस्याह्नः पवमानस्य विश्वजित् (सा० ६५८-६०) यत्सोम चित्रमुक्थ्यम् (सा० ६६६-१००१)
10 इति स्तोत्रीयानुरूपौ । अग्ने स्तोमं मनामहे (सा० १४०५-७) इति होतुराज्यम् । इन्दुर्वाजी-(सा० १०१९-२१)ति सम्पान्त्यान्त्यं (ऊ० ८. २. ५) माध्यंदिनस्य । पार्थस्य लोके त्वाष्ट्रीसाम (ऊ० ८. २. ६) यद्यनुतोदम् । गोवित्पवस्वे-(सा० ९५५-७)ति द्व्यभ्याघातं लौश-(ऊ० ८. २. ७)मार्भवान्त्यम् । षष्ठस्याह्नोऽसृक्षत प्र वाजिनः
15 (सा० १०३४-६) एतमु त्यं दश क्षिप (सा० १०८१-३) इति स्तोत्रीयानुरूपौ । यमग्ने पृत्सु मर्त्य-(सा० १४१५-७)मिति होतुराज्यम् । अया पवा पवस्वैना वसूनी-(सा० ११०४-६)तीहवद्वासिष्ठं (ऊ०८.२.१०) माध्यंदिनान्त्यम् । ज्योतिर्यज्ञस्ये-(सा० १०३१-३)ति मरुतां धेन्वा-(ऊ० ८. २. ११)र्भवान्त्यम् । सप्तमस्याह्नो ये सोमासः परावती-
20 (सा० ११६३-५)ति प्रतिपत् । ऋतावनं वैश्वानर-(सा० १७०८-१०) मिति होतुराज्यम् । प्र काव्यमुशनेव ब्रुवाण (सा० १११६-८) इति पार्थं (ऊ० ६.२.५) माध्यंदिनान्त्यम् । प्रो अयासी-(सा० ११५२-४) दिति यज्ञसारथ्या-(ऊ० १६. २. ५)र्भवान्त्यम् । कण्वरथन्तरं (ऊ० ४. १. ४) स्वस्थानस्थमेव । सोमसामकल्पनस्य जामिप्रयुक्तत्वात्
25 इह च जामिसद्भावात् । स्वरान्तक्लृप्तिश्चाहीनप्रयुक्तेत्यात्रेयं नात्र

3. T. अन्त्यं for माध्यंदिनान्त्यम्
7. MyKAB. अन्त्यम् for मध्यंदिनान्त्यम्
24. L. प्रयुक्तत्वादिति गौरीवीतसद्भावात्, V²C. प्रयुक्तत्वादिवीचा(C वा)जिसद्भावत् for °प्रयुक्तत्वात् इह च जामिसद्भावात्

कार्यम् । अष्टमस्याह्नो हिन्वन्ति सूरमुस्रयः (सा० ६०४-६) इति प्रतिपत् । विश्वेभिरग्ने अग्निभि-(सा० १६१७-६)रिति होतुराज्यम् । उहु वाइ शिशु-(सा० ११७५-७)मिति वासिष्ठं (ऊ० १६. २. ७) माध्यंदिनान्त्यम् । हाउ धर्ते-(सा० १२२८-३०)ति शार्ङ्ग-(ऊ० १६. २. २०)मार्भवान्त्यम् । नवमस्याह्नः । उपोषु जातमप्तुरम् (सा० 5
१३३५-७) इति प्रतिपत् । उप त्वा रण्वसदृश-(सा० १७०५-७)मिति होतुराज्यम् । पृष्ठस्योत्तरे दीर्घतमसोऽर्कौ (र० १. ३. ७)माण्डवं चैड-(ऊ० ६. ३. ६)मिति सामतृचः कार्यः । सामराजान्त्यपक्षेऽपि दीर्घतमसोऽर्कोऽस्यानुग्रहाय स उक्तः । हाउ उहु वाइ अक्रानि-(सा० १२५३-५)ति वासिष्ठ-(ऊ० ७.१.१)मन्त्यम् । असावि सोमो अरुषो 10
वृषा हरि-(सा० १३१६-८)रित्यैडं याम-(ऊ० १७.१.१४)मार्भवान्त्यम् । दशमस्याह्नः उत्सेध-(ऊ० ६. १. ११)निषेधयो-(ऊ० ६.१.१३)र्मध्ये मैधातिथम् (ऊ० १३.१.७) । आजागृवि-(सा० १३५७-६)रित्यौशनं माध्यंदिनान्त्यम् । स्वासु रथन्तर-( र० १. १. १ )वामदेव्ये (ऊ० १. १. ५) । पर्यूष्वि-(सा० १३६४-६)ति गौरीवितमेकस्याम् (ऊ० 15
२०. २. ५) । श्यावाश्वमेकस्याम् (ऊ० ६. १. १८) । आन्धीगवं (ऊ० ६. १. १९) तिसृषु । इत्यनुष्टुभः क्लृप्तिः । तथैव हि छन्दोमवद्दशरात्रस्य दशममतिदिश्य तस्य सद्दशप्रयुक्तं गौरीवितं न कल्पनीयं [इति] वक्ष्यति । केचित् आजागृविरिति गौरीवितं (ऊ० ६. १. १४) माध्यंदिनान्त्यमिच्छन्तोऽनुष्टुभि न विकारमिच्छन्ति । तद- 20
युक्तम् । माध्यंदिने गौरीवितकल्पस्याप्यूहप्रयुक्तत्वात् समूह- 21

---

7. KABMy. Om. माण्डवं ··· दीर्घतमसोऽर्कः (L. 9)

16. MyBKAT. औष्णिहमोकोनिधनम् for श्यावाश्वम्

18. KB. दशममहेदितिश्यत, My. दशममहदिति श्यैत for दशममतिदिश्य तस्य ; T. यत्र for तस्य ; MyKA. गौरीवितः for गौरीवितं

19. MyBKAT. कल्पनीया तं, V²C. कल्पनीया तु for कल्पनीयं

20. V²C. Om. न

21. BKATV²C. कल्पनस्य for कल्पस्य ; MyBKAT. Om. अपि

प्रयुक्तस्यौशनस्य लोपप्रसङ्गाच्च । तथा च द्वादशाहे निदानम्—
यज्ञायज्ञीयगौरीवितरथन्तरवामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षते ( नि०
सू० ४. ६ ) इति छन्दोमवद्दशरात्रे च समापद्यन्ते ।
दशमेऽहनि सामानि समूहेदिति । तस्मादनुष्टुभो यथोक्ता क्लृप्तिः
5 कर्तव्या । परि प्र धन्वे-( सा० १३६७-६ )ति सौहविष-(ऊ० १४.
१. ४)स्थाने वाजजित् ( ऊ० १७. १. ६ )। सूर्यवतीषु (सा०
१३७०-२) काव-(ऊ० ६. २. ११)मन्त्यम् । यज्ञायज्ञीय-( ऊ० १.
१. १४ )मग्निष्टोमसाम । इतरत्सर्वं सत्रभूतव्यूढद्वादशाहवत् इति
सत्रभूतः समूढ उक्तः । अहीनभूतस्य समूढस्य पृष्ठ्यः षडह
10 ऋतुषडहवत् कार्यः । प्रथमस्याह्नोऽस्य प्रत्ना-( सा० ७५५-६३ )
नवर्चमेव बहिष्पवमानम् । छन्दोमास्तु यथा छन्दोमवद्दशरात्रे
तथैव विकृताः कर्तव्या इति द्वादशाहविधा उक्ताः ॥

इति द्वादशरात्रं सत्रं समाप्तम् ॥ १ ॥

---

## त्रयोदशरात्रे द्वे सत्रे

15 ### तत्र प्रथमम्

अथ त्रयोदशरात्रे द्वे सत्रे । अतिरात्रः पृष्ठ्य.षडहः सर्व-
स्तोमोऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्र (तां० ब्रा० २३. १) इत्यनुवाकेन
18 पूर्वं त्रयोदशरात्रमुक्तम् । तस्य कल्पः—

---

4. T. समूह्यात्, BV²KCMy. समूहात् for समूहेत्; KATMyBV². विक्लृप्तिः, C. वित्तति for क्लृप्तिः
8. C. प्रभृत; V². भृत for भूत
9. C. °पभृतः ; V². °भृतः for °भूतः ; TMyB. °प्रभूतस्य, C. °भृतस्य for °भूतस्य
11. K. after °रात्रे ins. समापद्यन्ते दाशनित्रे

त्रयोदशरात्रे प्रथमस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसाम ( ऊ० १७. १. १६ ) पुनानः सोम धारये-( सा० ६७५-६ ) त्येतत् ॥ १ ॥

इति । षष्ठस्याह्नः प्रथमस्य छन्दोमस्य सर्वस्तोमोऽतिरात्रेण व्यवधानात् जाम्यभावात् सोमसाम विहितम् । अन्यत् सर्वं सत्रभूत- 5
व्यूढद्वादशाहवत् । सर्वस्तोमोऽतिरात्रस्त्वहीनोक्तः । तस्य सात्रिकी रात्रिः सत्रेषु प्रायणीयोदयनीययोरतिरात्रयोर्यत्र षोडशी नादिश्यते न च प्रतिषिध्यते तत्र तस्य प्रकृतिवद्यथाकामी। यत्र तु विधिर्निषेधो वा विद्यते तत्र तौ नियमार्थाविति (तु०ला०श्रौ० १०.३.१०-११) सूत्रे निर्णयः ॥१॥

इति प्रथमं त्रयोदशरात्रम् ॥ २ ॥ 10

## द्वितीयं त्रयोदशरात्रम्

अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चे-(तां० ब्रा० २३. २.१)ति द्वितीयं त्रयोदशरात्रमुक्तम् । तस्य सर्वं सत्रभूतव्यूढद्वादशाहवत् । विशेषमाह—

सांवत्सरिकं व्रतं सत्रेषु ॥ १ ॥ 15

इति ॥ १ ॥

इति द्वितीयं त्रयोदशरात्रम् ॥ ३ ॥

## चतुर्दशरात्राणि

अथ चतुर्दशरात्राणि त्रीणि । अतिरात्रः पृष्ठ्यःषडहः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणेऽतिरात्रः ( तां० ब्रा० २३. ३ ) इत्यनुवाकेन 20

---

5. MyBKTA. भृत for भून
7. KBMy. षोडशीमानतिदिश्यते for षोडशी नादिश्यते
9. BKAMyT. अत्र for सूत्रे
13. MyKATB. भृत for भूत

प्रथमं चतुर्दशरात्रम् । पृष्ठ्यावनुलोमप्रतिलोमौ समूढौ गवामयनवत् । तत्र प्रथमस्य पृष्ठस्य विशेषमाह—

यत्रातिरात्रात् पृष्ठ्यमुपयन्ति प्रथमस्याह्नोऽस्य प्रत्नानुरूपो यत्र वा त्रिककुद्रुकेभ्यः ॥ २ ॥

5 इति । अनुरूपो बहिष्पवमानस्य द्वितीयस्तृचः । उपास्मै गायता नरः (सा० ६५१-३) अस्य प्रत्नामनुद्युतम् (सा० ७५५-६३) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानमित्यर्थः । अतिरात्रस्य पृष्ठ्यस्त्रिकद्रुकाद्ययोश्चाह्नोः राथन्तरत्वात् अजाम्यर्थं प्रत्नवत्याः अस्यप्रत्नायाः कल्पनम् । पूर्वस्मिन् त्रयोदशरात्रे नवाहयोग-

10 सद्भावादस्य प्रत्ना-नवर्चं स्थितमेवेति सिद्धमजामित्वम् । तथा च सूत्रम्—प्रत्नावच्चाद्यबहिष्पवमानं परेण त्वेतदस्य प्रत्नानुरूप इत्याह दृष्टं च दशमार्थमप्यवच्छेदे । नवाहयोगाच्चे-(ला० श्रौ० १०. ३. १७-६)ति । अत्र त्रयस्त्रिंशयोरह्नोः संनिपातेऽप्यजामित्वं निदाने प्रतिपादितम् । अथ खल्वत्र त्रयस्त्रिंशे अहनी संनिपततः केनाजामीत्यह्न

15 एव सामान्यादपि वा कण्वरथन्तरमनुकल्पयेत् । पूर्वस्याह्न आर्भव उत्तरस्य वा मध्यंदिने ( नि० सू० ६.१० ) इति ॥

इति प्रथमं चतुर्दशरात्रम् ॥ ४ ॥

---

## द्वितीयं चतुर्दशरात्रम्

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः

20 ( तां० ब्रा० २३. ४. १ ) इति द्वितीयं चतुर्दशरात्रमुक्तम् ।

21 तत्र कल्पः—

---

3. MyBKAT. Om यत्र वा त्रिकद्रुकेभ्यः इति । अनुरूपो (L. 5)
9. KMyB. कल्पनाम् for कल्पनम्; KMy. Om. पूर्वस्मिन्…कल्पयेत् । (L. 15); BT. Om °गसद्भावाद्…°स्त्रिंशयो; T. नवाहंतयो for नवाहयो
21. MyBKAT. Om. तत्र कल्पः; CV². Om. कल्पः ; My. Om. तत्र … यथा स्यात् । (p. 465, L. 3); C. कल्पः…संनिवेशेन यत्र (p. 465, L. 2)

यत्र ज्योतिर्गौरायुस्त्र्यह ऐकाहिकास्ते गौरीवितस्वराः ॥ १ ॥

इति। अत्र त्र्यहग्रहणं ज्योतिर्गौरायुस्त्र्यह इत्येतेनैव संनिवेशेन यत्र ज्योतिरादयो विधीयन्ते तत्रैवास्य वचनस्य प्रवृत्तिर्यथा स्यात्। यत्र तु ज्योतिर्गौरायुर्गौरायुः पञ्चाह इत्यादि प्रकरणान्तरेण संनिवेशस्तत्र मा भूदित्येवमर्थम् ॥ १ ॥ 5

अत एवायुर्गौर्ज्योतिरतिरात्र इति चोदनायां स्यादित्याह—

एते एवावृत्ता यत्रायुर्गौर्ज्योतिरतिरात्रः ॥ २ ॥

इति। अत्राप्यतिरात्रग्रहणं संनिवेशविवक्षाप्रतिपादनार्थम्। अत्र यद्यपि अतिरात्राद्राथन्तराद्राथन्तरं ज्योतिरुपयन्ति तथापि ज्योतिषः पुनानः सोम धारये-( सा० ६७५-६ )ति प्रत्नवती बृहतीत्यजामि। पृष्ठ्यः 10 षडहः समूढो गवामयनवत्। तस्य प्रथमस्याह्नोऽस्य प्रत्नामनुद्युत-(सा०७५५-७)मित्यनुरूपः। यत्र वा त्रिकद्रुकेभ्य (आ०क० ६. ख०४.१) इत्युक्तत्वात् ॥ २ ॥

इति द्वितीयं चतुर्दशरात्रम् ॥ ५ ॥

---

## तृतीयं चतुर्दशरात्रम्

अतिरात्रो गौश्चायुश्च द्वे अहनी द्वादशाहस्य दशाहान्यतिरात्र 15 ( तां० ब्रा० २३. ५. १ ) इति तृतीयं चतुर्दशरात्रमुक्तम्। तस्य कल्पः— 17

---

1. K. पञ्चाह इत्यादि प्रकारान्तरेण तत्र मा भूदित्येवमर्थम्। अत एवायुर् for त्र्यह ऐकाहिकास् ··· ज्योतिः (L. 2)
4. CV²MyKTAB. प्रकारान्तरेण for प्रकरणान्तरेण ; MyK. Om. संनिवेशः
8. ACV². यत्र for अत्र

एते एव गोआयुषी रात्रिसत्रेष्वन्यत्र यमातिरात्राभ्यश्च संवत्सरसंमिताभ्यश्च ॥ १ ॥

इति। एते एवेति ऐकाहिके गौरीवितस्वरे इत्यर्थः। त्रयोदशरात्रप्रभृतिशतरात्रपर्यन्तानि सत्राणि रात्रिसत्राणीत्युच्यन्ते। रात्रिशब्देन 5 चोदितत्वात्। अन्यत् सर्वं व्यूढद्वादशाहवत् ॥ १ ॥

इति तृतीयं चतुर्दशरात्रम् ॥ ६ ॥

चतुर्दशरात्राणि समाप्तानि ॥

---

## पञ्चदशरात्राणि

अथ पञ्चदशरात्राणि चत्वारि। अतिरात्रः पृष्ठ्यःषडहो 10 महाव्रतं पृष्ठ्यःषडहस्त्रयस्त्रिंशारम्भणोऽतिरात्रः (तां० ब्रा० २३. ६. १) इति प्रथमं पञ्चदशरात्रम्। तस्य कल्पः—

क्लृप्तं प्रथमं पञ्चदशरात्रम् ॥ १ ॥

इति। पृष्ठ्यःषडहावनुलोमप्रतिलोमौ समूढौ गवामयनवत्। प्रथमस्य षडहस्य प्रथमस्याह्नोऽस्य प्रत्नामनुरूपः। सांवत्सरिकं व्रतम् ॥१॥

15 इति प्रथमं पञ्चदशरात्रम् ॥ ७ ॥

---

## द्वितीयं पञ्चदशरात्रम्

अतिरात्रस्त्रिवृदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यःषडह 18 आयुर्गौर्ज्योतिरतिरात्रः (तां० ब्रा० २३. ७. १) इति द्वितीयं पञ्च-

---

1 C. Cm. एते एव ··· °संमिताभ्यश्चेति ; LV²KMyB. इत्यत्र for अन्यत्र

4. L. Cm. इति

दशरात्रम् । ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे वेति सुब्रह्मण्यायां विशेष उक्तः। तस्य कल्पः—

द्वितीयस्य पञ्चदशरात्रस्यातिरात्रः त्रिवृदग्निष्टुदग्निष्टोमो यस्य वायव्यास्वग्निष्टोमसाम । तस्याग्निः प्रत्नेन जन्मनेति होतुराज्यम् । गौरीवितमनुष्टुभि ॥ १ ॥ 5

इति । राथन्तरयोरतिरात्राग्निष्टुतोरजाम्यर्थमग्निः प्रत्नेने-(सा० १७११-३)त्येतद्विहितम् । त्रिकद्रुका अनुलोमा आवृत्ताश्चैकाहिका गौरीवित-स्वराः । पृष्ठ्यः षडहः समूढः प्रथमस्याह्नोऽस्य प्रत्नामनुद्युत-(सा० ७५५-७) मिति अनुरूपः ॥ १ ॥

इति द्वितीयं पञ्चदशरात्रम् ॥ ८ ॥ 10

---

## तृतीयं पञ्चदशरात्रम्

त्रिवृदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. ८) इत्यनुवाकेन तृतीयं पञ्चदशरात्रमुक्तम् । त्रिकद्रुकेभ्यः प्राक् सर्वा एव सुब्रह्मण्या आग्नेय्यः । सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये (ला० श्रौ० १. ४. २२) इति वचनात् । 15 तस्य कल्पः—

एष एवोत्तरासु । तस्य स्वान्याज्यानि ॥ १ ॥

उत्तरासु रात्रिषु तृतीयेयं पञ्चदशरात्रे पूर्वोक्त एव त्रिवृदग्निष्टुदग्निष्टोमः । तस्य अग्न आयाही-( सा० ६६०-७१ ) त्यादीन्येवाज्यानि। अतिरात्रस्याद्यस्याभावात्। जाम्यभावादित्यर्थः ' १॥ 20

इति तृतीयं पञ्चदशरात्रम् ॥ ९ ॥ 21

---

3. MyBKATC, Om. अग्निष्टुद्

## चतुर्थं पञ्चदशरात्रम्

क्लृप्तमा सप्तदशरात्रात् ॥ १ ॥

इति । ज्योतिर्गौरायुरैकाहिका गौरीवितस्वराः । व्यूढो द्वादशाहो-ऽतिरात्रिकः । अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्र
5 (तां० ब्रा० २३. ९. १) इति चतुर्थं पञ्चदशरात्रं । व्यूढद्वादशाहवत् । ज्योतिर्गौरायुरित्यैकाहिका गौरीवितस्वराः ॥ १ ॥

इति चतुर्थं पञ्चदशरात्रम् ॥ १० ॥

---

## षोडशरात्रम्

एता एव समहाव्रताः ( तां० ब्रा० २३. १०. १ ) इत्यनुवाकेन
10 षोडशरात्रमुक्तम् । अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चेति षोडशरात्रम् । सांवत्सरिकव्रतमिति विशेषः पूर्वस्मात्सत्रात् ॥

इति षोडशरात्रम् ॥

---

## सप्तदशरात्रम्

15 अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. ११) इति सप्तदशरात्रमुक्तम् । तस्य कल्पः—

सप्तदशरात्रे चत्वार्याभिप्लविकान्यहानि श्यैतनौधसब्रह्मसामानि
18 पौष्कलश्रुध्यौष्णिहानि । प्रथमस्याह्न एष प्रत्नानुरूपः ॥ १ ॥

---

4. MyBKATC. after °रात्रिकः add :- सात्रिकः

17. P. Om. ब्रह्म°

इति। ज्योतिरादिपञ्चाहो गवामयनिकाभिप्लवपञ्चाहवत् कर्तव्यः। तत्रादितश्चतुर्णामह्नामयं विशेष उक्तः। तद्यथा प्रथमस्याह्नः—एष प्रत्नेन जन्मने-(सा० ७५८-६०)ति तृचोऽनुरूपः। अत्र निदानम्—प्रथमस्याह्न एष प्रत्नानुरूप इत्यजाम्यर्थो व्यावृत्तये पृष्ठ्याभिप्लवयो-(नि० सू० ६. ११)रिति। नौधसं (ऊ० १. १. ६) ब्रह्मसाम। 5
पौष्कल-(ऊ० १. १. १०)मुष्णिहि। द्वितीयस्याह्नः—श्यैतं (ऊ० २. १. ३) ब्रह्मसाम। श्रुध्य-(ऊ० १८. १. २)मुष्णिहि। तृतीयस्याह्नो नौधसं (ऊ० १. १. ६) ब्रह्मसाम। पौष्कल-(ऊ० १. १. १२) मुष्णिहि। चतुर्थस्याह्नः श्यैतं (ऊ० २. १. ३) ब्रह्मसाम। श्रुध्य-(ऊ० १८. १. २)मौष्णिहमिति। सर्वत्र श्यैतनौधसे स्वास्वेव। 10
स्वासु त्वावर्तनी-(ला० श्रौ० )ति वचनात् ॥ १ ॥

पञ्चमस्याह्नो विशेषमाह—

पञ्चमस्याह्नो द्वे सवने। षष्ठस्य तृतीयसवनम्। तस्य नौधसं (ऊ० १. १. ६) ब्रह्मसाम। श्रुध्यमुष्णिहि (ऊ० १८. १. २)। यजिष्ठं त्वा ववृमहे (सा० १४१३-४) इत्यैध्मवाहं (ऊ० १८. 15
१. ३) त्रैककुभं (ऊ० ६. १. ७) नार्मेधम् (ऊ० १. १. १७)। ऐध्मवाहम् (ऊ० १८. १. ३) सौश्रवसं (ऊ० ४. १. १८) मारुतम् (ऊ० ५. १. १३) इति वा ॥ २ ॥

इत्युक्थानि ॥

आयुषो द्वे सवने। ज्योतिषस्तृतीयसवनं पञ्चमस्याह्नः। 20
तस्य नौधसं (ऊ० १.१.६) ब्रह्मसाम। श्रुध्य-(ऊ० १८.१.२)मुष्णिहि। यजिष्ठं त्वा ववृमह (सा० १४१३-४) इत्यैध्मवाहं (ऊ० १८. १. ३) त्रैककुभं (ऊ० ६. १. ७) नार्मेध-(ऊ० १. १. १७) मित्युक्थानि। ऐध्मवाहं (ऊ० १८.१.३) सौश्रवसं (ऊ० ४.१. १८) 24

---

2. LV[2]C. Om. तत्रादितश् ··· उक्तः; A. [चतु]र्विधः for अयं
4. LV[3]. °जाम्यर्थोऽप्यावृत्तये for °जाम्यर्थो व्यावृत्तये

मारुत-( ऊ० ५. १. १३ )मिति वा । अत्र निदानम्—
पञ्चमेऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति । षडहाविलोपाय ।
सकल ? स त्वेव स्तोमो यः पञ्चमस्य सा संस्थे-(नि०सू०९.११)ति । एवं
पञ्चाह उक्तः । अन्यत्सर्वं व्यूढद्वादशाहवत् । अतिरात्रौ
5 सषोडशिकावषोडाशिकौ वा ॥ २ ॥

इति सप्तदशरात्रं समाप्तम् ॥ ११ ॥

## अष्टादशरात्रम्

अतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. १२) इत्यष्टादशरात्रम् उक्तम्—

10 यत्रातिरात्राद् अभिप्लवमुपयन्ति प्रथमस्याह्न एष प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यः । यत्राभिप्लवो रात्रिसत्रेषु श्यैतनौधसब्रह्मसाम-पौष्कलश्रुध्यौष्णिहोऽन्यत्र संवत्सरसंमिताभ्यः क्लृप्तमाविंशतिरात्रात् ॥१॥

इति अभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः । नौधस-(ऊ० १. १. ६)श्यैते ( ऊ० २. १. ३ ) ब्रह्मसामनी व्यत्यासम् ।
15 पौष्कल-(ऊ० १. १. १०) श्रुध्ये (ऊ० १८. १. २) चौष्णिहे । अन्यत्सर्वं यथा गवामयने ॥ १ ॥

इति अष्टादशरात्रम् ॥ १२ ॥

## एकोनविंशरात्रम्

एता एव समहाव्रता एताभिर्वै वायुः (तां० ब्रा० २३. १३. १)
20 इत्यनुवाकेनैकोनविंशतिरात्रमुक्तम् । अतिरात्रोऽभिप्लवः षडहो

2. MyK. पञ्चमो हि; TB. पञ्चमे हि for पञ्चमेऽहनि
3. My. स केवलस्तोमयोः; K, स केवलस्तोमोयोः; B. स केवलस्तोमे यः for सकलस्तोमो यः
5. CLV[2], Om, अषोडशिकौ

द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चेत्यहःक्लृप्तिः। सांवत्सरिकं व्रतं पूर्वस्माद्विशेषः ॥

इति एकोनविंशरात्रम् ॥ १३ ॥

---

## विंशतिरात्रम्

अतिरात्रोऽभिप्लवः षडहोऽभिजिच्च विश्वजिच्च द्वे अहनी　5
द्वादशाहस्य द्वादशाहान्यतिरात्रः (तां० ब्रा० २३. १४) इति विंशतिरात्रम्। उक्तावतिरात्रौ। अभिप्लवस्यैतनौधसब्रह्मसामपौष्कलश्रुध्यौष्णिहाः प्रथमस्याह्नः। एष प्रत्नानुरूप इति विशेषः ॥

विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितौ अभितः। यथा पूर्दशरात्र एवं बृहती ॥ १ ॥　10

इति। पूर्दशरात्रे ह्युक्तं तस्याभिजितः पुनानः सोम धारयेत्यभीवर्तस्तिसृषु। रौरवमेकस्याम्। कण्वरथन्तरमेकस्याम्। मैधातिथमेकस्याम्। यौधाजयं तिसृष्वि-( आ० क० ८. ११. ५ )त्यादि। अत्राभिप्लविकस्य षष्ठस्याह्नोऽभिजितश्च बार्हतत्वाज्जामिता मा भूदित्यभिजितो मध्यंदिने कण्वरथन्तरस्यानुकल्पनम्। गवामयनिकमितरत्सर्वम् ॥ १ ॥　15

इति विंशतिरात्रम् ॥१४॥　17

---

8. MyBKT. (श्रौ)ष्णिहम् for (श्रौ)ष्णिहाः
9. KMy. विश्वजितौ for विश्वजिदभिजितौ
10. T. Om. एवं बृहतीति ॥ पूर्दशरात्रे
11. T. अस्य for तस्य
12. LV[2]C. Om. मैधातिथमेकस्याम्

## एकविंशतिरात्रम्
### प्रथमम्

अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽभिप्लवः षडहोऽतिरात्रः ( तां० ब्रा० २३. १५ ) इति पूर्वमेकविंशतिरात्रमुक्तम् ।
5 तस्य कल्पः—

पूर्वस्यैकविंशतिरात्रस्याषोडशिकावतिरात्रावभितः । षोडशिमान् मध्ये । सर्वे वा षोडशिकाः । सर्वे त्वेव षोडशिमन्तः ॥ १ ॥

इति विशेष उक्तः । अभिप्लवाः श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः प्रथमयोरभिप्लवयोः । प्रथमस्याह्नः एष प्रत्नानुरूपः ।
10 उत्तमोऽभिप्लवोऽनुलोम इति केषांचिन्मतम् । प्रतिलोम इत्यन्येषाम् । तदुक्तम—पूर्वस्मिन्नेकविंशतिरात्रेऽभिप्लवं तृतीयमनुलोमं शौचिवृक्षिः । न ह्यावृत्तिर्निर्ज्ञायते । प्रतिलोमं शाण्डिल्यः । द्वावभिप्लवाविति वचनात् ॥१॥

इति प्रथममेकविंशतिरात्रम् ॥ १५ ॥

---

## उत्तरमेकविंशतिरात्रम्

15 अतिरात्रः पृष्ठ्यःषडहस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पृष्ठ्यःषडहस्त्रयस्त्रिशारम्भणोऽतिरात्र ( तां० ब्रा० २३.१६ ) इति उत्तरमेकविंशतिरात्रम् । तस्य कल्पः—

18 उत्तरस्यैकविंशतिरात्रस्य संवत्सरक्लृप्तान्यहानि ॥ १ ॥

---

9. V²CMyBK. प्रत्नानुरूपाः for प्रत्नानुरूपः
10. V²C. अनुरूपः for अनुलोमः
11. LV²C. ऐकविंशति for एकविंशति ; B. शौचिवृक्षिव्यावृत्तिर् ; V²C. शौचिवृक्षिव्यावृत्तिर् ; K. शौचिवृक्षिप्याबृहत् ; T. शौचिवृक्षिव्यावृक्षिव्यावृत्तिर् ; My. शौचिवृक्षिव्यां बृहत् for शौचिवृक्षिर्नह्यावृत्तिर्
12. L. प्रतिलोमानुलोमो ; V²C. प्रतिलोमोऽनुलोमो for प्रतिलोमं शाण्डिल्यो ; BKMy. शाण्डिलो for शाण्डिल्यो ; BKTL. अवचनात् for वचनात्

तत्र विशेषमाह—

अनुक्लृप्ताभीवर्तकालेयः पृष्ठ्यः ॥ २ ॥

इति । पृष्ठ्यस्य सर्वा बृहत्यो द्वादशाहवत् कार्याः । न तु संवत्सरवदित्यर्थः ॥ २ ॥

स्वरसाम्नां विशेषमाह—　　5

श्यैतनौधसब्रह्मसामानः स्वरसामानः पौष्कलश्रुध्यौष्णिहाः ॥ ३ ॥

इति ॥ ३ ॥

विषुवतो विशेषमाह—

विषुवतः सामतृचस्य लोके आभीशवम् (ऊ० २. २. १०)। आयन्त इव सूर्यम् (ता० १३१९-२०) इति विकर्णम् (र० २.३.६) ॥ ४ ॥　　10

समानमितरम् ॥ ५ ॥

इति ॥ ५ ॥

इति उत्तरमेकविंशतिरात्रम् ॥ १६ ॥

एकविंशतिरात्रे समाप्ते ॥

## द्वाविंशतिरात्रम्　　15

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (ता० ब्रा० २३. १७) इति द्वाविंशतिरात्रम् । तस्य कल्पः—

क्लृप्तमा संसद्भ्यः ॥ १ ॥

इति । अतिरात्रौ सात्रिकौ । त्रिकद्रुका ऐकाहिका गौरीवितस्वरा　　20
अभिप्लवः श्यैतनौधसं ब्रह्मसाम । पौष्कलश्रुध्यौष्णिहाः । प्रथमस्याह्नः　　21

---

20. KA. सात्रिकद्रुकौ; T. त्रिकौ सात्रि for सात्रिकौ । त्रिकद्रुका

एष प्रत्नानुरूपः। यत्रातिरात्रादभिप्लवमुपयन्ति । प्रथमस्याह्न एष प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्य (आ० क० ६. ४. १) इत्युक्तत्वात् । अन्यत् सर्वं सांवत्सरिकम् ॥ १ ॥

इति द्वाविंशतिरात्रम् ॥ १७ ॥

---

5

## त्रयोविंशतिरात्रम्

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. १८) इति त्रयोविंशतिरात्रम् । सप्तदशरात्रः पञ्चाहवत् पञ्चाहः कर्तव्यः। इतरत् सर्वं पूर्ववत् कर्तव्यम् ॥

10 इति त्रयोविंशतिरात्रम् ॥

---

## चतुर्विंशतिरात्रं पूर्वं संसदामयनाख्यम्
## प्रथमादिसप्तमान्तान्यहानि

अथ द्वे चतुर्विंशतिरात्रे । अतिरात्रः पृष्ठ्यः स्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तमुपङ्ग्यस्य तन्त्रे क्लृप्तं तस्य कण्वरथन्तरं माध्यंदिनेऽथ
15 त्रयस्त्रिंशं निरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमहरनिरुक्तं पृष्ठ्य. स्तोमः षडहः प्रत्यङ् त्रिवृदहरनिरुक्तं ज्योतिष्टोमोऽग्निष्टोऽतिरात्रः (तां० ब्रा० २३. १९) इत्यनुवाकेन संसदाख्यं चतुर्विंशतिरात्रमुक्तम् । अत्र कल्पः—

संसदामतिरात्रः पृष्ठ्यस्तोम. षडहः ॥ १ ॥

20 इति । संसदामिति बहुवचनं रात्रीणां विशेष्यत्वात् । अतिरात्रः प्रथममहः। अथ पृष्ठ्य. स्तोमः षडहोऽनहीनोक्तः ॥ १ ॥ तस्यात्र विशेषमाह—

23 प्रथमस्याह्न एत्र प्रत्नानुरूपो गौरीवितमनुष्टुभ्यन्वहम् । अविक्लृप्तं

---

20. MyBKT. षडहो नहीनोक्तमातस्य for षडहोऽनहीनोक्तः । तस्य

चतुर्थमहः । पञ्चमस्याह्न आकूपारस्य लोके त्वाष्ट्रीसाम यद् द्वयनुतोदम् ॥ २ ॥

इति । अविक्लृप्तं चतुर्थमहरिति गौरीवितं नानदस्थाने न कार्य-मित्यर्थः । त्रयस्त्रिंशमहरनिरुक्तमुपहव्यस्य तन्त्रे क्लृप्तम् । तस्य कण्वरथन्तरं मध्यंदिन इत्युक्तम् ॥ २ ॥ 5

इति प्रथमादिसप्तमान्तान्यहानि ॥ १८ ॥

---

## अष्टममहः

**अष्टममहराह—**

पवस्वेन्दो वृषा सुत (सा० ७७८-८०) एते असृग्रमिन्दव (सा० ८३०-२) उत नो गोषणिं धियम् (सा० १५६३- ) शशमानस्य 10 वा नरः (सा० १५६४) उप नः सूनवो गिरः (सा० १५६५) प्र स्वानासो रथा इव (सा० ११११-२७) असृग्रमिन्दवः पथा (सा० ६२८-३६) पवमानस्य ते वयम् (सा० ७८७-६) पवमानस्य ते कवे (सा० ६५७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥ 15

स्वान्याज्यानि ॥ २ ॥

इति । उपहव्यस्य तन्त्रे क्लृप्त-(तां० ब्रा० २३. १६. १)मिति वचनात् स्वानीति उपहव्यसंबन्धीनीत्यर्थः । होता देवो अमर्त्यः (सा० १४७७-६) प्र वां महिद्यवी (सा० १५६६-८) अयमु ते समतसि (सा० १५६६-६०१) गाव उपवदावट (सा० १६०२-४) 20 इत्याज्यानि ॥ २ ॥

पवमानस्य जिघ्नतः (सा० १३१०-२) इति गायत्रं चामहीयवं (ऊ० १२. १. ८) चैडं च सौपर्णं (ऊ० १८. १. ४) रौहित-कूलीयं (ऊ० १८. १. ५) च सन्तनि (ऊ० १८. १. ६) । पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६. २. २) 25 च कण्वरथन्तरं (ऊ० ४. १. ४) च दैर्घश्रवसं (ऊ० ११. 26

---

3. MyBK. ततस्थाने; T. तातस्थाने; C. भासृस्थाने for नानदस्थने

२. १६) च बार्हदुक्थं (ऊ० १८. १. ७) च यौधाजयं (ऊ० १. १. ३) स्वम् (ऊ० १२. १. ६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

साकमुक्ष (सा० १४१८) इति पार्थं (ऊ० १२. १. ६) 5 माध्यंदिनान्त्यम् ॥ ३ ॥

स्वानि पृष्ठानि ॥ ४ ॥

मा भेम मा श्रमिष्मे-(सा० १६०५-६)ति बृहत् (र० ३. २. ३)। स्वासु वामदेव्यम् (ऊ० १. १. ५)। इमा उ त्वा पुरूवसो (सा० १६०७-८) यस्यायं विश्व आर्य (सा० १६०६-१०) इति 10 श्यैतं (ऊ० १२. १. १०) च कालेयं (ऊ० १२. १. ११) चेति पृष्ठानि ॥ ४ ॥

पवमानो अजीजनत् (सा० ८८९-९१) इति गायत्र-संहिते (ऊ० १२. १. १२) जराबोधीयं (ऊ० १८. १. ८) च सौश्रवसं (ऊ० १८. १. ६) च। स्त्रे उष्णिक्ककुभौ (ऊ० 15 १२. १. १३; १४)। अभी नो वाजसातमम् (सा० १२३८-६) इति गौरीवितं (ऊ० ५. १. ३) च कार्तयशं (ऊ० १८. १. १०) च श्यावाश्वा-(ऊ० १२. १. ५)न्धीगवे (ऊ० १२.१.१६)। अञ्जत (सा० १६१४-५) इति कावम् (ऊ० १२. १. १७) अन्त्यम् ॥ ५ ॥

20 [ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

सर्वाणि स्तोत्राणि त्रयस्त्रिंशानि। अत्रोपहव्यस्य सप्तदशत्वादस्य 23 चाह्नस्त्रयस्त्रिंशत्वादौपहव्येषु पवमानेषु यथास्थानमावापः कृतः।

---

14. MyTKB. after ककुभौ ins. आ सोता परिषिञ्चत-गोमन्न इन्दो अश्ववद् इति

अन्यत्सर्वमुपहव्यवदेव क्लृप्तम्। विष्टुतिनेत्राण्यावर्त्तीनि भवन्तीति ॥६॥

इति चतुर्विंशतिरात्रे अष्टममहः ॥ १९ ॥

---

## चतुर्विंशतिरात्रे नवममहः

**अथ त्रयस्त्रिंशमहर्निरुक्तमाह—**

उपास्मै गायता नरः (सा० ६५१-३) उपोषु जातमप्तुरम् (सा० १३३८-७) बभ्रवे नु स्वतवसे (सा० १४४४-९) एते सोमा अभि प्रियम् (सा० ११७८-८६) सोमः पुनानो अर्षति (सा० ११८७-९५) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥ 5

इति बहिष्पवमानम् ॥

अग्न आयाही-(सा० ६६०-७१)त्याज्यानि ॥ २ ॥ 10

प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्रं चाश्वं (ऊ० ६. २. १२) च सोमसाम (ऊ० १४. १. १३) चाशु च भार्गवम् (ऊ० ११. २. ११) मार्गीयवम् (ऊ० १८. १. ११)। प्र सोम देववीतय (सा० ७६७-८) इति पञ्चं (ऊ० ६. २. १३) च द्वैगतं (ऊ० १८. १. १२) च पौरुहन्मनं (ऊ० 15 १८. १. १३) हारायणं (ऊ० १८ १. १४) च यौधाजयम् (ऊ० १. २. १३) औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं (ऊ० ४. १. १५) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) च ॥ ४ ॥ 20

इति पृष्ठानि ॥ 21

---

1. My. शिषतिरात्राणि, KA. शिषतिरेत्राणि, B. शिषतिनेत्राणि, CV[2]L. विषतेन[...]त्रास्या[...]वर्त्तीनि for विष्टुतिनेत्राणि

18. V[2]C. Om. औशनम्

स्वादिष्ठया मदिष्ठये-( सा० ६८६-६१ )ति गायत्र-संहिते (ऊ० १. १. ८) काक्षीवतं (ऊ० १८. १. १५) च भासं ( ऊ० १८. १. १६ ) च। पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफा-(ऊ० १. १. ६)श्वारे (ऊ० १४. १. १७)। प्र सुन्वानायान्धस ( सा० १३८६-८ ) इति गौरांवितं ( ऊ० ६. २. १७ ) च पदनिधनं च शुद्धाशुद्धीयम् ( ऊ० १८. १. १७ ) औदल-(ऊ० ११. २. ३)गौतमे ( ऊ० ११. २. १३ ) कावम् (ऊ० १. १. १३) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

सर्वं त्रयस्त्रिंशम् ॥ ६ ॥

इति चतुर्विंशतिरात्रे नवममहः ॥ २० ॥

## चतुर्विंशतिरात्रे दशममहः

त्रिणवमहराह —

एष उ स्य वृषा रथ ( सा० १२७४-६ ) एष वाजी हितो नृभिर् ( सा० १२८०-५ ) इति पुरस्तात् पर्यासस्य षड्चे यौक्ताश्वादुत्तरे । सुरूपं (ऊ० १८. १. १८) चर्षभश्च पावमानः (ऊ० १८. १. १६) आयास्याभ्यां पूर्वे पृष्ठ-कौल्मलबर्हिषे (ऊ० १. २०; २१) । वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० २. १. ६) अन्त्यम् ॥ १ ॥

एष स्य धारया सुतः (सा० ११३४-५) पवस्व देववीतये (सा० १३२६-८) इति शङ्कु-(ऊ० १८. २. १)सुज्ञाने (ऊ० ११. २. १६) गौरीवितादुत्तरे । यद्वाहिष्ठीया-(ऊ० १५. १. १४)सिते (ऊ० ११. २. २०) ॥ २ ॥

समानमितरं द्वितीयेनाह्ना द्वादशाहस्य ॥ ३ ॥

इति ॥ ३ ॥

इति दशममहः ॥ २१ ॥

---

## एकादशमहः

अथ द्वे एकविंशे अहनी । तयोराद्यमाह— 5

उत्ते शुष्मासो अस्थुर् (ऊ० १७१४-७) इति पुरस्तात्पर्यासस्य चतुर्ऋचम् । अथैतदेव तृतीयमहस्तृचक्लृप्तमेकविंशम् ॥ १ ॥

इति । एतदेवेति । द्वादशाहीयमित्यर्थः । द्वादशाहिकस्य तृतीयस्याह्नः सप्तदशत्वात् तस्यैकविंशत्वसंपादनार्थमुक्तं तृचक्लृप्तम् । ततश्च बृहत्यां पौरुमद्गादीनि चत्वार्यपि सामानि तृच एव कार्याणि । अध्यास्या नु लुप्यन्ते । 10 तथा च सत्रेष्वाण्कारनिधनं काण्वमभिसोमतृचेऽधीमहे । एवमार्भवे वाचश्च साम शौक्तं च तृच एव कार्ये ॥ १ ॥

इति एकादशमहः ॥ २२ ॥

---

## द्वादशादिचतुर्दशान्तान्यहानि

अथोत्तरमेकविंशमहरारभ्य त्रयाणामह्नां क्लृप्तिमाह— 15

प्रज्ञात उत्तरस्त्र्यहः ॥ १ ॥

इति । एकविंशं त्रिणवं त्रयस्त्रिंशमिति त्र्यहः प्रज्ञातः द्वादशीयः प्रसिद्ध एव । तत्र न कश्चिद्विशेष इत्यर्थः । सोऽयमनन्तरोक्तः षडहो विशालः पृष्ठ्यः इत्युच्यते । तथा च निदानम्—स एष आवृत्तस्तोमः पूर्वस्त्र्यहोऽनुपूर्वस्तोम उत्तर एतं त्रिशालः पृष्ठ्य 20

---

5. TKB. अंश, My. अह for अथ

10. KMy. अस्या नु लुप्यते, T. अध्यास्या तु लुप्यते for अध्यास्या नु लुप्यन्ते; V²C. लुप्यते for लुप्यन्ते

18. V²C. MyBKTA. विकारः for विशेषः

इत्याचक्षते (नि० सू० ६. १२) इति। चतुर्दशाहानि क्लृप्तानि। त्रयस्त्रिंशमहरनिरुक्तमित्युक्तम् ॥ १ ॥

द्वादशादिचतुर्दशान्तान्यहानि ॥ २३ ॥

---

## पञ्चदशमहः

5 पञ्चदशमहराह—

अथैतदेव त्रयस्त्रिंशमहरनिरुक्तमाहरति ॥ १ ॥

एतदेवेति पवस्वेन्दो वृषा सुतः (सा० ७७८) इत्यादिनानन्तरमेवाष्टमत्वेन क्लृप्तमित्यर्थः। तस्य विशेषमाह—

तस्य कण्वरथन्तरस्य लोके वाशं (ऊ० १८. २. ३) पार्थस्यौशनं

10 (ऊ० १८.२.४) बृहतो रथन्तरं (र० ३. १. १३) श्यैतस्य नौधसं (ऊ० १८. २. ५) श्रुध्यस्य पौष्कलम् (ऊ० १८. २. ६) ॥ २ ॥

इति ॥ २ ॥

इति पञ्चदशमहः ॥ २४ ॥

---

## षोडशादि-एकविंशान्तान्यहानि

15 पृष्ठ्यः स्तोमः षडहः प्रत्यङ्ङि-(तां०ब्रा० २३.१९.१)त्युक्तं षडहमाह—

पृष्ठ्यः स्तोमः षडह इत्यावृत्तः ॥ १ ॥

इति ॥ १ ॥

इति षोडशादि-एकविंशान्तान्यहानि ॥ २५ ॥

---

## द्वाविंशमहः

20 द्वाविंशमहराह—

त्रिवृदहरनिरुक्तम्। तस्य पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) उत नो गोषणि धियम् (सा० १५९३) शशमानस्य वा नरः (सा० १५९४) उप नः सूनवो गिरः (सा० १५९५) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

25 इति बहिष्पवमानम् ॥

---

5. L तत्राह for पञ्चदशमहराह; V²C. Om. पञ्चदशमहराह

पवमानस्य जिघ्नतः (सा० १३१०-२) इति गायत्रमेकस्याम् ।
आमहीयवमेकस्याम् (ऊ० १२. १. ८) ऐडं सौपर्णमेकस्याम् (ऊ० १८. १. ४)। पुनानः सोम धारये-(सा० ६७५-६)ति यौधाजयं तिसृषु (ऊ० १. १. ३)। श्यावाश्वस्य लोके गौरीवितम् (ऊ० ५. १. ३) ॥ १ ॥

समानमितरमुपहव्येन ॥ २ ॥

सर्वं त्रिवृत् ॥ ३ ॥

इति। बहिष्पवमाने प्रथमान्त्यौ तृचौ। एकर्चा इतरे । इतरयोः पवमानयोरन्त्यमेव तृचे ॥ ३ ॥

इति द्वाविंशमहः ॥ २६ ॥

---

## त्रयोविंशमहः

त्रयोविंशमहराह—

ज्योतिष्टोमोऽग्निष्टोमस्तस्यानुष्टुब् यथर्षभस्य ॥ १ ॥

इति । ऋषभस्य क्रतोर्यथानुष्टुप्सु पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवित-(ऊ० ४. १. १३)मेकस्याम्। आन्धीगव-(ऊ० १. १. १२)मेकस्याम्। श्यावाश्व-(ऊ० १. १. ११)मेकस्याम्। बृहत् (र० २. ४. २) तिसृष्विति। तथास्यापीत्यर्थः ॥ १ ॥

इति त्रयोविंशमहः ॥ २७ ॥

---

## चतुर्विंशमहः

अत्रानुष्टुभि बृहतः करणमुत्तरस्याह्नो ज्योतिरात्रत्वात् अजाम्यर्थम्। तदेवाह—

ज्योतिष्टोमोऽतिरात्रः। समानमितरम् ॥ १ ॥

इति ॥ १ ॥

इति चतुर्विंशमहः ॥ २८ ॥

इति चतुर्विंशतिरात्रं पूर्वं समाप्तम् ॥

---

## उत्तरं चतुर्विंशतिरात्रम्

### पञ्चविंशतिरात्रादि-द्वात्रिंशद्रात्रान्तानि सत्राणि

अतिरात्रो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. २०) इति द्वितीयं चतुर्विंशतिरात्रम् ॥

5 क्लृप्तमा नानाब्रह्मसामभ्यः ॥ १ ॥

इति। अभिप्लवौ श्यैतनौधसौ ब्रह्मसामानौ पौष्कलशुध्यौष्णिहौ। प्रथमस्याभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः। अत्र सूत्रम्—संवत्सरादेशाद्रात्रिसत्रेषु तथैवाभिप्लवानामभ्यासः स्यादिति गौतमः (ला० श्रौ० १०. ३. २०) इति। तस्यार्थः—गवामयनेऽभिप्लवस्यादिष्टत्वाद्रात्रि-
10 सत्रेष्वभिप्लवानां तत्प्रकृतिकत्वात् गवामयनाभ्यासवदभ्यास इति। ततश्च यथासंभवं द्वितीयादिष्वभिप्लवेषु द्वितीयेऽह्नि मध्यंदिने हाविष्मतस्य (ऊ० ७. १. १) स्थाने यौक्ताश्वसुत्तरं (ऊ० ७. १.२)। भर्गयशसो-( र० १. ३. ५-६ )र्विषुवत्के सत्रे सूत्रोक्ता व्यवस्था। अन्यत्र विकल्प एव। आर्भवे मौक्षस्य (ऊ० ४. १. १०) स्थाने
15 हाविष्मतम् (ऊ० २. १. ५)। चतुर्थे वीङ्क-(ऊ० ४. १. १९) शुद्धाशुद्धीये (ऊ० ७. २. १२) अपि भर्गयशोभ्यां (र० १. ३. ५-६) व्याख्याते। पञ्चमेऽहनि यण्वस्थाने (र० १. २. १) द्वितीयाद्यभिप्लवक्रमेणापत्यं (र० २. १. ४) सन्तनि (ऊ० ७. २ १३) शाक्वरवर्णं (र० २.१.५) च। तत्र यदा ग्रामेगेयं सन्तनि
20 (ग्रा० १७. ११. ५८४. २) स्यात्तदा मानवात् पूर्वं वाम्रं कार्य-मजाम्यर्थम्। षष्ठेऽहनि पृष्ठ्यानन्तर्यें सत्याश्वसूक्तम्।
22 त्रिणि धनायास्ययोः (ऊ० १.२.२०; २.१.१) स्थाने यथाक्रममिषो-

---

8. K. संवत्सरादेश्छात्राति°, C. संवत्सरादे छाद्रात्रि°, BMy. संवत्सरादेच्छाद्रात्रि for संवत्सरादेशाद्रात्रि°

9. L. °पल्वस्यादेशाद्रात्रि, V²C. °पल्वस्याद्रात्रि for °प्लवस्यादिष्टत्वाद्रात्रि°

10. V²C. प्रतिकत्वात्, KTBMyA. प्रतीकत्वात् for प्रकृतिकत्वात्; TAMyB. अयनवदभ्यासः; V²C. अयनाभ्यासः for अयनाभ्यासवदभ्यासः

13. MyBAT. सविषुवत्के for विषुवत्के

तृधीय-(ऊ० १३. १. १९)समन्ते (ऊ० ६. २. २) इति विशेषः । दशाहातिरात्रावुक्तौ ॥

एता एव समहाव्रताः (तां० ब्रा० २३. २१. १) इति पञ्चविंशतिरात्रम् । सांवत्सरिकं व्रतं पूर्वस्माद्विशेषः । तस्य तदेव स्थानं यत्संवत्सरे ॥ 5

अतिरात्रो गौश्चायुश्च द्वे अहनी द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २३. २२. १) इति षड्विंशतिरात्रम् । गोआयुषी ऐकाहिके गौरीवितस्वरे । अभिप्लवौ श्यैतनौधसब्रह्मसामानौ पौष्कलश्रुध्यौष्णिहौ । द्वादशाहो व्यूढः । उक्तावतिरात्रौ ॥

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहौ द्वावभिप्लवौ षडहौ द्वादशाहस्य 10 दशाहान्यतिरात्र (तां० ब्रा० २३. २३. १) इति सप्तविंशतिरात्रम् । ज्योतिरादय ऐकाहिका गौरीवितस्वराः । पूर्ववदभिप्लवौ । प्रथमस्याभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः । इतरं व्यूढद्वादशाहवत् ॥

एता एव समहाव्रताः (तां० ब्रा० २३. २४. १) इत्यष्टाविंशतिरात्रमुदयनीयातिरात्रात्पूर्वं सांवत्सरिकं व्रतम् । पूर्वस्माद्विशेषः ॥ 15

अतिरात्रो ज्योतिर्गौरायुर्गौरायु पञ्चाहो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ( तां० ब्रा० २३. २५. १ ) इति एकान्नत्रिंशद्रात्रम् । सप्तदशरात्रसदभिप्लवं चाह— अभिप्लवौ पूर्ववत् । एष प्रत्ना न कर्तव्या । इतरे व्यूढद्वादशाहवत् ॥ 20

---

8. V²CL. एकाहिके for ऐकाहिके

9. B. Om. द्वादशाहो ··· श्रुध्यौष्णिहाः (p. 484, L. 10)

12. V²CMyBKAT. Om. ज्योतिरादयः ; KA after ऐकाहिका ins. त्रिकद्रुकाः; T. ऐकाहिकौ त्रिकद्रुकौ for ऐकाहिकाः

19. T. °रात्रवद् for रात्रसद्

अतिरात्रस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्र (तां० ब्रा० २३. २६. १) इति त्रिंशद्रात्रम् । अभिप्लवाः श्यैतनौधस-ब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः । प्रथमस्याभिप्लवस्य प्रथमस्याह्न एष प्रत्नानुरूपः । इतरदुक्तम् ॥

5 एता एव समहाव्रताः ( तां० ब्रा० २३. २७. १ ) इति एक-त्रिंशद्रात्रम् । सांवत्सरिकं व्रतं पूर्वस्माद्विशेषः ॥

अतिरात्रा गौश्चायुश्च द्वे अहनी त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः ( तां० ब्रा० २३. २८. १ ) इति द्वात्रिंशद्रात्रम् । गोआयुषी ऐकाहिके गौरीवितस्वरे । अभिप्लवाः श्यैतनौधस-
10 ब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः । इतरे व्यूढद्वादशाहवत् ॥ १ ॥

इति पञ्चविंशतिरात्रादि-द्वात्रिंशद्रात्रान्तानि सत्राणि ॥ २९ ॥

इति उत्तरं चतुर्विंशतिरात्रम् ॥

---

## त्रयस्त्रिंशद्रात्रं प्रथमम्

## प्रथमादि-षोडशान्तान्यहानि

15 अथ त्रयस्त्रिंशद्रात्राणि त्रीणि । अतिरात्रस्त्रयः पञ्चाहाः । विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः (तां ब्रा० २४. १. १) इति प्रथमं त्रयत्रिंशद्रात्रम् । एता रात्रयो नाना-ब्रह्मसामान इत्युच्यन्ते । पञ्चाहानां नानाब्रह्मसामकत्वात् । तदाह—

20 नानाब्रह्मसाम्नामतिरात्रस्त्रयः पञ्चाहाः पञ्चाहक्लृप्ताः ॥ १ ॥

इति । नानाब्रह्मसामान इति अतिरात्रानन्तरं त्रयः पञ्चाहाः
22 सप्तदशरात्रस्य पञ्चाहेन क्लृप्ताः ॥ १ ॥

---

9. C. Om. गोआयुषी ··· द्वादशाहवत् ॥ ··· त्रीणि (L. 15)

17. C. Om. प्रथमं

तत्र विशेषः—

नानाब्रह्मसामानः ॥ २ ॥

इति ॥ २ ॥

प्रथमस्य पञ्चाहस्य यथालोकं बृहद्रथन्तरे ॥ ३ ॥

इति । यथालोकं यथास्थानम् । एतच्चोत्तर[त्र] विपर्यस्य वक्ष्यमाणत्वात् 5
इह तथेति विस्पष्टप्रदर्शनार्थमुक्तम् ॥ ३ ॥

नौधसं (ऊ० १. १. ६) श्यैतं (ऊ० २. १. ३) महाविश्रम्भं (ऊ० २. १. १८) त्रैशोकम् (ऊ० २. २. १३)। उभयं शृणवच्च न (सा० १२३३-४) इति वाशम् (ऊ० १८. २. ७)। एतानि ब्रह्मसामानि ॥ ४ ॥ 10

इति । प्रथमस्य पञ्चाहस्य नौधसादीनि क्रमात् ब्रह्मसामानि ॥ ४ ॥

द्वितीयस्य पञ्चाहस्यान्योन्यस्य लोकं बृहद्रथन्तरे । त्वमिन्द्र प्रतूर्तिषु (सा० १६३७-८) इति अभीवर्तः (ऊ० १२. २. १८)। त्वामिदाह्यो नर (ऊ० ८१३-४) इति मानवं यत् पृष्ठ्ये (ऊ० १८. २. ८)। छन्दस्यं पञ्चमेऽहनि (ऊ० १३. 15
२. १०)। कईं वेद सुते सचे-(सा० १६९६-८)स्याष्कारणिधनं काण्वम् (ऊ० १८. २. ९)। स्वासु यौक्तस्रुचम् (ऊ० ११. २. १२)। स्वासु श्रायन्तीयम् (ऊ० ५. २. ६)। एतानि ब्रह्मसामानि ॥ ५ ॥

इति । अन्योन्यस्य लोकमिति आपद्यते इति शेषः । श्रूयते हि 20
यद्रथन्तरस्य लोकं बृहदापद्यते बृहतो रथन्तरमिति । अत्र बृहद्रथन्तरयोरन्योन्यलोकापादनमजाम्यर्थम् । यत्पृष्ठ्य इति पृष्ठ्ये षडहे यद्विहितं तदुत्तरं मानव-(ऊ० १८. २. ८)मित्यर्थः । ननु 23

20. BKATMy. विशेषः for शेषः ; KB. श्रूयन्ते for श्रूयते

यद्यत्र द्वितीयेऽहनि उत्तरं मानवं ब्रह्मसामत्वेन विधीयते तर्हि पञ्चमेऽहनि पवमानेऽभिसोमायां (सा० ८५६-८) मानवस्य संचारप्रसङ्ग इत्यत उक्तम् । छन्दस्यं पञ्चमेऽहनीति । पूर्वमानवमित्यर्थः । ज्योतिष्टोमातिरात्रयोर्यानि सामानि विनियुक्तानि ततोऽन्यानि 5 छन्दसानीति छन्दस्यानीति चोच्यन्ते । तथा च प्रायणीये चतुर्विंशे निदानम्—अथ खलु य ऊर्ध्वं ज्योतिष्टोमदशाहाभ्यां यज्ञक्रतवः सप्तभिः पर्यायैस्तेषु ज्योतिष्टोमानां च दाशरात्रिकाणां च द्रव्याणामागमो भवति । स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रान्वितानि भागान्वितानि संस्थान्वितानि आशीःसंप्रयाणीति रूपाच्छान्दसान्यायन्ति 10 (नि० सू० ४. १२) इति । त्रिककुब्दशरात्रे च नानामध्येनिधनानि न दाशरात्रिकाणि । मध्येनिधनान्यनुभवन्ति । अतश्छन्दस्यान्युपयुङ्क्त (नि० सू० ६. ३) इति ॥ ५ ॥

तृतीयस्य पञ्चाहस्य यथालोकं बृहद्रथन्तरे । शग्ध्यूषु शचीपते ( सा० १५७९-८० ) इति मानवं यच्छन्दस्यं (ऊ० १८. 15 २.११) नित्यं पञ्चमेऽहनि (ऊ० ७.२.१४; ३.१.५) वयमेनमिदाह्य (सा० १६६१-२) इति वासिष्ठम् ( ऊ० १६. २. ५ ) आ त्वा सहस्रमा शतम् (सा० १३९१-३) इति भारद्वाजम् (ऊ० १८. २. १२) । यो राजा चर्षणीनाम् (सा० ६३३-४) इति जनित्रम् (ऊ० १८. २. १३)। त्वमिन्द्र यशा असि ( सा० 20 १४११-२ ) इन्द्रस्य यशः ( ऊ० १८. २. १४ ) एतानि ब्रह्मसामानि ॥ ६ ॥

इति । नित्यं पञ्चमेऽहनीति द्वितीयेऽहनि छन्दस्यमानवस्य विधानात् । संचाराप्रसङ्गात् पञ्चमेऽहनि नित्यतया विहितमुत्तरमेव मानवं स्थितमित्यर्थः ॥ ६ ॥

25 इति प्रथमादि-षोडशान्तान्यहानि ॥ ३० ॥

---

23. K V'L, संचारप्रसङ्गात् for संचाराप्रसङ्गात्

## सप्तदशमहः

विश्वजिदतिरात्रः। तस्य गौरीवितस्य लोके नानदम् (ऊ० २. २. १८)। अग्निर्मूर्धा दिवः ककुद् (सा० १५३२-४) इति सत्रासाहीयम् (ऊ० १८. २. १५) त्रैककुभं (ऊ० ६. १. ७) नार्मेधम् (ऊ० १. १. १७) गौरीवितं षोडशिसाम (ऊ० ३. १. २) ॥ १ ॥ 5

रात्रिः संधिः ॥ १ ॥

**इति। सांवत्सरिकस्य विश्वजितो विशेषकथनं एतदहर्विषुवत्स्थानीयम्। अत्र तृतीयपञ्चाहान्त्यस्य राथन्तरस्याह्नो वैश्वजिते पवमाने बृहत्यां स्थितेन रथन्तरेण संनिपातात् प्रसक्तं जामित्वं तत्रैव स्थितया** 10 **अस्य प्रत्नेति प्रत्नवत्या गायत्र्या परिहृतम् ॥ १ ॥**

**इति सप्तदशमहः ॥३१।**

---

## अष्टादशादि-द्वाविंशान्तान्यहानि

अथैष एव पञ्चाह आवृत्तः ॥ १ ॥

**पञ्चममहरारभ्य प्रातिलोम्येन कार्य इत्यर्थः। अस्य चावृत्तत्व-** 15 **मुपपादितं निदाने**—उत्तमः पञ्चाह आवृत्तो भवतीत्यनावृत्त (नि० सू० ? ) **इति व्याख्यातम्। पूर्वस्मिन्नेकविंशतिरात्र इति ॥ १ ॥**

आवृत्तस्य पञ्चाहस्यान्योन्यस्य लोकं बृहद्रथन्तरे। पिबा सुतस्य रसिन (ऊ० १४२१-२) इति जमदग्नेरभीवर्तो (ऊ० १८. २.१६) यदिन्द्र प्रागपागुदग् (सा० १२३१-२) इति 20 नैपातिथम् (ऊ० ४. २. १५)। आमन्द्रैरिन्द्र हरिभिर् (सा० १७१८-२०) इति अभिनिधनं काण्वम् (ऊ० १८. २. १७) यथा गौरो अपाकृतम् (सा० ११२१-२) इति गौतमस्य मनाव्यम् 23

---

8. LV²C. विशेषः कथम् for विशेषकथनम्
9. CV²BMyKA. द्वितीय° for तृतीय°; LV²C. रथन्तरस्य for राथन्तरस्य
15. MyKBA. before पञ्चमम् ins. यः

(ऊ० १३. २. १८)। त्वमङ्ग प्रशंसिषम् (सा० १७२३-४) इति पौरुमीढम् (ऊ० १३. २. १९)। एतानि ब्रह्मसामानि ।२॥

इति। अत्र पञ्चमस्याह्नः प्रथमस्य सतो रथन्तरस्य स्थाने बृहत्। चतुर्थस्याह्नो द्वितीयस्य सतो बृहतः स्थाने रथन्तरमित्येव
5 व्यत्यासः ॥ २ ॥

इति अष्टादशादि-द्वाविंशान्तान्यहानि ॥ ३२ ॥

---

## त्रयोविंशादि-त्रयस्त्रिंशान्तान्यहानि

द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

इति। व्यूढद्वादशाहवदित्यर्थः ॥ १ ॥

10 इति त्रयोविंशादि-त्रयस्त्रिंशान्तान्यहानि ॥ ३३ ॥

इति त्रयस्त्रिंशद्रात्रं प्रथमं समाप्तम् ॥

---

## त्रयस्त्रिंशद्रात्रं द्वितीयम्

अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (तां० ब्रा० २४.
15 २.) इति मध्यमं त्रयस्त्रिंशद्रात्रम्। अभिप्लवाः श्यैतनौधस-ब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः। सर्वेषां प्रथमस्याह्नः एष प्रत्नानुरूपः ॥

मध्यमस्य त्रयस्त्रिंशद्रात्रस्य सर्वे षोडशिमन्तोऽतिरात्राः ॥ १ ॥

इति विशेषः ॥ १ ॥

20 इति द्वितीयं त्रयस्त्रिंशद्रात्रम् ॥ ३४ ॥

---

5. LV²C. व्यत्यासम् for व्यत्यासः
9. MyBKAT. °द्वादशाहो भवति for °द्वादशाहवद्
16. KMy. Om. सर्वेषां ··· °पञ्चाहाः (p. 489, L. 22)

## त्रयस्त्रिंशद्रात्रं तृतीयम्

अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्रस्त्रयः पञ्चाहा अतिरात्रः (तां० ब्रा० २४. ३) इति उत्तमं त्रयस्त्रिंशद्रात्रम्। तस्य कल्पः—

उत्तमस्य त्रयस्त्रिंशद्रात्रस्यातिरात्रः । त्रयः पञ्चाहाः पञ्चाह-क्लृप्ताः ॥ १ ॥ 5

इति। तस्य विशेषमाह—

श्यैतनौधसब्रह्मसामानो यथालोकं बृहद्रथन्तराः ॥ २ ॥

इति। अत्र नानाब्रह्मसामत्वस्य श्रवणादिति भावः ॥

पक्षान्तरमाह—

यथा वा नानाब्रह्मसामसु ॥ ३ ॥ 10

इति। प्रथमत्रयस्त्रिंशद्रात्रोक्त एवायं पञ्चाह इति यस्य बुद्धिस्तन्मतेनेति भावः। तथा च निदानम्—यस्य तु स्यात् स एवायं पञ्चाह (नि० सू० १०.१) इति। तथैव तस्य बृहद्रथन्तरे तथा ब्रह्मसामानीति ॥ ३ ॥

क्लृप्तो विश्वजिद्यो नानाब्रह्मसामसु ॥ ४ ॥ 15

इति। अत्रापि सप्तदशमहो विषुवत्स्थानीयम् ॥ ४ ॥

अथैत एव पञ्चाहा आवृत्ताः ॥ ५ ॥

इति। तत्र पौर्वपक्षिकाः पञ्चाहा यदि यथा लोकबृहद्रथन्तरास्तत आवृत्ता अपि तथा अयथा लोकबृहद्रथन्तरास्तेऽत एतेऽपि तथैवेति व्यवस्था ॥ ५ ॥ 20

11. L. अत्र for अयं ; C. Om. यस्य'''पञ्चाह इति (L. 13)
17. T. पञ्चाहः for पञ्चाहाः
18. T. पञ्चाहः for पञ्चाहाः; LV'C. Cm. यथा'''आवृत्ता अपि
19. LV²C. Om. अयथा ; LV²C. ततः for अतः

आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नोऽभि सोमास आयवः ( सा० ८५६-८ ) इति मानवमेकस्याम् (ऊ० ७. २. १४)। तस्यामेवानूपम् (ऊ० ७. २. १५)। बृहन्निधनं वार्कजम्भमेकस्याम् (र० ४. १. ८)। मैधातिथमेकस्याम् (ऊ० ६. ३. ६)। वाम्रं तिसृषु (ऊ० ७. २. १६)। अग्नेस्त्रिणि-
5 धनमध्यास्यायाम् (ऊ० ७. २. १४) ॥ ६ ॥

समानमितरम् ॥ ७ ॥

इति । अत्र वैश्वजितस्य राथन्तरस्य संधेः पूर्वस्मिन् पक्षसि पञ्चाहानां पञ्चमेनोत्तरस्मिन् प्रथमतां गतेन राथन्तरेणाह्नां
10 संनिपाते जामि स्यादिति तन्निवृत्त्यर्थं बृहन्निधनस्य वार्कजम्भस्य कल्पनमिति स्थिते निधनवतो मानवस्य पुरस्तादुपरिष्टाच्च तन्निधनवतस्तस्य करणं जामिप्रसङ्गादेवायुक्तमिति स्वाराद्‌ानूपादूर्ध्वं तत् कल्पितम् । स्तोमोपपत्त्यर्थं चैषां मैधातिथस्य चागन्तोरेकर्च-करणम् । चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोरिति न्यायान्मानव-
15 मेकस्यां तस्यामेवानूपमित्यादिक्रमो ज्ञातव्यः । वाम्राग्नेये यथापूर्वमेव तृचाध्यास्ययोः स्थिते । ननु पञ्चाहस्याभिप्लवप्रकृतिकत्वात् संवत्सरादेशाद्द्वात्रिसत्रेषु इत्युक्तेन न्यायेन पौर्वपक्षिकस्य तृतीयस्य पञ्चाहस्य पञ्चमेऽहनि सन्तनिनः करणात् आवृत्तप्रथमभूते-ऽस्मिन्नहनि संतनिमानवयोर्निधनवतोः संनिपातात् जामि स्यात् ।
20 तदुक्तम्—आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो

12. V²L. Om. एव ; L. after इति ins. मत्वा
13. BMyKT चागतोः for चागन्तोः
15. CV³. लव्यः, MyBKTA. लब्धः for ज्ञातव्यः ; V²C. वाम्रायेये for वाम्राग्नेये
16. L. तृचाध्यास्यायाम् C. तृचाद्‌ध्याव, V³ तृचाद्‌ध्या for तृचाध्यास्ययोः ; MyTKBV². न तु for ननु
17. MyBKTAV²C. संवत्सरो देशात् for संवत्सरादेशात्
20. BMyKA. वृत्तानां for आवृत्तानां

मानवादिर्बृहती तज्जामि स्यात् संतनिने-(ला०श्रौ० १०. ४. १)ति । न चेदत्र वक्तुं शक्यं पञ्चमेऽहनि यदहर्ग्रामेगेयं संतनि स्यात्। पूर्वं वाम्रं स्यादिति । तथा हि—मानवात् वाम्रमानवानूपवार्कजम्भेषु पूर्ववदेकर्चेषु कृतेषु मैधातिथं तृचे कर्तव्यं स्यात् । न चागन्तुनस्तृचे करणं क्वचिदपि दृष्टम् । एवं तर्हि वैकृतत्वात् 5
पञ्चाहानां न तेषु संवत्सरवदभ्यासः प्रवर्तते । अपि तु प्रथमस्यैवाधिकारेण अभिप्लवांस्तु न प्रसृजेत् । संवत्सरवदभ्यासः । तदुक्तम्—वैकृतत्वात्तु निवृत्तिः । पञ्चाहेषु अभिप्लवान् न प्रसृजेदि-(ला० श्रौ० १०.४.२-३)ति । अत्र च यथालोकं बृहद्रथन्तरत्वे द्वयोरपि पक्षसोः प्रतिपञ्चाहमाद्यन्तरयोरपि पक्षसोः प्रतिपञ्चाहमाद्यन्तयोरह्नोः 10
राथन्तरत्वात् जामि स्यादिति । तन्निवृत्तये पूर्वस्मिन् पक्षसि प्रथमस्याह्न एष प्रत्नानुरूपः कार्यः । उत्तरस्मिन् प्रतिपञ्चाहमावृत्तप्रथमेऽहनि पूर्ववद्वार्कजम्भं कार्यम् । तदुक्तम्—एष प्रत्नावार्कजम्भे वा प्रतिपञ्चाहं यथा लोकबृहद्रथन्तराश्चेदेष प्रत्ना पूर्वपक्षसि वार्कजम्भम् उत्तर (Cf. ला० श्रौ० १०. ४. ६) इति ॥ ७ ॥ 15

इति त्रयस्त्रिंशद्रात्रं तृतीयम् ॥ ३५ ॥

---

## चतुस्त्रिंशद्रात्रं

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ( ता० ब्रा० २४. ४. १ ) इति चतुस्त्रिंशद्रात्रम् ॥ 20

---

2. CLV². यदहं for यदहर्
3. V². सन्ति; CMyBKAT. सति for मानवात्
7. TCV²B. विसृजेत् for प्रसृजेत्
8. TBV². वैकृतकत्वात् ; KMyA. वैकतकृत्वात् for वैकृतत्वात्
10. LV²C. पक्षयोः for पक्षसोः ; LV²C. Om. प्रतिपञ्चाहम् ··· पक्षसोः प्रति
13. V²CL. Om. तदुक्तम्
19. MyKATB. after इति ins. पृष्ठानि

क्लृप्तमा विधृतिभ्यः ॥ १ ॥

इति। अतिरात्रौ सात्रिकौ त्रिकद्रुका ऐकाहिका गौरीवितस्वराः। अभिप्लवाः श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः। प्रथमस्याभिप्लवस्य प्रथमस्याह्न एष प्रत्नानुरूप इति विशेषः।
5 इतरत्सर्वं सांवत्सरिकम् ॥ १ ॥

इति चतुस्त्रिंशद्रात्रम् ॥ ३६ ॥

---

## पञ्चत्रिंशद्रात्रम्

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्र (ता० ब्रा० २४. ५) इत्यनुवाकेन
10 पञ्चत्रिंशद्रात्रं। सप्तदशरात्रवत्। अभिप्लवः पञ्चाहः पूर्ववद्। एष प्रत्ना न कर्तव्या। इतरदुक्तम् ॥

इति पञ्चत्रिंशद्रात्रम् ॥

---

## षट्त्रिंशद्रात्रम्

अतिरात्रश्चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्र
15 (तां०ब्रा०२४.६) इत्यनुवाकेन षट्त्रिंशद्रात्रमुक्तम्। प्रथमस्याभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः। अभिप्लवाः श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः। अन्यत् सांवत्सरिकम् ॥

18 इति षट्त्रिंशद्रात्रम् ॥

---

10. V²CL. Om. सप्तदशरात्रवत्,··· इतरद्

## सप्तत्रिंशद्रात्रम्

एता एव समहाव्रताः (तां० ब्रा० २४. ७) इति सप्तत्रिंशद्रात्रम् । सांवत्सरिकं व्रतं पूर्वस्मात्सत्राद्विशेषः ॥

इति सप्तत्रिंशद्रात्रम् ॥

---

## अष्टात्रिंशद्रात्रम् 5

अतिरात्रो गौश्चायुश्च द्वे अहनी चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २४. ८. १) इत्यष्टात्रिंशद्रात्र-सुक्तम् । गोआयुषी ऐकाहिके गौरीवितस्वरे । अभिप्लवाः श्यैत-नौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः । व्यूढो द्वादशाहः । अतिरात्रौ सात्रिकौ ॥ 10

इति अष्टाचत्वारिंशद्रात्रम् ॥

---

## एकान्नचत्वारिंशद्रात्रम्

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २४. ९. १) इत्येकान्नचत्वारिंशद्रात्रम् । तस्य सर्वमुक्तम् ॥ 15

इति एकान्नचत्वारिंशद्रात्रम् ॥

---

## चत्वारिंशद्रात्रम्

एता एव समहाव्रता ( तां० ब्रा० २४. १०. १ ) इति 18

---

8. TABMyK. Om. उक्तम् ; L. ऐकाहिक° for गौरीवित°

चत्वारिंशद्रात्रम्। सांवत्सरिकं व्रतम्। उपान्त्यमहः। अन्यत् सर्वं पूर्ववत्॥

इति चत्वारिंशद्रात्रम्॥

---

## एकान्नपञ्चाशद्रात्रं

5 ### प्रथमम्

### [ प्रायणीयोऽतिरात्रः ]

अथैकान्नपञ्चाशद्रात्राणि सप्त। अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यग्निष्टोममुखान्यतिरात्रो दश पञ्चदशा उकथ्याः षोडशिमद्दशममहरतिरात्रो द्वादश सप्तदशा उक्थ्याः अतिरात्रः पृष्ठ्यः षडहोऽतिरात्रो द्वादशैकविंशा
10 उक्थ्या अतिरात्रः (तां० ब्रा० २४. ११. १) इति विधृतिसंज्ञमेकान्नत्रिंशद्रात्रम्। तस्य प्रायणीयातिरात्रे विशेषमाह—

विधृतीनां ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः कौत्सस्य लोक उद्वंशीयम् (ऊ० १९. १. १) आ त्वा विशन्त्विन्दवः (सा० ११६०-२) इत्येतासु। जराबोध तद्विविड्ढि (सा० १६६३-५) प्रतिष्या
15 सूनरी जनि (सा० १७२५-७) एषो उषा अपूर्व्ये-(सा० १७२८-३०) त्येतासु गायत्रीषु जराबोधीयं संधिषाम (ऊ० १४. १. ५; १९. १. ३-४)॥ १॥

इति। विधृतीनामिति बहुवचनं संसदादिवद्रात्रिबहुत्वापेक्षम्। अत्र निदानम्—ऐडं चेत्संधिषाम स्यात् कौत्सस्य लोक उद्वंशीयमेतेनेडा-
20 कामश्च सिध्यत्यजामिकल्पश्च इति। तद्यदेतासु आ त्वा विशन्त्विन्दव (सा० १६६०-२) इति एता रात्रेर्विकृतौ दृष्टा इति।
22 नित्यासु वे-(नि०सू० १०.२)त्यस्य स्थानेऽध्यर्धेडाया विधानादिडाकामः

---

20. KABMy. गमः for कामः ; V²C. सिध्यतु for सिध्यति

22. TKAMyB. Om, नित्यासु वेति ; My. तस्य for अस्य ; V² ऊष्वित्यस्य for अस्य ; V²L. स्थानेर्ध्वेडायाः for स्थानेऽध्यर्धेडायाः; MyBKA. इडागमः for इडाकामः

सिध्यति स्वारत्वादजामिकल्पश्च । इन्द्र सुतेष्वि-( सा० ७४६-८ ) त्येतास्वेवोद्वंशीयं (ऊ० १८.२.१) कार्यमित्यन्ये । यदाह—नित्यासु वेति विचारयन्त्यर्थकारितमुद्वंशीयं स किमर्थो नित्याश्चावपे-(नि०सू०१०.२)दिति । तथा च सूत्रेषु— आ त्वे-(सा० १६६०-२)न्द्र सुतेषु ( सा० ७४६-८ ) इति द्वयोरपि तृचयोरुद्वंशीय-(ऊ० १८. २. १-२)मधीमहे । गायत्रीषु   5
जराबोधीय-( ऊ० १८. २. ३-४ )मित्यादिब्राह्मणानुसारेण गायत्रीषु संधिषाम विहितम् । तन्मूलत्वसूचनार्थमेव कल्पे गायत्रीष्विति छन्दःकीर्तनम् । एवमुष्णिक्षु श्रुध्य-( ऊ० १८. २. ५ )मित्यादावपि द्रष्टव्यम् ॥ १ ॥

इति प्रायणीयोऽतिराात्रः ॥ ३८ ॥   10

---

त्रिवृन्ति अहानि । तेषां प्रथमम्

अथाग्निष्टोमसंस्थमेकं द्वे उक्थसंस्थे इति त्रीणि त्रिवृन्त्यहानि । तेषां प्रथममाह—

अथ यदेव कुसुरुबिन्दस्य राथन्तरं त्रिवृदहस्तदेनत् । तस्य गौरीवितमनुष्टुभि (ऊ० ४. १. १३) ॥ १ ॥   15

इति । उप-द्वि-पवे-(सा० ६५१-९)ति बहिष्पवमानम् । अग्न-आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि । उच्चा ते जातमन्धसः ( सा० ६७२-५ ) इति गायत्रमामहीयवं ( ऊ० १. १. १ ) जराबोधीय-( ऊ० ११. १. १४ )मिति सामतृचः । पुनानः सोम धारये-(सा० ६७५-६)ति यौधाजयं ( ऊ० १.१. ३ ) तिसृषु ।   20
औशन-(ऊ० १. १. ४)मन्त्यम् । रथन्तरं ( र० १. १. १ ) च   21

---

4. MyBKTA. सुतेष्वपि for सुतेष्विति.
7. MyBKAT. तन्मूल for तन्मूलत्व
13. V²C. Om. तेषां ··इत्याज्यानि (L. 17); L. तत्र··· अहः for तेषाम्···माह
16. L. Om. उप ··· आज्यानि

वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८९-
६९१)ति गायत्र-संहिते (ऊ० १. १. ८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति सफ-
5 (ऊ० १. १. ९) पौष्कले (ऊ० १. १. १०)। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीविता-(ऊ० ४. १. १३)न्धीगवे (ऊ० १. १. १२)। काव-(ऊ० १. १. १३)मन्त्यम्। अन्त्यमेव तृचे। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। सर्वं त्रिवृत् ॥ १ ॥

द्वितीयं त्रिवृदहराह—

10 यद् बार्हतं त्रिवृदहस्तदुत्तरम् ॥ २ ॥

इति। कुसुरुबिन्दस्येत्येव ॥ २ ॥

तत्र विशेषमाह—

पवमानस्य ते कवे (सा० ६५७-९) इति पर्यासः। यौक्ताश्वस्य (ऊ० १. २. १९) लोके हाविष्मतम् (ऊ० ७. १. १)
15 माधुच्छन्दसस्य (ऊ० ७. १. ३) कालयमे (ऊ० ६. २. ४) हाविष्मतस्य (ऊ० २. १. ५) मौक्षम् (ऊ० ४. २. १०)। गौरीवितमनुष्टुभि (ऊ० २. १. ८)। साकमश्वम् (ऊ० १. १. १५) सौभरम् (ऊ० १. १. १६) आष्टादंष्ट्रम् (ऊ० २. १. १२) इत्युक्थानि ॥ ३ ॥

20 समानमितरम् ॥ ४ ॥

इति। पवस्व वाचो (सा० ७७५-७) पवस्वेन्दो (सा० ७७८-८०) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। अग्नि-दूत-(सा० ७९०-२)मित्याज्यानि। वृषा पवस्व धारये-(सा० ८२३-५)ति
24 गायत्रं हाविष्मत-(ऊ० ७. १. १)माजिग-(ऊ० १. २. १४)मिति

9. V²CL. Om. आह ; MyKB. Om. अहर्
10. CV¹LMyBKAT. Om. अहस्तद् ; V²CL. उत्तमम् for उत्तरम्

सामतृचः । पुनानः सोम धारये-( सा० ६७५-६ )ति त्रिणिधन-मायास्यं (ऊ० २. १. १) तिसृषु । वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् । बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं ( ऊ० २. १. ३ ) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्र-मौक्षे (ऊ० ४. १. १०) । पवस्वेन्द्रमच्छे-(सा० ६९२ ; ६९४)ति सत्रासाहीय-( ऊ० ६. २. ७ )श्रुध्ये (ऊ० ६. १. २०) । अयं पूषा रयिर्भग ( सा० ८१८-२० ) इति गौरीवित-क्रौञ्चे (ऊ० २. १. ८-६) । वृषा मतीना-(सा० ८२१-३) मिति याम-(ऊ० २. १. १०)मन्त्यम् । यामवर्जमेकर्चाः । यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम । साकमश्वं (ऊ० १. १. १५) सौभर-(ऊ० १.१.१६)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि ॥ ४ ॥

प्रथमस्य त्रिवृतो या क्लृप्तिः सैव तृतीयस्येति अतिदिशँस्तत्र विशेषमाह—

या पूर्वा सोत्तरा । तस्याः प्रमँहिष्ठीयं ( ऊ० २. २. ५ ) हारिवर्णम् ( ऊ० २. २. ६ ) उद्वंशीयं ( ऊ० ६. १. ८ ) तैरश्च्यम् ( ऊ० २. २. ७ ) इत्युक्थानि ॥ ५ ॥

इति त्रिवृन्ति अहानि ॥ ३८ ॥

———

## अतिरात्रः

त्रिवृद्भ्य उत्तरमतिरात्रमाह—

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् । कौत्सस्य (ऊ० १. २. १०) लोक उद्वंशीयम् ( ऊ० १६. १. २ ) आ त्वा विशन्त्विन्दवः (सा० १६६०-२) इत्येतासु । अग्ने वाजस्य गोमतः (सा० १५६१-३) उषस्तच्चित्रमाभर (सा० १७३१-३) अश्विना वर्तिरस्मद्

13. L. °दिशति for °दिशन्

( सा० १७३४-६ ) इत्येतासूष्णिक्षु श्रुध्यं संधिषाम (ऊ० ११. १. ७; १६. १. ५; ६) ॥

इति ॥ १ ॥

इति अतिरात्रः ॥ ३९ ॥

---

5 दश पञ्चदशाः उकथ्याः

पञ्चदशानां दशानां प्रथममाह—

अथ यदेव कुसुरुबिन्दस्य राथन्तरं पञ्चदशमहस्तदेतत्। तस्य गौरीवितमनुष्टुभि ॥ १ ॥

इति। उपास्मै गायता नरो-दवि द्युतत्या रुचा (सा० ६६१-६) एते 10 असृग्रमिन्दवो-राजा मेधाभिरीयते (सा० ८३०-५) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम्। अग्न आ नो मित्रायाहीन्द्राग्नी-(सा० ६६०-७१)त्याज्यानि। उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) च। पुनानः सोम धारये-(सा० ६७५-६)ति रौरव-(ऊ० १. १. २)यौधाजये (ऊ० १.१.३)। 15 औशन-(ऊ० १. १. ४) मन्त्यम्। रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८६-१)ति गायत्र-संहिते (ऊ० १. १. ८)। अया पवस्व देवयुः (सा० ७७२) पवते हर्यतो हरिर् (सा० ७७३) इति सफ-20 (ऊ० १. १. ६)पौष्कले (ऊ० १. १. १०)। पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीविता-(ऊ० ४. १. १३)न्धीगवे (ऊ० १. १. १२)। काव-(ऊ० १. १. १३)मन्त्यम्। उष्णिक्ककुभौ गौरीवितं चैकर्चाः। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। प्रमँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्चय-25 (ऊ० २. २. ७)मित्युकूथानि। सर्वं पञ्चदशम् ॥ १ ॥

6, MyBKATV²C. Om. दशानां

द्वितीयं पञ्चदशमाह—

यद् बार्हतं पञ्चदशं तदुत्तरम् । पवमानस्य ते कवे (सा० ६५७-९) इति पर्यासो माधुच्छन्दसस्य (ऊ० ७. १. ३) लोके कालेयम् ( ऊ० ६. १. ४ ) । गौरीवित-( ऊ० ४. १. १३ ) मनुष्टुभि ॥ २ ॥ 5

इति । पवस्व वाचो-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि ( सा० ७५५-८४ ) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । अग्निं दूत-(सा० ७९०-२)मित्याज्यानि । वृषा पवस्व धारये-(सा०८०३-५)ति गायत्रं च हाविष्मतं (ऊ० ७. १. १) च । पुनानः सोम धारये-(सा० ८०३-५)ति आयास्ये ( ऊ० १. २. २० ; २. १. १)। 10 वृषा शोण (सा० ८०६-९) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम् । बृहच्च (र० १. १. ५) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० २. १. ३) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । यस्ते मदो वरेण्य ( सा० ८१५-७ ) इति गायत्र-मौक्षे (ऊ० ४. ५. १०) । पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति सत्रासाहीय-(ऊ० ६. 15 २. ७)श्रुध्ये (ऊ० ६. १. २०) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति गौरीवितं (ऊ० २. १. ८) च क्रौञ्चं (ऊ० २. १. ६) च । वृषा मतीना-(सा० ८२१-३)मिति याम-(ऊ० २. १. १०)मन्त्यम् । ककुबुष्णिहौ गौरीवितं चैकर्चाः । यज्ञायज्ञीय-(ऊ० १. १. १४) मग्निष्टोमसाम । साकमश्वं ( ऊ० १. १. १५ ) सौभर-(ऊ० 20 १. १. १६)माष्टादंष्ट्र-( ऊ० २. १. १२ )मित्युक्थानि । सर्वं पञ्चदशम् ॥ २ ॥

उत्तराणि पञ्चदशान्याह—

एताभ्यामेव विपर्यासमादशमादह्नः ॥ ३ ॥

इति । राथन्तरेण पञ्चदशेन तृतीयम्, बार्हतेन चतुर्थम् इत्येवं 25 व्यत्यासेन दशमं पञ्चदशेन समम् । यावत् क्लृप्तिः ॥ ३ ॥ 26

23. LCY[3] सर्वाणि for उत्तराणि

26. MyBKAT. पञ्चदशं for पञ्चदशेन and Om. समम्

तत्र दशमस्य विशेषमाह—

दशमस्याह्नः आष्टादंष्ट्रस्य लोके नार्मेधम् (ऊ० १. १. १७) । प्रत्यस्मै पिपीषत ( सा० ७६०-३ ) इति नानदं (ऊ० १०. १. १) षोडशिसाम ॥ ४ ॥

इति। षोडशिसंस्थमेतदहः । उक्थ्यत्वं विधाय षोडशिमद्दशम- 5 (आप० श्रौ० २३. ७. ३)मिति वचनात् । अनुष्टुप्सु नानद- मित्येतदस्मिन्नहनि ॥ ४ ॥

इति दश पञ्चदशा उक्थ्याः ॥ ४० ॥

---

## उत्तरः अतिरात्रः

पञ्चदशेभ्य उत्तरमतिरात्रमाह—

10 ज्योतिष्टोमोऽतिरात्रः षोडशिमानविक्लृप्तः ॥ १ ॥

इति। अत्र संधिषामाभिप्रेत्य बृहतीषु रथन्तर-(तां० ब्रा० २४.११.७) मिति श्रुतावुक्तम् ॥

इति उत्तरः अतिरात्रः ॥ ४१ ॥

---

## द्वादश सप्तदशा उक्थ्याः

15 सप्तदशानां प्रथममहराह—

अथ यदेव कुसुरुबिन्दस्य राथन्तरं सप्तदशमहस्तदेतत् । तस्य मैधातिथस्य लोके बृहन्निधनं वार्कजम्भम् ( र० २. ४. ६ )। रौरवस्य मैधातिथम् ( ऊ० ६. ३. ६ )। अग्नेरर्कस्य संहितम ( ऊ० १. १. ८ ) । गौरीवित-( ऊ० ४. १. १३ ) 20 मनुष्टुभि ॥ १ ॥

---

6. CV². एतस्मिन् for एतदस्मिन्

15. CV²MyBKAT. Cm. अहः

इति। उपास्मै गायता नरो दविद्युतत्या रुचा (सा० ६५१-६) एते असृग्रमिन्दवः (सा० ८३०-२) तं त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम्। अग्न आ याहि वीतये (सा० १५५२- ) इत्याज्यानि। उच्चा ते जातमन्धस (सा० ६७२-५) इति गायत्रं चामहीयवं (ऊ० १.१.१) च। अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) च वार्कजम्भं यौधाजयं (ऊ० १. १. ३) चौशन-(ऊ० १. १. ४)मन्त्यम्। द्विहिंकारमाद्यायाम्। यौधाजय-मध्यास्यायाम्। रथन्तरं (र० १. १. १) च वामदेव्यं (र० १. १. ५) च यद् बृहन्निधनं (र० २. ४. ७) मैधातिथं (ऊ० ९. ३. ६) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १.१.७) चेति पृष्ठानि। स्वादिष्ठये-(सा० ६८६-६१)ति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्रमच्छे-(सा० ६६२; ६६४)ति सफ-(ऊ० १. १.६)पौष्कले (ऊ० १.१.१०)। पुरोजिती वो अन्धस (सा० ६६७-६) इति गौरीविता-(ऊ० ४. १. १३)न्धीगवे (ऊ० १.१.१२)। काव-(ऊ० १. १. १३)मन्त्यम्। सफपौष्कले एकर्चयोः। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य-(ऊ० २. २. ७)मित्युक्थानि। सर्वं सप्तदशम्। अस्याह्नो राथन्तरस्य पूर्वेण ज्योतिष्टोमातिरात्रेण रथन्तरसंधिना संनिपाताज्जामिता मा भूदिति मध्यंदिने वार्कजम्भं कल्पितम्। तद्वशाच्च रौरवस्य मैधातिथम् (ऊ० ६. ३. ६)। त्रिवृत्पञ्चदशयोस्तु रौरवयोः पूर्वस्मिन् ज्योतिष्टोमातिरात्रे सौभर-(ऊ० १. १. १६)मुक्थानां ब्रह्मसामेत्यजामि ॥ १ ॥

4. V²CL अग्निंदूतम् for अग्न आयाहिं वी

द्वितीयं सप्तदशमाह—

यद् बार्हतं सप्तदशं तदुत्तरम् । पवमानस्य ते कवे (सा० ६५७-९) इति पर्यासः । माधुच्छन्दसस्य लोके कालेयं (ऊ० ६. २. ४) स्वाशिरामर्कस्य ( र० ३. १. २ ) मौक्षम् (ऊ० १२. २. ४) । गौरीवित-(ऊ० ४. १. १३)मनुष्टुभि ॥ २ ॥

इति । पवस्व वाचो अग्रियः-पवस्वेन्दो वृषा सुतो-वृषा सोम (सा० ७७५-८३) उत्ते शुष्मास ईरते (सा० १२०५-७) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम् । अग्निं दूत-(सा० ७९०-९)मित्याज्यानि । वृषा पवस्व धारये-( सा० ८०३-५ )ति गायत्रं च हाविष्मतं (ऊ० ७. १. १) च । परीतो षिञ्चता सुत-(सा० १३१३- )मिति समन्तं ( ऊ० ९. १. ३ ) च दैर्घश्रवसं (ऊ० ५. २. ४) चायास्ये (ऊ० ७. १. ४) । वृषा शोण (सा० ८०६-८ ) इति पार्थ-( ऊ० ७. १. ६ )मन्त्यम् । शशकर्णक्लृप्ता बृहती । बृहच्च ( र० १. १. ५ ) वामदेव्यं ( ऊ० १. १. ५ ) च श्यैतं (ऊ० १. १. ३) च कालेयं ( ऊ० १. १. ७ ) चेति पृष्ठानि । यस्ते मदो वरेण्यम् ( सा० ८१५-७ ) इति गायत्र-मौक्षे (ऊ० ४. १. १०) । पवस्वेन्द्रमच्छे-( सा० ६९२-४ )ति सत्रासाहीय-(ऊ० ६. २. ७)श्रुध्ये (ऊ० ९.१.२०) । अयं पूषा रयिर्भग (सा० ८१८-२०) इति गौरीवितं ( ऊ० २. १. ८ ) च क्रौञ्चं (ऊ० २. १. ६) च । वृषा मतीना-(सा० ८२१-३)मिति याम-(ऊ० २. १. १०)मन्त्यम् । ककुबुष्णिहावेकचौ । यज्ञायज्ञीय-(ऊ० १. १. १४) मग्निष्टोमसाम । साकमश्वं (ऊ० १.१.१५) सौभर-(ऊ० १.१.१६) मापादंष्ट्र-(ऊ० २. १. १२)मित्युक्थानि । सर्वं सप्तदशम् ॥ २ ॥

पराणि सप्तदशान्याह—

एताभ्यामेव विपर्यासमाद्वादशादह्नः उद्धरत्युत्तरेभ्यो वार्कजम्भम् (र० २.४. ६) । यथालोकं मैधातिथ-(ऊ० ९.३.६)रौरवे (ऊ० १.१.२) ॥ ३ ॥

इति। तृतीयादिषु सप्तदशेषु पूर्वस्याह्नो बार्हतत्वाज्जाम्यभावाद्वार्क-जम्भ-(र० २. ४. ६)मुद्धार्यम् । ततश्च यथास्थानं मैधातिथ-(ऊ० ६. ३. ६)रौरवे (ऊ० १. १. २) इत्यर्थः। तत्रेयं बृहत्यां क्लृप्तिः। अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) च मैधातिथं (ऊ० ९. ३. ६) च रौरव-यौधाजये (ऊ० १. १. २-३) इति। इतरत् समानम् ॥ ३ ॥ 5

द्वादशस्याह्नो विशेषमाह—

द्वादशस्याह्न उद्वंशीयान्तान्युक्थानि ॥ ४ ॥

इति ॥ ४ ॥

इति द्वादश सप्तदशा उक्थ्याः ॥४२॥ 10

---

## अतिरात्रः

सप्तदशेभ्यः परमतिरात्रमाह—

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् । कौत्सस्य लोक उद्वंशीयम् (ऊ० १६. १. १)। आ त्वा विशन्त्विन्दवः (सा० १६६०-२) इत्येतास्वग्निं तं मन्ये यो वसु-(सा० १७३७-६)र्महेनो अद्य बोधय (सा० १७४०-२) प्रति प्रियतमं रथम् (सा० १७४३-५) इत्येतासु पङ्क्तिषु रायोवाजीयं (र० ५. १. ४)संधिषाम ॥ १ ॥ 15

इति। तदेवमेकान्नत्रिंशदहान्युक्थानि ॥ १ ॥

इति अतिरात्रः ॥४३॥

---

## पृष्ठ्यः षडहः 20

पृष्ठ्यः षडहः समूढो वा व्यूढो वा। समूढस्त्वेव ॥

इति। व्याख्यातोऽयं ग्रन्थ ऋतुषडहे। प्रथमस्याह्नोऽस्य प्रत्नानुरूप इति केचित्। नेति वयम्। पूर्वस्मिन्नतिरात्रे क्रियमाणेन सौभरेणैवा-जामितायाः सिद्धत्वात् ॥ १ ॥

इति पृष्ठ्यः षडहः ॥४४॥ 25

---

21. P. व्यूढस्त्वेव for समूढस्त्वेव

## अतिरात्रः

**पृष्ठ्यात् परमतिरात्रमाह—**

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् । औशनस्यर्क्षु वैश्वज्योतिषमन्त्यं (ऊ० १६. १. ७) यत्प्रगायते-( सा० ५३५ )ति । अबोध्यग्निः समिधा जनानाम् ( सा० १७४६-८ ) इदं श्रेष्ठं ज्योतिषां ज्योतिरागाद् (सा० १७४६-५१) अभीत्यग्निरुषसामनीकम् (सा० १७५२-४) इत्येतासु त्रिष्टुप्स्वौशनं ( ऊ० १९. १. ८-१० ) संधिषाम (ऊ० १६. १. ८-१०) ॥ १ ॥

इति । औशनस्यासंचारार्थं तत्स्थाने वैश्वज्योतिषं कल्पितम् ॥१॥

इति अतिरात्रः ॥४५॥

---

## द्वादश एकविंशा उक्थ्याः

**एकविंशानां द्वादशानामाद्यमाह—**

बभ्रवे नु स्वतवसे ( सा० १४४४ ) इति पुरस्तात् पर्यासस्य षड्चम् । आमहीयवा-( ऊ० १. १. १ )दुत्तरमाशुभार्गवम् (ऊ० १६. १. ११) । रौरवयौधाजये ( ऊ० १. १. २-३ ) अन्तरा मैधातिथम् ( ऊ० १३. १. ७ ) स्वासु सफपौष्कले ( ऊ० १. १. ६-१० ) ॥ १ ॥

समानमितरमेतस्यैव राथन्तरेण पञ्चदशेन ॥ २ ॥

इति । उपास्मै गायता नरो-दविद्युतत्या रुचा ( सा० ६५१-६ ) एते असृग्रमिन्दवो-राजा मेधाभिरीयते ( सा० ८३०-५ ) बभ्रवे नु स्वतवसे ( सा० १४४४ ) पवमानस्य ते कवे ( सा० ६५७-६ ) इति बहिष्पवमानम् । अग्न आ याहि वीतये (सा० ६६०-७१) इत्याज्यानि । उच्चा ते जातमन्धस (सा० ६७२-५) इति गायत्रं चामहीयवं

---

12, V²CKATMyB. Om. द्वादशानाम्

(ऊ० १. १. १) चाशुभार्गवं (ऊ० १६. १. ११) च। पुनानः सोम धारये-( सा० ६७६-६ )ति रौरवं ( ऊ० १. १. २ ) च मैधातिथं ( ऊ० १३. १. ७ ) च यौधाजयं ( ऊ० १. १. ३ ) चौशन-(ऊ० १. १. ४)मन्त्यम् । रथन्तरं ( र० १. १. १ ) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि । स्वादिष्ठये-( सा० ६८६-६१ )ति गायत्र-संहिते (ऊ० १.१.८)। पवस्वेन्द्रमच्छे-(सा० ६६२; ६६४)ति सफपौष्कले (ऊ० १.१.६-१०)। पुरोजिती व (सा० १३१३-५) इति गौरीविता-(ऊ० ४. १. १३)न्धीगवे (ऊ० १. १. १२) । काव-( ऊ० १. १. १३ )मन्त्यम् । यज्ञायज्ञीय-( ऊ० १. १. १४ ) मग्निष्टोमसाम। प्रभँहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य (ऊ० २.२.७)मित्युक्थानि। सर्वमेकविंशम् ॥ २ ॥

द्वितीयमेकविंशमाह—

प्रयद्गावो न भूर्णयः ( सा० ८९२-७ ) इति पुरस्तात् पर्यासस्य षड्चम्। ह्याविष्मता-(ऊ० ७. १. १)दुत्तरं स्वारं सौपर्णम् (ऊ० ११. २. १५) आयास्ये ( ऊ० १. २. २०; २. १. १ ) अन्तरा दैर्घश्रवसम् (ऊ० ११. २. १६) । त्वं ह्यङ्ग दैव्य (सा० ६३८-६) पवस्व देववीतये ( सा० १४२६-८ ) इति सत्रासाहीय-श्रुध्ये (ऊ० १६. १. १२-३) ॥ ३ ॥

समानमितरमेतस्यैव बार्हतेन पञ्चदशेन ॥ ४ ॥

इति। पवस्व वाचो-पवस्वेन्दो-वृषा सोमः-वृषा ह्यसि (सा० ७७५-८६) प्रयद्गावो न भूर्णयः ( सा० ८६२-७ ) पवमानस्य ते कवे (सा० ६५७-६) इति बहिष्पवमानम् । अग्निं दूत-(सा० ७६०-८०२) मित्याज्यानि । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च

हाविष्मतं (ऊ० ७. १. १) च स्वारं च सौपर्णम् (ऊ० ११. २. १५)। पुनानः सोम धारये-(सा० ६७५-६)ति ऐडं चायास्यं (ऊ० ७. १. ४) दैर्घश्रवसं (ऊ० ११. २. १६) च त्रिणिधनं चायास्यम् (ऊ० ७. १. ५)। वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यम्। बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि। यस्ते मदो वरेण्य (सा० ८१५) इति गायत्रमौक्षे (ऊ० ४.१.१०)। त्वं ह्यङ्ग दैव्य (सा० ६३८-६) पवस्व देव वीतये (सा० १४२६-८) इति सत्रासाहीयश्रुध्ये (ऊ० १६. १. १२-१३)। अयं पूषा रयिर्भग (सा० ८१८-२०) इति गौरीवितं (ऊ० २.१.८) च क्रौञ्चं (ऊ० २.१.६) च। वृषा मतीना-(सा०८२१-३)मिति याम-(ऊ० २.१.१०)मन्त्यम्। यज्ञायज्ञीय-(ऊ० १. १. १४)मग्निष्टोमसाम। साकमश्वं (ऊ० १. १. १५) सौभर-(ऊ० १. १. १६)माष्टादंष्ट्र-(ऊ० २. १. १२)मित्युक्थानि। सर्वं सप्तदशम्॥ ४॥

तृतीयादीन्येकविंशान्याह—

एताभ्यामेव विपार्यासमा द्वादशादहः॥ ५॥

इति। तत्र नवमादीनां विशेषमाह—

नवमस्याह्नः स्वादिष्ठया मदिष्ठये-(सा० ६८६-६१)ति गायत्रं चाग्नेश्चार्कौ (र० ४. ३. ६) दशमस्याह्नो यस्ते मदो वरेण्यः (सा० ८१५-७) इति गायत्रं च स्वाशिरामर्कः (र० ३. २. ४) एकादशस्याभि प्रियाणी-(सा० ७००-२)ति दीर्घतमसोऽर्कोऽन्त्यो (र० ५. १. ५) द्वादशस्याह्नोऽन्तरोत्सेधनिषेधौ (र० ६. १. १३) दैर्घश्रवसम् (ऊ० ११. २. १६)॥ ६॥

तस्यैवाह्न उद्वंशीयान्तान्युक्थानि॥ ७॥

इति। नवमेऽहनि संहितस्य (ऊ० १. १. ८) स्थानेऽग्नेरर्कः (र० ४. ३. ६)। दशमेऽहनि मौक्षस्य (ऊ० ४. १. १०) स्वाशिरामर्कः (र० ३. २. ४)। एकादशेऽहनि कावस्य (ऊ० १. १. १३) दीर्घतमसोऽर्कः (र० ५. १. ५)। द्वादशेऽहनि आयास्ययोः (ऊ० १. २. २०; २. १. १) स्थाने उत्सेध- 5 (ऊ० ६. १. ११)निषेधौ (ऊ० ६. १. १३) आष्टादंष्ट्रस्यो (ऊ० १४.१.२)द्वंशीयम् (ऊ० १६.१.१)। समानमितरत् ॥ ७॥

इति द्वादश एकविंशा उक्थ्याः ॥ ४६ ॥

---

## अतिरात्रः

उदयनीयातिरात्रमाह— 10

ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः। कावस्यर्क्षु वासिष्ठम् (ऊ० १६. १. १४) अन्त्यम् यदेष प्रकोश (सा० ५५६) इति। जनस्य गोपा अजनिष्ट जागृविर् (सा० ६०७-६) एता उ तस्या उषसः केतुमक्रत (सा० १७५५-७) अबोध्यग्निर्ज्म उदेति सूर्य (सा० १७५८-६०) इत्येतासु जगतीषु कावं संधिषाम (ऊ० १९. 15 १. १५-१७) ॥ १ ॥

इति। अत्रापि कावस्य संचारो मा भूदिति तत्स्थाने वासिष्ठक्लृप्तिः ॥ ४७ ॥

---

## एकान्नपञ्चाशद्रात्रं द्वितीयम् (यमातिरात्राः)

अतिरात्रौ द्वावभिप्लवौ षडहौ गौश्चायुश्चातिरात्रौ द्वावभिप्लवौ। 20
षडहावभिजिच्च विश्वजिच्चातिरात्रावेकोऽभिप्लवः षडहः सर्वस्तोमश्च नव 21

---

20. LV[2]. अतिरात्रो for अतिरात्रौ

सप्तदशश्चातिरात्रौ द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (तां० ब्रा० २४. १२. १) इति यमातिरात्रा उक्ताः । प्रायणीयोदयनीयावतिरात्रौ षोडशिमन्तावषोडशिकौ वा । प्रथमस्याभिप्लवस्याह्न एष प्रत्नानुरूपः । तत्र गोआयुषी ऐकाहिके । एते एव गो-
5 आयुषी रात्रसत्रेष्वन्यत्र यमातिरात्राभ्यश्च सांवत्सरसंमिताभ्यश्चेत्युक्तत्वात् ॥

तत्र गोष्टोमस्य विशेषमाह—

यमातिरात्रासु गोष्टोमस्य । दर्घश्रवसस्य (ऊ० ५. २. ४) लोके कण्वरथन्तरम् (ऊ० १९. १. १८) बार्हदुक्थस्य (ऊ० ६. ३. ७)
10 दैर्घश्रवसम् ( ऊ० ५. २. ४ )। गौरीवितमनुष्टुभि (ऊ० ४. १. १३) अषोडशिकोऽतिरात्रः ॥ १ ॥

इति । आभिप्लविकस्य षष्ठस्याह्नो गोश्च बार्हतत्वादजाम्यर्थं कण्वरथन्तरक्लृप्तिः ॥ १ ॥

आयुष्टोमस्य विशेषमाह—

15 आयुष्टोमस्य मैधातिथस्य ( ऊ० ५. ३. ६ ) लोके बृहन्निधनं वार्कजम्भं (र० २. ४. ६) रौरवस्य (ऊ० १. १. २) मैधातिथं ( ऊ० १३. १. ७) गौरीवितमनुष्टुभि ( ऊ० ४. १. १३ ) । हारिवर्णस्यर्क्षु (ऊ० २. २. ६) सौभरम् (सा० ८८०-२ ; ऊ० १९. १. १९) अषोडशिकोऽतिरात्रः ॥ २ ॥

20 इति । गोष्टोमसंबन्धिनः संधेरायुषश्च राथन्तरत्वाद् अजाम्यर्थं वार्कजम्भम् (र० २. ४. ६) आयुष्येव च पृष्ठ्यसंध्यो रथन्तरयोरजाम्यर्थं हारिवर्णस्य ( ऊ० २. २. ६ ) स्थाने तस्यर्क्षु (सा० ८८०-२) सौभरं ( ऊ० १९. १. १९ ) विहितम् । श्रूयते हि यदि
24 रथन्तरसाम्ना सौभरं कुर्यादजामिता (तां.ब्रा. ८.८.१२) इति ॥ २ ॥

---

4. MyBKAT. नात्र for तत्र
5. T. यमातिरात्रेभ्यः for यमातिरात्राभ्यः
21. CV[2]. पृष्ठ, MyT. पृष्ठ्यः for पृष्ठ्य

अभिजितोऽतिरात्रस्य विशेषमाह—

अभिजितो यथा पूर्दशरात्र एवं बृहती गौरीवितमनुष्टुभि (ऊ० ४. १. १३) हारिवर्णस्य-( ऊ० २. २. ६ )र्क्षु (सा० ८८०-२) सौभरम् (ऊ० १६. १. १६)। षोडशिमानतिरात्रः ॥ ३ ॥

इति । अत्रापि कण्वरथन्तरसौभरयोरजाम्यर्थं क्लृप्तिः ॥ ३ ॥ 5

विश्वजित्सर्वस्तोमयोः क्लृप्तिमाह—

क्लृप्तो विश्वजित् ॥ ४ ॥

क्लृप्तः सर्वस्तोमः ॥ ५ ॥

इति । एकाहप्रकरणे क्लृप्तावेतौ । तयोः सात्रिकी रात्रिः ॥ ५ ॥

नवसप्तदशस्यातिरात्रस्य विशेषमाह— 10

नवसप्तदशस्याभि सोमास आयवः ( सा० ८५६-८ ) इति जनित्रं (ऊ० १४. १. ६) तिसृषु । रौरवमेकस्याम् (ऊ० ७. १. १३) बृहन्निधनं वार्कजम्भमेकस्याम् ( र० २. ४. ६ ) । मैधातिथमेकस्याम् (ऊ० ९. ३. ६) यौधाजय-(ऊ० ८. २. १६) मध्यास्यायाम् । गौरीवितमनुष्टुभि ( ऊ० ४. १. १३ ) । 15 अषोडशिकोऽतिरात्रः ॥ ६ ॥

इति । अत्राप्यजाम्यर्थं बृहन्निधनं वार्कजम्भं ( र० २. ४. ६ ) तद्वशेनागुन्तुनो मैधातिथस्य (ऊ० ९. ३. ६) कल्पनं सामतृचकरणं च । उक्तमन्यत् ॥ ६ ॥

इति एकान्नपञ्चाशद्रात्रं द्वितीयं (यमातिरात्राः) समाप्तम् ॥ ४८ ॥ 20

---

2. BTKA. पूर्वं for पूर्

4. My. Om. विहितं (p. 508, L. 23)··· सौभरं (L. 4)

## आञ्जनाभ्यञ्जनाः

## तृतीयमेकान्नपञ्चाशद्रात्रम्

अतिरात्रश्चत्वारोऽभिप्लवाः षडहाः सर्वस्तोमोऽतिरात्रो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ( ता० ब्रा० २४. १३. १ ) इत्यञ्जनाभ्यञ्जना उक्ताः । आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु (ला० श्रौ० १०. ४. १०) इत्यादि सूत्रम् ॥

क्लृप्ता आञ्जनाभ्यञ्जनाः ॥ १ ॥

इति । प्रथमस्याभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः । उत्तमाभिप्लवौ प्रतिलोमौ । एतेनोक्ते विधृत्यादीनां तृतीयषष्ठे (द्रा० श्रौ० ? ) इति वचनात् । सर्वेऽभिप्लवाः श्यैत-नौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः । प्रज्ञातमितरत्सर्वम् ॥ १ ॥

इति आञ्जनाभ्यञ्जनाः ॥

तृतीयमेकान्नपञ्चाशद्रात्रम् समाप्तम् ॥ ४६ ॥

---

## संवत्सरसंमिताः

## चतुर्थमेकान्नपञ्चाशद्रात्रमेकषष्टिरात्रं च

अतिरात्रश्चतुर्विंशं प्रायणीयमहस्त्रयोऽभिप्लवाः षडहाः अभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिदेकोऽभिप्लवः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च संवत्सरसंमिताः (तां० ब्रा० २४. १४. १) उक्ताः ॥

संवत्सरक्लृप्ताः संवत्सरसंमिताः एकषष्टिरात्रं च ॥ १ ॥

इति । गवामयनेन क्लृप्ता इत्यर्थः । अतश्चाभिप्लवाः अभीवर्त-ब्रह्मसामानः सुज्ञानौष्णिहाः । उक्तं च—श्यैतनौधसब्रह्मसामपौष्कल-श्रुध्यौष्णिहो अन्यत्र संवत्सरसंमिताभ्य (आ० क० ६. १२. १) इति ।

गोआयुषी च सांवत्सरिके । उक्तं च—एते एव गोआयुषी रात्रिसत्रेष्वन्यत्र यमातिरात्राभ्यश्च संवत्सरसंमिताभ्यश्च (आ० क० ६. ६. १) इति । तृतीयेऽभिप्लवे इषोवृधीयसंमते कुर्यान्न वा कुर्यादिति विचारे कुर्यादेवेति सिद्धान्तो निदाने स्थापितः । यस्तु विश्वजितः परोऽभिप्लव आवृत्तस्तस्य प्रथमेऽहनि यण्वापत्यसंतनि- 5
शाक्वरवर्णानाम्, कतमत् कुर्यादिति विचारे यण्वं (र० १. २. १) तु स्यादिति निर्णयः सूत्रोक्तः ॥ १ ॥

इति संवत्सरसंमिताः समाप्ताः ॥

चतुर्थमेकान्नपञ्चाशद्रात्रमेकषष्टिरात्रं च समाप्तम् ॥ ५० ॥

---

## पञ्चममेकान्नपञ्चाशद्रात्रम्  10

## सवितुः ककुभो वा

अतिरात्रो नव त्रिवृन्त्यहान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहानि अग्निष्टोमावभितः उक्थ्यं मध्यतो नवपञ्चदशान्यहान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतो नव सप्तदशान्यहानि अग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं 15
मध्यतो नवैकविंशान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (तां० ब्रा० २४.१५.१) इति सवितुः ककुभ उक्ताः । तत्र प्रायणीयादतिरात्रात् पराणि नव त्रिवृन्त्यहानि । तेषामाद्यमग्निष्टोमसंस्थम् । पञ्चोक्थानि । अवशिष्टे त्र्यहे प्रथमोत्तमे अहनी अग्निष्टोमसंस्थे । मध्यम- 20

---

3. $CV^2MyBKTA$. Om. कुर्यान्न वा

4. BMyKA. समाप्तिः, T. समापितः for स्थापितः; KAMyB. यवः for यः

6. L $CV^2$. यश्च for यण्व

19. $V^2C$. before पञ्च add अत्र, MyBTA. अथ

सुकृथ्यम् । एवं पञ्चदशान्यपि नवाह्नानि द्रष्टव्यानि । स्तोत्रक्लृप्तिमाह—

विधृतिभिः क्लृप्ताः सवितुः ककुभः ॥ १ ॥

इति । तत्र विशेषमाह—

5 राथन्तरेणाह्ना त्रिवृतः प्रतिपद्यते । बार्हतेन पञ्चदशान् । राथन्तरेण सप्तदशान् । बार्हतेनैकविंशान् ॥ २ ॥

इति । प्रतिपद्यते आरभत इत्यर्थः । एतदुक्तं भवति । विधृतिषु त्रिवृदादीनां सर्वेषां राथन्तरैरहोभिरारम्भः । इह तु न तथा । किन्तु वैधृतं यद्राथन्तरं त्रिवृदहस्तदत्र त्रिवृतं प्रथमं बार्हतं द्वितीय-
10 मित्येवं व्यत्यासेन नवमान्तं कुर्यात् । नवममहो राथन्तरं भवति । ततश्चाजाम्यर्थं वैधृतं यद् यद् बार्हतं पञ्चदशं तदत्र पञ्चदशानां प्रथमं राथन्तरं द्वितीयमित्येवं व्यत्यासेन नव-पञ्चदशानि कुर्यात् । बार्हतं नवमं भवति । अथ वैधृतेन राथन्तरेण सप्तदशेन सप्तदशानारभ्य व्यत्यासमा नवमात् कुर्यात् ।
15 बार्हतेनैकविंशेनैकविंशानिति ॥ २ ॥

यत्राग्निष्टोमो बार्हतमहर्यौक्ताश्वं ( ऊ० १. २. १६ ) मध्यंदिने हाविष्मत-(ऊ० ७. १. १)मार्भवः ॥ ३ ॥

इति । उक्तेन प्रकारेण राथन्तरबार्हतयोरह्नोर्व्यत्यासेन क्रियमाणयोर्यत्राग्निष्टोमसंस्थं बार्हतमहर्भवति । यथा पञ्चदशैकविंशेषु
20 च प्रथमसप्तमनवमानि । तत्र तेषां मध्यंदिने पवमाने हाविष्मतस्य
21 (ऊ० ७. १. १) स्थाने यौक्ताश्वं (ऊ० १. २. १६) कार्यम् ।

---

1. MyBKAT. पञ्चदशादीनि for पञ्चदशानि
7. The MS. C ends with विधृति°
8. V²L. Om. न
9. LV². निवृतं , TB त्रिवृताः for त्रिवृतं
11. BMyKAT. OM. one यद्
12. BKMy. Om. द्वितीयम् ; KBMy. व्यत्यासं for व्यत्यासेन
14. BK. सप्तदशानां for सप्तदशानारभ्य ; L. नवमान्तं for नवमात्

आर्भवे मौक्षस्य (ऊ० ४. १. १०) स्थाने हाविष्मतम् (ऊ० ५. १. ५)। तथा च कुसुरुबिन्ददशरात्रे निदानम्— बार्हतेष्वहःसु यौक्ताश्वहाविष्मते अग्निष्टोमेषु हाविष्मतमौक्ष उक्थेषु । मौक्ष उक्थसामेति (नि० सू० ६. ४) ॥ ३ ॥

उद्धरत्यर्कं यो विधृतिषु ॥ ४ ॥        5

इति । विधृतिषु एकविंशानां नवमाद्यहःसु त्रयोऽर्काः विहिताः । तत्र दशमैकादशयोरत्राभावात् द्वावर्कौ लुप्तौ । योऽपि नवमेऽग्नेरर्को विहितः स्वादिष्ठयेति गायत्रमग्नेश्चार्कः (आ० क० ९. ९. ३) इति तमुद्धृत्य संहितं (ऊ० १. १. ८) तस्य स्थाने कुर्यात् । दशरात्रेऽर्काणां कात्स्न्र्येन करिष्यमाणत्वा-        10 दित्यर्थः । तथा च निदानम्—उद्धरत्यर्कं यो विधृतिषु दशरात्रे ह्यर्कान् करिष्यन् भवती-(नि० सू० १०. ४)ति ॥ ४ ॥

समानमितरम् ॥ ५ ॥

इति । विधृतिभिरिति शेषः ॥ ५ ॥

इति पञ्चममेकान्नपञ्चाशद्रात्रम् (सवितुः ककुभो वा) समाप्तम् ॥५१॥        15

---

## षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे

अतिरात्रश्चत्वारोऽभिप्लवाः षडहा महाव्रतं द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः (तां० ब्रा० २४. १६. १) इति षष्ठमेकान्नपञ्चाशद्रात्रमुक्तम् ।

क्लृप्तमा मध्येपृष्ठ्याद् आ मध्येपृष्ठ्याद् ॥ १ ॥        20

---

11. LV² यथा for तथा

इति । आवृत्तावुत्तमाभिप्लवौ । प्रज्ञातमितरत् ॥

अतिरात्रः षडभिप्लवाः षडहा द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (तां०ब्रा० २४.१७.१) इति सप्तममेकान्नपञ्चाशद्रात्रस्य सर्वमुक्तम् ॥ १ ॥

5 इति षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे समाप्ते ॥ ५२ ॥

---

## एकषष्टिरात्रम्

अतिरात्रश्चतुर्विंशं प्रायणीयमहस्त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहोऽभिजित् त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजित् पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भण एकोऽभिप्लवः षडह आयुश्च
10 गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च (तां० ब्रा० २४. १८. १) इति एकषष्टिरात्रम् । तस्य गवामयनवदहानि कर्तव्यानि । संवत्सरक्लृप्ताः संवत्सरसंमिता एकषष्टिरात्रं च (आ० क० ६.१०.३) इत्युक्तत्वात् । आवृत्तेऽभिप्लवे च स्वयमेवैतेनोक्तम् । एकषष्टिरात्रम् इति वचनात् ॥

15 इति एकषष्टिरात्रम् ॥

---

## शतरात्रम्

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चतुर्दशाभिप्लवाः षडहा द्वादशाहस्य
18 दशाहानि महाव्रतं चातिरात्रश्च ( तां० ब्रा० २४. १९. १ )

---

13. MyBKAT. Om. च ; MyBKAT. कण्वम् for स्वयम्
14. V[1]LKBMy. °रात्र इति for °रात्रम् इति

इति शतरात्रमुक्तम् । प्रथमस्याभिप्लवस्य प्रथमस्याह्नः एष प्रत्नानुरूपः। अभिप्लवाः श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहाः। सांवत्सरिकं व्रतम् । सिद्धमितरत् ॥

इति शतरात्रम् ॥

---

## संवत्सररात्रम् 5

अथ संवत्सरसत्राणि षट् । अतिरात्रश्चतुर्विंशं प्रायणीयमहर् (तां० ब्रा० २४. २०. १) इत्यारभ्य संवत्सरब्राह्मणं ब्राह्मणम् (तां० ब्रा० २४. २०. २) इत्यन्तेन गवामयनमुक्तम्। तस्य क्लृप्तिः पूर्वमेवोक्ता ॥

इति संवत्सररात्रं समाप्तम् ॥ 10

---

इति श्रीवामनार्यसुतवरदराजविरचितायामार्षेयकल्प-
व्याख्यायां सत्रेषु प्रथमोऽध्याय आदितो
नवमः समाप्तः ॥ ९ ॥ 13

---

13. L. after the colophon : ॥ हरिः ॐ ॥ यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न विद्यते॥ संवत् १८११ वर्षे आषाढकृष्ण ३ गुरुवासरे लिखितमिदं वरदराजेयं ग्रन्थं द्रोणभाईरामेन॥ लेखकपाठकयोः शुभमस्तु। ग्रन्थसंख्या ४८०० ॥ श्रीरस्तु ॥ ; V². ॥ ॐ हरिः ॥ ॥ यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोशो न दीयते॥ संवत् १८०३ वर्षे फाल्गुनकृष्णचतुर्थ्यां चन्द्रवासरे व्यासजयशंकरेण इदं पुस्तकं लिखितम्॥ ॥ श्रीरस्तु ॥ ॥ शुभमस्तु ॥ ॥ कल्याणमस्तु॥ ॥ श्रीरामचन्द्र॥ after this in a different hand : ग्रन्थसंख्या ४८०० भाव आठसो लेखे लखावी.

# दशमोऽध्यायः

# मध्येपृष्ठयमयनम्

## आदित्यानामयनापराख्यम्

अतिरात्रश्चतुर्विंशम् । प्रायणीयमहर्द्वौ त्रिवृत्पञ्चदशौ षडहौ पृष्ठ्यः-षडहौ द्वौ त्रिवृत्पञ्चदशौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयस्त्रिवृत्पञ्चदशाः षडहाः पृष्ठ्यःषडहस्त्रिवृद् बृहस्पतिस्तोमस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यःषडहस्त्रयस्त्रिंशारम्भणः एकः पञ्चदशस्त्रिवृत् षडहो द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च बलभिच्च द्वे अहनी द्वौ पञ्चदशत्रिवृतौ षडहौ पृष्ठ्यःषडहो द्वौ पञ्चदशत्रिवृतौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः पञ्चदशत्रिवृत् षडहः पृष्ठ्यःषडहः पञ्चदशत्रिवृत् षडहो गौश्चायुश्च द्वे अहनी छन्दोमदशाहोऽष्टाचत्वारिंशं प्रथममहरथ चतुश्चत्वारिंशं चत्वारिंशं षट्त्रिंशं द्वात्रिंशं त्रिंशं द्वे अष्टाविंशे पञ्चविंशं चतुर्विंशं महाव्रतं चातिरात्रश्च । आदित्यानां मध्येपृष्ठ्यम् ( तां० ब्रा० २५. १ ) इत्यनुवाकेन आदित्यानामयनमुक्तम् । तदेव मध्येपृष्ठ्यमित्युच्यते । प्रतिमासं मध्येपृष्ठ्यः षडहोऽत्रेति कृत्वा ॥

मध्येपृष्ठयस्य क्लृप्तोऽतिरात्रः । क्लृप्तं चतुर्विंशमहः ॥ १ ॥ इति । अतिरात्रः प्रकृतः । चतुर्विंशं गवामयनिकम् । इदमहर्द्वयं षष्ठमासपूरकत्वेन गण्यते ॥ १ ॥

आभिप्लविकस्य प्रथमस्याह्नः । प्र सोमासो विपश्चितः (सा० ७६४-६) इति गायत्रमाश्वम् (ऊ० ६. २. १२) आशुभार्गवम् (ऊ० ११. २. ११) । प्र सोम देववीतये (सा० ७६७-८)

पञ्चं (ऊ० ६. २. १३) गौङ्गवं (ऊ० ६. २. १६) यौधाजयम् (ऊ० १. २. १३)। त एकर्चाः। समानमितरं त्रिवृत् ॥ २ ॥

इति। गायत्रीबृहत्यौ सामतृचे क्लृप्ते। औशनमन्त्यमिति माध्यंदिनः आर्भवोऽन्त्यवर्जमेकर्चाः। समानमितरं प्रथमेनाह्नाभिप्लविकेन। सर्वं त्रिवृत् ॥ २ ॥ 5

द्वितीयस्याह्नः पुनानः सोम धारये-(सा० ६७५-६)ति माधुच्छन्दसमेकस्याम् (ऊ० १६. १. २०) भर्ग एकस्याम् (र० ४. १. २०) ऐडमायास्यमेकस्याम् (ऊ० १. २. २०)। त्रिणिधनमायास्यं तिसृषु (ऊ० २. १. १)। समानमितरं पञ्चदशम् ॥ ३ ॥

इति। वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च हाविष्मतं (ऊ० ७. १. १) च। पुनानः सोम धारये-(६७५-६)ति माधुच्छन्दसं (ऊ० १६. १. २०) भर्ग (र० ४. १. २०) ऐडमायास्य-(ऊ० १. २. २०)मिति सामतृचम्। त्रिणिधनमायास्यं (ऊ० २. १. १) तिसृषु। वृषा शोण (सा० ८०६-८) इति पार्थ-(ऊ० ७. १. ६)मन्त्यमिति माध्यंदिनः। उत्तरेष्वभिप्लवेषु हाविष्मतस्य (ऊ० ७. १. १) स्थाने यौक्ताश्वमुत्तरम् (ऊ० ७. १. २)। भर्गस्थाने यशः (र० ५. १. १०)। उत्तरस्मिन् पक्षसि आर्भवे शङ्कु-सुज्ञाने (ऊ० ५. १. ६-७)। गौरीविता-(ऊ० २. १. ८)न्येकर्चेषु। इतरद्गवामयनस्याभिप्लवस्य द्वितीयेनाह्ना समम्। पञ्चदशं सर्वम् ॥ ३ ॥ 10 15 20

तृतीयस्याह्नः स न इन्द्राय यज्यव (सा० ६७३) इति गायत्रं च वैरूपं (ऊ० ७. १. १२) च ॥ ४ ॥
समानमितरं त्रिवृत् ॥ ५ ॥ 23

---

13. K. °तृचः for °तृचम्

17. My. °समान न, B. °समान for °स्थाने

इति । उत्तरयोः पवमानयोः अन्त्यवर्जमेकर्चाः । समानमितरं तृतीयेनाह्नाभिप्लविकेन । सर्वं त्रिवृत् ॥ ५ ॥

चतुर्थस्याह्नस्तवाहं सोम रारणे-(सा० ६२२-३)ति पृश्न्येकस्याम् (ऊ० १९. २. १) आथर्वणमेकस्याम् (र० ४. २. १) आभीशव-मेकस्याम् ( ऊ० २. २. १० ) यौधाजयं तिसृषु (ऊ० १३. 5 २. २)। समानमितरम्। पञ्चदशम् ॥ ६ ॥

इति। पवस्व दक्षसाधन (सा० ६१९-२१) इति गायत्रं चादारसृत् (ऊ० ५. १. १४)। तवाहं सोम रारणे-( सा० ६२२-३ )ति पृश्न्या-(ऊ० १९. २. १)थर्वण-(र० ४. २. १)माभीशव-(ऊ० २. २. १०) 10 मिति सामतृचो यौधाजयं (ऊ० १३. २. २) तिसृषु । उद्दु वा अस्ये-(सा० १३९९-१४०१)ति वासिष्ठ-(ऊ० ७. २. ६)मन्त्यम् इति माध्यंदिनः । आर्भवे ककुबुष्णिहौ गौरीवितं ( ऊ० १. २. १७ ) चैकर्चाः। समानमितरं चतुर्थेनाभिप्लविकेन । सर्वं पञ्चदशम् ॥ ६ ॥

पञ्चमस्याह्नोऽप्सा इन्द्राय वायव (सा० ९९५) इति गायत्रं च 15 मार्गीयवं (ऊ० १९. २. २) च। वाम्रेण बृहतीमारभते (ऊ० ७. २. १६)। समानमितरम्। त्रिवृत् ॥ ७ ॥

इति। अप्सा इन्द्राये-( सा० ९९५ )ति गायत्रं च मार्गीयवं (ऊ० १९. २. २) च । अभि सोमास आयव (सा० ८५६-८) इति वाम्रं ( ऊ० ७. २. १६ ) च मानवं ( ऊ० १८. २. ११ ) 20 चानूपं ( ऊ० ७. २. १५ ) च । अग्नेश्च त्रिणिधनम्। अभि त्रिपृष्ठम् ( ऊ० १४०८-१० ) इति सम्पान्त्ये-(ऊ० ७. २. १७)ति माध्यंदिनः। अन्त्यवर्जमेकर्चाः । यण्वादीनां संतनित्वेन तृच एव कर्तव्यत्वादेकर्चकरणायोगादिहोद्धारः। तथा च सन्तनिप्रकरणे सूत्रम्—एकर्चेषु चोद्धृतं कल्पे ( ला० श्रौ० सू० ६. १. १० ) 25 इति। वाम्रेण बृहत्यारम्भणमजाम्यर्थमिडारम्भणार्थं च। आर्भवे-26 ऽन्त्यं तृचे अभिप्लवस्य पञ्चमेनाह्ना। समानमितरत् ॥ ७ ॥

---

22. My. यौक्ताश्वा° for यण्वा°

षष्ठस्याह्नः एष वाजी हतो नृभिर् (सा० १२८०-५) इति पुरस्तात् पर्यायस्य षड्ऋचम्। समानमितरम्। पञ्चदशम् ॥ ८ ॥

इति। असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) एष वाजी हतो नृभिः (सा० १२८०-५) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। आभवे ककुब्उष्णिहौ गौरीवितं (ऊ० १. २. १७) चैकर्चाः। द्वितीयेऽभिप्लवे इषोवृधीयसमन्ते पृष्ठ्यानन्तर्यात्। समानमितरत् षष्ठेनाभिप्लविकेन। सर्वं पञ्चदशम् ॥ ८।

द्वावभिप्लवौ पृष्ठ्यःषडहः पुनश्च द्वावभिप्लवाविति प्रथमो मासः। तथान्ये चत्वारो मासाः। षष्ठे मासे त्रयोऽभिप्लवाः। पृष्ठ्यश्च पूर्ववत्। तदाह—

क्लृप्तं बृहस्पतिस्तोमात् ॥ ९ ॥

इति ॥ ९ ॥

बृहस्पतिसवस्य विशेषमाह—

तस्याभीवर्तो (सा० ६८५-६१ ; ६. २. १४) ब्रह्मसाम। सुज्ञानमुष्णिहि (सा० ६९४-६ ; ऊ० ६. २. ८) गौरीवित- (सा० ६९७-९ ; ऊ० ४. १. १३)मनुष्टुभि। समानमितरम् ॥ १० ॥

इति ॥ १० ॥

अथावृत्तस्वरसामपर्यन्तं गवामयनवत्। तदाह—

क्लृप्तमिन्द्रस्तोमात् ॥ ११ ॥

इति ॥ ११ ॥

इन्द्रस्तोमस्य विशेषमाह—

तस्येन्द्रक्रतौ (सा० १४५६-७) श्यैतं (ऊ० ९. १. १९) गौरीवित-( सा० १३२९-३१ ; ऊ० ५. २. १८ )मनुष्टुभि। समानमितरम् ॥ १२ ॥

इति ॥ १२ ॥

अथ गवामयनिकः पृष्ठ्यानन्तरोक्तयाभिप्लव आवृत्तः । तदाह—

क्लृप्तमा व्यूढेभ्यो अग्निष्टोमेभ्यः ॥ १३ ॥

इति । द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृत (तां० ब्रा० २५.१.१)इति श्रुत्युक्ता व्यूढा अग्निष्टोमा दश ॥ १३ ॥

5 तान् क्रमादाह—

तेषां क्लृप्तं प्रथममहर्यथा द्वादशाहम् ॥ १४ ॥

प्रथममहर्द्वादशाहवदविकृतम् ॥ १४ ॥

इति प्रथममहः ॥ १ ॥

---

## द्वितीयमहः

10 द्वितीयस्याह्नः स्तोत्रीयानुरूपौ पर्यासो वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं यौक्ताश्वं ( ऊ० १. २. १६ ) स्वारं सौपर्णम् ( ऊ० ११. २. १५ ) । पुनानः सोम धारये-(सा० ६७५-६)त्यायास्ये ( ऊ० १.२. २०; २. १. १ ) अन्तरा दैर्घश्रवसम् (ऊ० ६. २. ४) । त एकर्चाः । समानमितरम् ।

15 त्रिवृत् ॥ १ ॥

इति । पवस्व वाचो-पवस्वेन्दो (सा० ७७५-८०) पवमानस्य ते वयम् ( सा० ७८७-६ ) इति बहिष्पवमानम् । मध्यंदिने गायत्रीबृहत्यौ सामतृचक्लृप्त आर्भवेऽन्त्यवर्जमेकर्चाः । समानमितरद् द्वितीयेनाह्ना द्वादशाहस्य । सर्वं त्रिवृत् । सर्वेषु अहःसूक्तानामुद्धारः ॥ १ ॥

20 इति द्वितीयमहः ॥ २ ॥

---

## तृतीयमहः

तृतीयस्याह्नः स्तोत्रीयानुरूपौ पर्यासः स न इन्द्राय यज्यव (सा० ६७३) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३)

24 च । समानमितरम् । त्रिवृत् ॥ १ ॥

---

1. MyBK तथाह for तदाह
18. BAT. द्वादशाहे for द्वितीयेनाह्ना

इति। दविद्युतत्या रुचा (सा० ६५४-६) एते असृग्रमिन्दवः (सा० ८३०-२) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम्। स न इन्द्राय यज्यव (सा० ६७३) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च एकर्चयोः। अभि सोमास आयवः (सा० ८५६-८) इति पौरुमद्गं (ऊ० २. १. ४) च गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) च सामतृचः। आष्कारणिधन-(ऊ० २. १. १६)मध्यास्यायाम्। तिस्रो वाच (सा० ८५९-६१) इति अङ्गिरसां संक्रोशो-(ऊ० २. १. १७)ऽन्त्यः इति माध्यंदिनः। आद्यमेव तिसृषु। इतराणि आद्यासु। समानमितरं तृतीयेनाह्ना द्वादशाहस्य। सर्वं त्रिवृत् ॥ १६ ॥ 10

इति तृतीयमहः ॥

---

## चतुर्थमहः

चतुर्थस्याह्नः स्तोत्रीयानुरूपौ पर्यासो नानदस्य (ऊ० २. २. १८) लोके गौरीवितम् (ऊ० ४. १. १३)। समानमितरम्। त्रिवृत् ॥ १७ ॥ 15

इति। प्र त आश्विनीः (सा० ८८६-८) पवमानो अजीजनत् (सा० ८८९-९१) हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) इति बहिष्पवमानम्। माध्यंदिने गायत्री बृहत्यौ सामतृचौ। अन्त्यं तृचे। आर्भवे अन्त्यवर्जमाद्यासु। उक्थानां षोडशिनश्चोद्धारः। समानमितरं चतुर्थेनाह्ना द्वादशाहस्य। सर्वं त्रिवृत् ॥ १७ ॥ 20

इति चतुर्थमहः ॥

---

## पञ्चममहः

पञ्चमस्याह्नः स्तोत्रीयानुरूपौ पर्यासोऽर्षा सोम द्युमत्तमः (सा० ९९४-६) इति गायत्रमेकस्याम्। यणं (र० १. २. १) 24

---

10. KABMy. द्वितीयेन for तृतीयेन
13. KMyBA. पञ्चमस्य for चतुर्थस्य

तिसृषु । सोम उष्वाणः सोतृभिः ( सा० ६६७-८ ) इत्यानूपमेकस्याम् (ऊ० ३. १. ६) । अग्नेस्त्रिणिधनं विष्टारपङ्क्तौ ( सा० ६६८; ऊ० १६. २. ३ ) । बार्हद्गिरस्यर्क्षु संतनि (सा० १००२-४; ऊ० १६. २. ४) । असाव्यंशुर्मदाये-(सा० १००८-१०)ति गायत्रं च गौषूक्तं (ऊ० ७. २. १६) च । पवस्व वाजसातये ( सा० १०१६-८ ) इति गौरीवितं (ऊ० ३. १. १३) च । ऋषभश्च शाक्वरः (र० १. २. ५) ॥ १ ॥

समानमितरम् । त्रिवृत् ॥ १८ ॥

इति । गोवित्पवस्व ( सा० ९५५-७ ) पवमानस्य विश्वजित् (सा० ६६८-१०००) यास्त ( सा० ६७६-८१ ) इति बहिष्पवमानम् । असाव्यंशुर्मदाये-( सा० १००८-१० )ति गायत्रं च गौषूक्तं (ऊ० ७. २. १६) च । अभिद्युम्नं बृहद्यशः ( सा० १०११-२ ) प्राणा शिशुर्महीनाम् (सा० १०१३- ) इति च्यावन-(ऊ० ३. १. ११) क्रोशे (ऊ० ३. १. १२) । पवस्व वाजसातये (सा० १०१६- ) इति गौरीवितं ( ऊ० ३. १. १३ ) च ऋषभश्च शाक्वरः (र० १. २. ५) । इन्दुर्वाजी-(सा० १०१६-२१)ति दाशस्पत्य-(ऊ० ३. १. १५)मित्यार्भवः । अन्त्यवर्जमाद्यासु । समानमितरं पञ्चमेनाह्ना द्वादशाहस्य । सर्वं त्रिवृत् ॥ १८ ॥

षष्ठस्याह्नः स्तोत्रीयानुरूपौ पर्यास इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रमेकस्याम् । रेवत्यस्तिसृषु (र० १.२.७) मृज्यमानः सुहस्त्ये-( सा० १०७६-८० )त्यैडमौक्ष्णोरन्ध्रमेकस्याम् (ऊ० ३. २. २) । गोष्ठो विष्टारपङ्क्तौ (सा० १०८०; ऊ० १६. २. ५) परिस्वानो गिरिष्ठा ( सा० १०६३-५ ) इति गायत्रं च वैदन्वतं च यन्निधनवत् ( ऊ० ३. २. १० ) । सोमाः पवन्त इन्दवः ( सा० ११०१-३ ) इति गौरीवितं च

6. MyBAKT. Om. पवस्व ··· त्रिवृत् (L. 8)
13. My. च्यावनम् for च्यावनक्रोशे
21. KTAMyB. स्वारम् for ऐडम्

(ऊ० ३. २. १३) क्रौञ्चं च यत् स्वयोनि (ऊ० ३.२.१५) ॥
समानमितरम् । त्रिवृत् ॥ १९ ॥

इति । ज्योतिर्यज्ञस्य (सा० १०३१-३) असृक्षत (सा० १०३४-६) एते सोमा ( सा० १०६१-३ ) इति बहिष्पवमानम् । इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रमेकस्याम् । रेवत्य-( र०१.२.७ ) स्तिसृषु । मृज्यमानः सुहस्त्ये-( सा० १०७९-८० )ति ऐडमौक्ष्णोरन्ध्र-(ऊ० ३.२.२)मेकस्याम् । इति माध्यंदिनः । गोष्ठो विष्टारपङ्क्तौ । परिस्वानो गिरिष्ठाः (सा० १०९३-५) इति गायत्रं च । वैदन्वतं च यन्निधनवत् (ऊ० ३.२.१०) । सखुन्वेयो वसूनाम्-तं नः सखायो मदाये-(सा० १०९६-१००१)ति दीर्घकर्णश्रवसे (ऊ० ३.२.१२-३) सोमाः पवन्त इन्दवः (सा० ११०१-३) इति स्वयोनि च क्रौञ्चम् (ऊ० ३. २. १५) । अया पवा पवस्वे-( सा० ११०४-६ )ति श्नौष्ट-(ऊ० ३. २. १८)मन्त्यमित्यार्भवः । अन्त्यवर्जमेकर्चाः । समानमितरं षष्ठेनाह्ना द्वादशाहस्य । सर्वं त्रिवृत् ॥ १९ ॥

इति षष्ठमहः ॥

---

## सप्तमहः

सप्तमस्याह्नः स्तोत्रीयो नवर्चस्य तृचोऽनुरूपः पर्यासः । वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रमेकस्याम् । मार्गीयवमेकस्याम् ( ऊ० १९. २. ६ ) ऐडं सौपर्णमेकस्याम् ( ऊ० ४. १. २ ) काण्वस्यर्क्षु संतनि (सा० ८६४-६; ऊ० १९. २. ७) । यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं चाग्नेश्चार्कः (र० १. २. १) । उद्धरति द्विपदाः । समानमितरम् त्रिवृत् ॥२०॥

इति । प्र काव्यं (सा० १११६-८) प्रसून्वानाय (सा० १३८६-८) आ ते दक्षम् (सा० ११३७-९) इति त्रयस्तृचा बहिष्पवमानम् । वृषा पवस्व

धारये-(सा० ८०३-५)ति गायत्रं मार्गीयवम् (ऊ० १९.२.६) ऐडं सौपर्ण-(ऊ० ४. १. २)मिति सामतृचः। पुनानः सोम धारये-(सा० ६७५-७)ति कण्वरथन्तरं (ऊ० ४. १. ४) गौङ्गव-(ऊ० ४.१.५) मायास्य-(ऊ० ४.१.६)मिति सामतृचः। प्रो अयासी-(सा० ११५२-४) दिति प्रवद्भार्गव-(ऊ० ४. १. ७)मन्त्यम्। इति माध्यंदिनः। वयं घ त्वे-(सा० ८६४.६)ति सन्तनि (ऊ० १९. २. ७) ब्रह्मसाम। यस्ते मदो वरेण्य (सा० ८१५.७) इति गायत्रं चाग्नेश्चार्कः (र० १. ३. १)। एष स्य धारया सुतः (सा० ५८४-५) सखाय आ निषीदते-(सा० ११५७-९)ति शार्करप्लवौ (ऊ० ४.१.११-२) पुरोजिती-(सा० ६९७-९)ति गौरीवितं (ऊ० ४. १. १३) च कार्तयशं (ऊ० ४. १. १४) च। ये सोमास (सा० ११६३-५) इति जराबोधीयम् (ऊ० ४. १. १६) इत्यार्भवः। अन्त्यमेव तृचम्। समानमितरं सप्तमेनाह्ना द्वादशाहस्येति सर्वं त्रिवृत् ॥ २० ॥

इति सप्तममहः ॥

## अष्टममहः

अष्टमस्याह्नः स्तोत्रीयो नवर्चस्य तृचोऽनुरूपः पर्यासः। तव त्य इन्दो अन्धस (सा० १२२६) इति गायत्रं च विलम्ब-सौपर्णं (ऊ० ४. २. ६) चाभिसोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) च गायत्रपार्श्वं (ऊ० ४. २. ८) च पौरुहन्मनं (ऊ० ४. २. ९) चाच्छिद्रं (ऊ० १९. २. ८) च। पवस्व देव आयुषग् (सा० १२३५-७) इति गायत्रं च स्वाशिरामर्कौ (र० १. २. २) अभी नो वाजसातमम् (सा० १२३८-४०) इति गौरीवितं (ऊ० ५.१.३) च त्रिणिधनं च त्वाष्ट्रीसाम। (ऊ० १८. २. ९) उद्धरति द्विपदाः। द्विन्वन्ति सूरमुस्रय (सा० ९०५-६) इतीडानां संक्षारो-(ऊ० १९. २. १०)ऽन्त्यः। समानमितरम्। त्रिवृत् ॥ २१ ॥

इति। शिशुं जज्ञानम् (सा० ११७५-७) एते सोमा अभिप्रियम (सा० ११७८-८६) अया पवस्व धारये-(सा० १२१६-८)ति त्रयस्तृचा बहिष्पवमानम्। तत्र त्य इन्दो अन्धस (सा० १२२६) इति गायत्रं विलम्बसौपर्णं (ऊ० ५. २. ६) चैकर्चयोः। अभि सोमास आयव (सा० ८५६-८) इति द्विहिंकारं (ऊ० ४. २. ७) गायत्र-पार्श्वं (ऊ० ४. २. ८) पौरुहन्मन-(ऊ० ४. २. ६)मिति साम्नतृचोऽच्छिद्र-(ऊ० १६. २. ८)मध्यास्यायाम्। धर्ता दिव (सा० १२२८) इति उद्वद्भार्गवं (ऊ० ४.२.१४) तिसृषु। इति माध्यंदिनः। पवस्व देव आयुष-(सा० १२३५- )गिति गायत्रं च स्वाशिरमिर्कः (र० १. ३. २)। अभि द्युम्नं बृहद्यशः (सा० १०११-२) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इत्यैषिरत्रैते (ऊ० ५. १. १-२) अभी नो वाजसातम-(सा० १२३८-४०)मिति गौरीवितं (ऊ० ५.१.३) च त्रिणिधनं च त्वाष्ट्रीसाम (ऊ० १८. २. ६) च। हिन्वन्ति सूरमुस्रय (सा० ६०५-६) इति इडानां संक्षारो-(ऊ० १६.२.१०) ऽन्त्य इत्यार्भवः। समानमितरमष्टमेन। सर्वं त्रिवृत् ॥ २१ ॥

इति अष्टममहः ॥

---

## नवममहः

नवमस्याह्नः स्तोत्रीयो दशर्चस्य तृचोऽनुरूपः पर्यासः। पवमानो रयीतम (सा० १३११) इति गायत्रं चादारसृञ्च (ऊ० ५. १. १४)। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति पृष्ठं (ऊ० ५. २. १) च कौल्मलबर्हिषं (ऊ० ५. २. २) च देवस्थानं (र० १. २. ३) च दीर्घतमसश्चार्कः (र० ४. २. २) सामराजम् (सा० १३१६-८; ऊ ५. २. ८) अन्त्यम्। त्वं सोमासि धारयुः (सा० १३२३-५) इति गायत्रं चाश्वसूक्तम्

( ऊ० ५. २. ११ ) च । परि त्यं हर्यतं हरिम् (सा० १३२९-३१) इति गौरीवितं (ऊ० ५. २. १८ ) च संकृति (र० ४.२.३) च । उद्धरति द्विपदाः । उपोषु जातमप्तुरम् (सा० १३३५-७) इति प्रतीचीनेडं काशीतम् (ऊ० १६. २. ११) 5 अन्त्यम् । समानमितरम् । त्रिवृत् ॥ २२ ॥

इति । अक्रान्त्समुद्रः (सा० १२५३-५) एष देवो अमर्त्यः (सा० १२५६-६५) पवमानस्य ते कवे (सा० ६५७-९) इति तृचत्रयं बहिष्पवमानम् । पवमानो रथीतम (सा० १३११) इति गायत्रमदार-सृच्चैकर्चयोः । परीतो षिञ्चता सुत-( सा० १३१३-५ )मिति पृष्ठं 10 (ऊ० ५. २. १) कौल्मलबर्हिषं ( ऊ० ५. २. २ ) देवस्थान-(र० १. ३. ३)मिति सामतृचोऽध्यास्यायाम् । दीर्घतमसोऽर्कः (र० १. ३. ८) सामराज-( ऊ० ५. २. ८ )मिति माध्यंदिनः । त्वं सोमासि धारयु-(सा० १३२३-५)रिति गायत्रं चाश्वसूक्तम् (ऊ० (ऊ० ५. २. ११) । त्वं ह्यङ्ग दैव्य (सा० ६३८-६) पवस्व देव 15 वीतय (सा० १३२६-८) इति सौपर्णं ( ऊ० ५. २. १६ ) च वैश्वमनसं (ऊ० ५. १. १७) च । परि त्यं हर्यतं हरि-(सा० १३२९-३१)मिति गौरीवितं ( ऊ० ५. २. १८ ) च संकृति (ऊ० ५. १. ६) च । उपोषु जातमप्तुर-(सा० १३३५-७)मिति प्रतीचीनेडं काशीत-(ऊ० १६. २. ११)मन्त्यमित्यार्भवः । अन्त्यवर्ज-20 मेकर्चाः । समानमितरं नवमेनाह्ना द्वादशाहस्य । सर्वं त्रिवृत् ॥ २२ ॥

इति नवममहः ॥

---

## दशममहः

दशमस्याह्नः पञ्चानामह्नामनुरूपास्त्रय एकर्चौ द्वौ तृचाविति 24 बहिष्पवमानम् । उच्चा ते जातमन्धस ( सा० ६७२-४ ) इति

9. MyBKAT, Om. पृष्ठं ··· हरिम् इति (L. 16)

गायत्रमा महीयवम् (ऊ० १. १. १) आभीकं (ऊ० २. १. १०)। पुनानः सोम धारये-(सा० ६७५-६)त्यन्तरोत्सेधनिषेधौ गौरीवितम् (ऊ० १६. २. १२)। त एकर्चाः। आ जागृविर् (सा० १३५७-६) इति यज्ञायज्ञीयमन्त्यम (ऊ० १६. २. १३)। उद्धरति द्विपदाः। समानमितरम्। त्रिवृत् ॥ २३ ॥ 5

इति। असृक्षत प्र वाजिनः ( सा० १०३४ ) पवमानस्य विश्ववित् ( सा० ६५८ ) पवमानो अजीजनत् ( सा० ८३० ) इति त्रय एकर्चाः। एते असृग्रमिन्दवः (सा० ८३०-२) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) इति तृचौ बहिष्पवमानम्। माध्यंदिने गायत्री-बृहत्यौ सामतृचौ। आर्भवे सौहविषस्योद्धारः। अन्त्यमेव तृचे। 10 इतराण्याद्यासु। समानमितरं दशमेनाह्ना द्वादशाहस्य। सर्वं त्रिवृत्। दशमधर्मा मानसं च द्वादशाहवत् ॥ २३ ॥

उद्भिच्च वलभिच्च द्वे अहनी। तस्योद्भिदो मैधातिथस्य (ऊ० ६. ३. ६) लोके बृहन्निधनं वार्कजम्भं (र० २. ४. ६) रौरवस्य ( ऊ० ७. १. १३ ) मैधातिथम् ( ऊ० ६. ३. ६ ) 15 उभयोर्गौरीवितमनुष्टुभि ( ऊ० ४. १. १३, ७. १. ९ ) समानमितरम् ॥ २४ ॥

इति। व्यूढानामग्निष्टोमानां दशमस्योद्भिदश्च राथन्तरत्वादजाम्यर्थं बृहन्निधनवार्कजम्भवलभिदन्तान्यष्टाविंशतिरहानि सप्तमे मासे व्रतातिरात्रौ त्रिंशत्तमौ ॥ २४ ॥ 20

क्लृप्तमावृत्तेभ्योऽभिप्लवेभ्यः ॥ २५ ॥ 21

---

10. BKMy. 'बृहत्यो स्साम' 'बृहत्यौ साम'

इति । अभिविध्यर्थमादत्र प्रश्लिष्टः ॥ २५ ॥

तत्र विशेषमाह—

आवृत्तानामभिप्लवानां प्रथमस्याभिप्लवस्य प्रथमस्याह्नो मृज्यमानः सुहस्त्ये-( सा० १०७९-८० )त्यैडमौक्ष्णोरन्ध्रमेकस्याम् ( ऊ० ३. २. २ )। कण्वरथन्तरमेकस्याम् ( ऊ० १९. २. १४ ) वरुणसामैकस्याम् ( ऊ० ३. २. ४ ) । त्रिणिधनमायास्यं तिसृषु (ऊ० ८. १. ६)। समानमितरम् ॥ २६ ॥

इति । अस्याह्नो बलभिदश्च बार्हतत्वादजाम्यर्थं कण्वरथन्तरं तद्वशाच्चेह वरुणसाम कल्पितम् ॥ २६ ॥

उद्धरत्युत्तरेभ्यः कण्वरथन्तर-(ऊ० १९. २. १४)वरुणसामानि (ऊ० ३. २. ४)। तृचक्लृप्ता बृहती ॥ २७ ॥

इति । उत्तरेभ्योऽभिप्लवेभ्यः कण्वरथन्तरवरुणसामानि उद्धरेत् । जाम्यर्थभावात् । ततश्च मृज्यमानः सुहस्त्ये-( सा० १०७९-८० ) त्यैडं चाक्ष्णोरन्ध्रं (ऊ० ३. २. २ ) त्रिणिधनं चायास्य-(ऊ० ८. १. ६)मिति तृचाभ्यामेव क्लृप्ता बृहतीत्यर्थः । तत्राभिप्लवाभ्यां पृष्ठ्येन पुनश्चाभिप्लवाभ्यामित्यावृत्तैः षडहैरष्टमो मासः । तथान्ये त्रयः । द्वादशेऽपि मासेऽभिप्लवः पृष्ठ्योऽभिप्लवः इत्यभिविंशतिरहानि । विंशे गोआयुषी ॥ २७ ॥

तयोः क्लृप्तिमाह—

सांवत्सरिके गोआयुषी । तयोरैकाहिके बृहत्यौ ॥ २८ ॥

इति । सांवत्सरेभ्य आयुर्गौरिति क्रमः । तत्राजाम्यर्थं वार्कजम्भकल्पनमित्युक्तम् । इह तु तयोर्व्यतिहाराज्जाम्यभावात् बृहत्यावैकाहिक्यौ ।

1. KMy. °वृत्यर्थ मानन्दत्र प्रश्विष्टः, AB. °द्धचर्थमानन्दत्र प्रश्विष्दः, T. °वृद्धयर्थमादतृ प्रस्त्यष्ट °वृद्धचर्थमात्र प्रश्लिष्टः for विध्यर्थमादत्र प्रश्लिष्टः

19. T. संवत्सरेवत्यायुः for सांवत्सरेभ्य मायुर्

तद्यथा गौर्वार्कजम्भस्य लोके दैर्घश्रवसस्य वार्हदुक्थमिति आयुषो वार्कजम्भस्य लोके मैधातिथं तस्य रौरवमिति च ॥

इति प्रथमः खण्डः । १ ॥

---

## द्वितीयः खण्डः

अथ छन्दोमदशाहः । तस्य प्रथमस्याह्नः क्लृप्तिमाह—

अस्य प्रत्नामनुद्युतम् (सा० ७५५-६३) एते सोमा अभि प्रियं (सा० ११७८-८६) सोमः पुनानो अर्षति (सा० ११८७-९५) सोमा असृग्रमिन्दवः (सा० ११९६-२०४) पवस्व वृष्टिमासु नः (सा० १३३५-९) प्र ते धारा असश्चतः (सा० १७६१-४) पवमानस्य ते कवे (सा० ६५७-९) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्न आ याहि वीतये (सा० ६६०-७१) इत्याज्यानि ॥ २ ॥

प्र सोमासो विपश्चितः (सा० ७६४-६) गायत्रं चाश्वं (ऊ० ६. २. १२) च सोमसाम (ऊ० १. २. १२) चाशुभार्गवं (ऊ० ११. २. ११) मार्गीयवं (ऊ० १८. १. ११) चार्भीकं (ऊ० १९. २. १५) चैडं च सौपर्णं (ऊ० १९. २. १६) रौहितकूलीयं (ऊ० १४. १. १४) च । प्र सोम देववीतये (सा० ७६७-८) पज्रं (ऊ० ६. २. १३) च द्वैगतं (ऊ० १८. १. १२) च पौरुहन्मनं (ऊ० १८. १. १३) च हारायणं (ऊ० १८. १. १४) च द्विहिंकारं (ऊ० १९. २. १७) च गौङ्गवं (ऊ० ९. २. १९) च यौधाजयं (ऊ० १. २. १३) चौशनम् (ऊ० १. १. ४) अन्त्यम् ॥ २ ॥

[ इति माध्यंदिनः पवमानः ]

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १.१.६) च कालेयं (ऊ०१.१.७) च ॥ ३ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-(सा० ६८९-८१)ति गायत्रसंहिते (ऊ० १. २. १४) शैशवं (ऊ० १९. २. १८) च भासं (ऊ० १८. १. १६) काक्षीवतं (ऊ० १८. १. १५) च जराबोधीयं (ऊ० १०. २. १०) च । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफा-ऊ० १. १. ९)क्षारे (ऊ० १४. १. १७)। प्र सुन्वानायान्धस (सा० १३८६-८) इति गौरीवितं (सा० ६. २. १७) च वैश्वामित्रं (ऊ० १९. २. १९) च । असावि सोम इन्द्र त (सा० ६९७) इति यस्य योनिः। पदनिधनं च शुद्धाशुद्धीयं (ऊ० १८. १. १७) स्वारं च कौत्सम् (ऊ० १८. २. २०) औरुक्षयम् (ऊ० १९. २. २१)। अदर्दरुत्समसृज (सा० ९६५) इत्येतयोरुत्तरम्। औदल-(ऊ० ११. २. ३) गौतमे (ऊ० ११. २. १३)। कावम् (ऊ० १. १. १३) अन्त्यम् ॥ ४ ॥

[ इत्यार्भवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ५ ॥

सर्वमष्टाचत्वारिंशम् ॥ ५ ॥

इति द्वितीयः खण्डः ॥ २ ॥

---

## तृतीयः खण्डः

**द्वितीयस्याह्नः—**

पवस्व वाचो अग्रियः (सा० ७७५-७) पवस्वेन्दो वृषा सुतो (ऊ० ७७८-७८०) वृषा सोम द्युमाँ असि (सा० ७८१-३) वृषा...

ह्यसि भानुना (सा० ७८४-६) एष देवो अमर्त्यं (सा० १२५६-६५) इति दशर्चस्य तृचमुद्धरत्युत्तमम् । एष उ स्य वृषा रथ (सा०१२७४-६) एष वाजी हितो नृभिर् (सा०१२८०-५) एष कविरभिष्टुतः (सा०१२८६-६१) उच्चे शुष्मासो अस्थुः (सा० १७१४-१७) पवमानस्य ते वयम् (सा० ७८७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निं दूतं वृणीमहे (सा० ७६०-८०२) इत्याज्यानि ॥ २ ॥ वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च यौक्ताश्वं (ऊ० १. २. १६) च सुरूपं (ऊ० १८. १. ८) च हरिश्रीनिधनं (ऊ० २०. १. १) चाजिगं च (ऊ० ११. २. १४) स्वारं च सौपर्णं (ऊ० ११. २. १५) छन्दस्यं च (ऊ० ४. १. २) यौक्ताश्वं (ऊ० ७. १. २) चर्षभश्च पवमानः (ऊ० १८. १. १६)। पुनानः सोम धारये-(सा० ६७५-६)ति समन्तं (ऊ० ६. २. २) च दैर्घश्रवसं (ऊ० ११. २. १६) च पृष्ठं (ऊ० १८. १. २०) च यशश्च (र० ५. १. १०) कौल्मलबर्हिषम् (ऊ० १८. १. २१) आयास्ये (ऊ० १.२.२०, ११.१.१) । वृषा शोण (सा० ८०६-८) इति पार्थम् (ऊ० ७. १. ६) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

समन्त-(ऊ० ६.२.२)दैर्घश्रवसे (ऊ० ११.२.१६) आद्यायाम् । अन्यानि तिसृषु । माध्यंदिने चेदेको द्वौ वा बृहत्यामेवे-(ला०श्रौ०६.३.१६)ति वचनात् । एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यात् । द्वौ तस्यामेवे-(ला० श्रौ० ६. ३. १२-३)ति ॥ ३ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च श्यैतं (ऊ० २. १. ३) च माधुच्छन्दसं (ऊ० २. १. ४) च ॥ ४ ॥

इति पृष्ठानि ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं च हाविष्मतं (ऊ० २. १. ५) च शाम्मदं (ऊ० २०. १. २) च दावसुनिधनं (ऊ० २०. १. ३) चासितं (ऊ० ११. २. १०) चाश्वसूक्तं (ऊ० २०. १. ४) चैश स्य धारया सुतः (सा० १२३४-५) पवस्व देव वीतये (सा० १४२६-८) शङ्कु-(ऊ० १८. २. १) सुज्ञाने (ऊ० ११. २. १९)। अयं पूषा रयिर्भगः (सा० ८१८-२०) इति गौरीवितं (ऊ० ७. १. ६) चैडं च कौत्सम् (ऊ० २०. १. ५) भर्गश्चा-(र० ३. १. ११)सितं (ऊ० ११. २. २०) च यद्वाहिष्ठीयं (ऊ० १४. १. १४) च क्रौञ्चे (ऊ० १५. १. १७; २. १. ६)। एतेषामेव प्रथमोत्तमे। वृषा मतीनां पवत (सा० ८२१-३) इति सामम् (सा० २.१.१०) अन्त्यम् ॥ ५ ॥

[इत्यार्भवः पवमानः ॥]

शङ्कुसुज्ञाने एकर्चयोः ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

स्वान्युक्थानि ॥ ७ ॥

साकमश्वम् (ऊ० १. १. १५) एवा ह्यसि वीरयु-(सा० ८२४-६)रित्या-महीयव-(ऊ० २.१.११)माष्टादंष्ट्र-(ऊ० २.१.१२)मित्युक्थानि। सर्वं चतुश्चत्वारिंशम् ॥ ७ ॥

इति तृतीयः खण्डः ॥ ३ ॥

---

## चतुर्थः खण्डः

तृतीयस्याह्नः—

दविद्युतत्या रुचै-(सा० ६५४-६)ते असृग्रमिन्दवो (सा० ८३०-२) राजा मेधाभिरीयते (सा० ८३३-५) तन्त्वा नृम्णानि बिभ्रतम् (सा० ८३६-४०) एष धिया यात्यण्व्या (सा० १२६६-७२) असृग्रमिन्दवः पथा (सा० ११२८-३६) पवमाना असृक्षत (सा० १६९९-१७०१) अपघ्नन् पवते मृध (सा० १२१३-५) इषे पवस्व धारया (सा० ८४१-३) ॥

इति बहिष्पवमानम् ॥

अग्निनाग्निः समिध्यते (सा० ८४४-५५) इत्याद्यानि ॥ २ ॥

उच्चा ते जातमन्धसः ( सा० ६७२-४ ) इति गायत्रं च क्षुल्लकवैष्टम्भं (ऊ० २. १. १३) च सौमित्रं (ऊ० २०. १. ६) चैटतं (ऊ० २०. १. ७) च साकमश्वं ( ऊ० २०. १. ८ ) च विलम्बसौपर्णं ( ऊ० २०. १. ९ ) च । अभि सोमास 5 आयवः (सा० ८५६-८ ) इति पौरुमद्गं (ऊ० २. १. १४) च सद्योविशीयं (ऊ० १२. २. १६) च गौतमं (ऊ० २. १. १५) चान्तरिक्षं (र० १. १. ६) चाच्छिन्द्रं ( ऊ० ४. २. २ ) च मैधातिथं (ऊ० ९. ३. ६ ) चाष्कारणिधनं च काण्वम् (ऊ० २. १. १६)। तिस्रो वाच ( सा० ८५९-६१ ) इत्याङ्गिरसां 10 संक्रोशो-(ऊ० २. १. १७)ऽन्त्यः ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

पौरुमद्गं प्रथमायाम् ॥

रथन्तरं च (र० १. १. १) वामदेव्यं ( ऊ० १. १. ५ ) च महावैष्टम्भं (ऊ० २. १. १८) च रौरवं ( ऊ० २. १. १७ ) 15 च ॥ ४ ॥

इति पृष्ठानि ॥

तिस्रो वाच उदीरत ( सा० ८६८-७१ ) इति गायत्रं च पाष्ठौहम् (ऊ० २. १. २०) ऐडं सैन्धुक्षितम् (ऊ० १५.१.१९) औशन-( ऊ० २०. १. १० ) वैरूपे (ऊ० २०. १. ११) स्वे 20 उष्णिक्ककुभौ । आ सोता परि षिञ्चत (१३९४-५) सखाय आ निषीदते-(११५७-९)ति वाचःसाम शौक्तं च । सुतासो मधुमत्तमा ( सा० ८७२-४ ) इति गौरीवितं (ऊ० २. २. ३) च साध्रं (ऊ० २०. १. १२) च श्यावाश्वं (ऊ० २०. १. १३) च 24

20. KA. द्वे, A[2-3] ते for स्वे

त्रीणि च त्वाष्ट्रीसामानि ऐडं स्वारं त्रिणिधनम् (ऊ० १६. १. २; ६. १. १८; २. २. ४) पवित्रं त (सा० ८७५-७) इत्यारिष्टमन्त्यम् (र० १. १. ८) ॥ ५ ॥

गौरीवितमेकर्चे। स्वारं त्वाष्ट्रीसाम द्वयोराद्यम् ॥ ५ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

5 स्वान्युक्थानि ॥ ७ ॥

प्रमंहिष्ठीयं (ऊ० २. २. ५) हारिवर्णं (ऊ० २. २. ६) तैरश्च्य (ऊ० २. २. ७)मित्युक्थानि। सर्वं चत्वारिंशम्। गौतमश्चत्वारिंशम् इति सूत्रम्। त्रयोदशभ्यो हिंकरोति। स तिसृभिः स नवभिः स एकया। त्रयोदशभ्यो हिंकरोति स एकया स तिसृभिः 10 स नवभिः। त्रयोदशभ्यो हिंकरोति स नवभिः स एकया स तिसृभिरिति त्रिणवाद्यावत् कल्पिता विष्टुतिः। नैकान्नचत्वारिंशेन स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तूयात्। स आस्कन्दो नाम ॥ ७ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

---

## पञ्चमः खण्डः

15 चतुर्थस्याह्नः—

पवमानो अजीजनत् (सा० ८८६-९१) पुनानो अक्रमीदभि (सा० ९२४-६) प्र यद्गावो न भूर्णयः (सा० ८९२-७) आशुरर्ष बृहन्मते (सा० ८९८-९०३) बभ्रवे नु स्वतवसे (सा० 19 १४४४-६) प्र स्वानासो रथा इव (सा० १११९-२७)

---

4. KMy. एकर्चयोः for एकर्चे
7. MySK. चत्वारिंशे for चत्वारिंशम्
10. S. नवभिः for तिसृभिः
11. KMyBA. नैकाह्न for नैकान्न

हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्निर्वृत्राणि जङ्घनत् ( सा० १३९६-८ ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

इत्याज्यानि ॥

अयं वामिन्द्रो दधीयं वामस्ये-(सा० ९१०-१८)त्युत्तराणि आज्यानि ॥२॥

पवस्व दक्षसाधन (सा० ६१९-२१) गायत्रं चाथर्वणं (र० १. १. ६) च निधनकामम् (ऊ० २. २. ८) अदारसृत् (ऊ० ७. २. २) सत्रासाहीयम् (ऊ० १५. २. ९)। तवाहं सोम रारणे-( सा० ६२२-३ )ति आष्टादंष्ट्रं (ऊ० २. २. ६) चार्कपुष्पं (ऊ० २०. १. १४) च वार्हदुक्थं (ऊ० २०. १. १५) चँ माण्डवं (ऊ० २०. १. १६) च विदावस्विति यस्य निधनम्। आभीशवं (ऊ० २. २. २०) च स्वःपृष्ठं चाङ्गिरसम् (ऊ० २. २. ११)। सोमः पवते जनिता मतीनाम् (सा० ९४३-५) इति जनित्रम् (ऊ० ८. २. १) अन्त्यम् ॥३॥

[ इति माध्यंदिनः पवमानः ॥]

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) च त्रैशोकं (ऊ० २. २. १३) च पृश्नि (ऊ० २. २. १४) च ॥ ४ ॥

इति पृष्ठानि ॥

परि प्रिया दिवः कविर् ( सा० ९३५-७ ) इति गायत्रं चौर्णायवं (ऊ० २. २. १५) च बृहच्च (र० १. १. ५) भारद्वाजं (ऊ० १५. २. १०) मार्गीयवं च यदीनिधनम् (ऊ० २०. १. १७)। इमे उष्णिक्ककुभौ॥

त्वं ह्यङ्ग दैव्य ( सा० ६३८-९ ) सोमः पुनानः ऊर्मिणे-(सा० ६४०-२)ति बृहत्कातीषादीये (ऊ० २. २. १६-७) ॥

पुरोजिती वो अन्धस ( सा० ६५७-९ ) इति गौरीवितं (उ० ४. १. १३) च वार्कजम्भं यदीनिधनं (र० ५. २. १) शुद्धाशुद्धीयं च यदिडाभिरैडम् (ऊ० २०. १. १८) आकूपारं (ऊ० १६. १. ८) च यन्नत्रमेऽह्न्यान्धीगत्रम् (ऊ० १.१.१२)। प्र त आश्विनीः पवमान धेनवः ( सा० ८८६-८ ) इति लैशम् (ऊ० ८. २. २) अन्त्यम् ॥ ५ ॥

[ इत्याभवः पवमानः ॥ ]

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥ ६ ॥

स्वान्युकृथानि। उद्धरति षोडशिनम् ॥ ७ ॥

सैन्धुक्षितं (ऊ० २. २. २०) सौभरं (ऊ० १. १. १६) वसिष्ठस्य प्रिय-(ऊ० ३. १. १)मित्युकृथानि। सर्वं षट्त्रिंशम् ॥ ७ ॥

इति पञ्चमः खण्डः ॥ ५ ॥

---

षष्ठः खण्डः

पञ्चमस्याह्नः—

उच्चे शुष्मास ईरते (सा० १२०५-९) इति पुरस्तात् पर्यासस्य पञ्चर्चम् ॥ १ ॥

पवमानस्य विश्ववित् (सा० ६५८-६०) यत्सोम चित्रमुक्थ्यम् (सा० ९९९-१००१) प्र सोमासो अधन्विषुः (सा० ९६१-७) प्र कविर्देववीतये (सा० ९६८-७४) पवं यवं नो अन्धसा (सा० ९७५-८) उच्चे शुष्मास

ईरते (सा० १२०५-६) यारतेधारा मधुश्चुतः ( सा० ६७६-८१ ) इति बहिष्पवमानम् ॥

अग्ने स्तोमं मनामहे (सा० १४०५-७) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

पुरूरुणा चिद्ध्यस्ति ( सा० ६८५-७ ) उत्तिष्ठन्नोजसा सह (सा० ६८८-६०) इन्द्राग्नी युवामिमे (सा० ६६१-३) इत्याज्यानि ॥ २ ॥

स्वा गायत्री ॥ ३ ॥

अर्षा सोम द्युमत्तम ( सा० ६६४-६ ) इति गायत्रं च यण्वं (र० १. २. १ ) च शाकलं ( ऊ० ३. १. ३ ) च वार्शं (ऊ० ३. १. ४) च ॥

सोम उ ष्वाणः सोतृभिर् (सा० ६६७-८) इति मानवं (ऊ० ३. १. ५) चानूपं ( ऊ० ३. १. ६ ) च दैष्णवे (ऊ० २०. १. १६-२०) च । तवाहं सोम रारणे-( सा० ६२२-३ )त्येतेषां प्रथमे । यौक्तस्रुचं (ऊ० २०. २. १) वाम्रन् (ऊ० ३. १. ७) अग्नेस्त्रिणिधनम् (ऊ० ३. १. ८)। इन्दुर्वाजी पवते गोन्योघा (सा० १०१९-२१) इति सम्पान्त्या (ऊ० ८. २. ५) ॥ ४ ॥

[ इति माध्यंदिनः पवमानः ॥]

मानवमाद्यायाम् । बृहतीप्रथमत्वाद्वैष्णवोत्तरं च ऊहपाठः ॥ ४ ॥

रथन्तरं च (र० १. १. १) वामदेव्यं (ऊ० १. १. ५) च बार्हद्गिरं (र० १. २. २) च रायोवाजीयं ( र० १. २. ४ ) च ॥ ५ ॥

इति पृष्ठानि ॥

असाव्यंशुर्मदाये-( सा० १००८-१० )ति गायत्रं च संतनि (ऊ० ३. १. १०) चाध्यर्धेडं च सोमसाम ( ऊ० २०. २. २ ) गौषूक्तं (ऊ० ८. २. १६) च स्वे उष्णिवककुभौ । अभि द्युम्नं

बृहद्घशः (सा० १०११-२) प्राणा शिशुर्महीनाम् (सा० १०१३-५) इति च्यावनक्रोशे ॥

पवस्व वाजसातये (सा० १०१६-८) इति गौरीवितं (ऊ० ३. १. १३) चर्षभश्च शाक्वरस् (र० १. १. १५) त्वाष्ट्रीसाम च यद् द्व्यनुतोदम् (ऊ० ८. २. ६) त्रासदस्यवम् (ऊ० २०. २. ३) अष्टेडः पदस्तोभः (र० १. २. ६)। गोवित् पवस्वे- (सा० ९५५-७)ति द्व्यभ्याघातं लौशम् (ऊ० ८. २. ७) अन्त्यम् ॥ ६ ॥

[ इत्यार्भवः पवमानः ॥ ]

च्यावनक्रोशे एकर्चयोः ॥ ६ ॥

यज्ञायज्ञीयमग्निष्टोमसाम (ऊ० १. १. १४) ॥

स्वान्युक्थानि ॥ ७ ॥

संजयं (ऊ० ३.१.१६) सौमित्रं (ऊ० ३. १. १७) महावैश्वामित्र- (ऊ० ३.१.१८)मित्युक्थानि। सर्वं द्वात्रिंशम् ॥ ७ ॥

षष्ठस्याह्नः—

पवस्व देववीरती-(सा०१०३७-४६)ति दशर्चस्य तृचमुद्धरत्युत्तमम्। ऐडमौक्ष्णोरन्ध्रमुद्धरति (ऊ० ३. २. २)। स्वारं वैदन्वतमुद्धरति (ऊ० ३. २. ६)। गौरीवितमनुष्टुभि (ऊ० ३. २. १३)। अथ यदेव पृष्ठ्यस्तोमस्य षष्ठमहस्तदेतत् तृचक्लृप्तं त्रिंशम् ॥ ८ ॥

इति। असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) पवस्व देववीरिति (सा० १०३७-४६)। त्रिंशस्य विप्लुतिः ॥ ८ ॥

इति षष्ठः खण्डः ॥ ६ ॥

---

2, S. Om, च्यावनक्रोशे ··· लौशमन्त्यम् (L. 8)

सप्तमः खण्डः

सप्तमस्याह्नः—

ये सोमासः परावति ( सा० ११६३-५ ) प्र स्वानासो रथा इवा-(सा० १११६-२७) सृग्रमिन्दवः पथा (सा० ११२८-३६) यवं यवं नो अन्धसा ( सा० ६७५-८ ) आ ते दक्षं मयोभुवम् (सा० ११३७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

ऋतावानं वैश्वानरम् ( सा० १७०८-१० ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

प्र वो मित्राय-इन्द्रा याहि चित्रभानो-तमीडिष्वे-( सा० ११४३-५१ ) त्याज्यानि ॥

स्वा गायत्री ॥ ३ ॥

वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं च सन्तनि (ऊ० ४. १. १) चैडं सौपर्णं (ऊ० ४. १. २) रोहितकूलीयं च ॥

पुनानः सोम धारये-(सा० ६७५-६)ति सोमसाम (ऊ० १७. १. १६) च कण्वरथन्तरं (ऊ० ४. १. ४) च पौरुमद्गं (ऊ० १७.१.१०) च गौङ्गवं च ( ऊ० ४.१.५ ) द्विनिधनमायास्यम् (ऊ० ४. १. ६)। प्र काव्यमुशनेव ब्रुवाण ( सा० १११६-८ ) इति वाराहम् (ऊ० १६. २. १६) अन्त्यम् ॥ ४ ॥

सोमसामैकर्च्चे ॥ ४ ॥

स्वानि पृष्ठानि ॥ ५ ॥

बृहच्च (र० १. १. ५) वामदेव्यं (ऊ० १. १. ५) चाभिनिधनं च काण्वं ( ऊ० ४. १. ८ ) वैखानसं ( ऊ० ४. १. ६ ) चेति पृष्ठानि ॥ ५ ॥

यस्ते मदो वरेण्य (सा० ८१५-७) इति गायत्रं तिसृष्वग्नेरर्क एकस्याम् (र० १. २. १) जराबोधीयमेकस्याम् (ऊ० ६.२.७)।

दक्षनिधनमेकस्याम् (ऊ० ४. १. १०) । स्त्रे उष्णिक्ककुभौ (ऊ० ४. १. ११-१२) ॥

एष स्य धारया सुतः (सा० ५८४-५) सखाय आ निषीदते-(सा० ११५७-६)इति शार्करप्लवौ (ऊ० ४. १. ११-२) ॥

5 पुरोजिती वो अन्धस (सा० ६९७-९) इति गौरीवितं (ऊ० ४. १. १३) च कार्तयशं (ऊ० ४. १. १४) चात्रेयं (ऊ० १७. १. १७) च गौतमं (ऊ० १७. १. ४) च द्विपदासु सौहविषम् (सा० ११६०; ऊ० ४. १. १५) । प्रो अयासीद् (सा० ११५२-४) इत्यैडं यज्ञसारथ्यन्त्यम् (ऊ० १७.१.५) ॥६॥

10 [ इत्यार्भवः पवमानः ॥ ]

गौरीवितमेकस्याम् ॥

यज्ञायज्ञीयम् (ऊ० १. १. १४) अग्निष्टोमसाम ॥

स्त्रान्युक्थानि ॥ ७ ॥

वात्सप्रं (ऊ० २. २. १९) सौश्रवसं (ऊ० ४. १. १८) वीङ्क-
15 (ऊ० ४. १. १९)मित्युक्थानि । सर्वमष्टादिशम् ॥ ७ ॥

इति सप्तमः खण्डः ॥

---

## अष्टमः खण्डः

अष्टमस्याह्नः—

हिन्वन्ति सूरमुस्रयः (सा० ९०४-६) एते सोमा अभि प्रियं
20 (सा० ११७८-८६) सोमः पुनानो अर्षति (सा० ११८७-९५)

---

11. S. गौतमम् for गौरीवितम्

इत्थे शुष्मासो अरथुर् (सा० १७१४-७) अया धीती परि स्रव ( सा० १२१०-२ ) ॥ १ ॥

इति बहिष्पवमानम् ॥

विश्वेभिरग्ने अग्निभिर् ( सा० १६१७-६ ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥ 5

[ इत्याज्यानि ॥ ]

आष्टमिकानि ॥ २ ॥

अध्वर्यो अद्रिभिः सुतम् ( सा० १२२५-७ ) इति गायत्रं च वैरूपं (ऊ० ४. १. २०) चाशु च भार्गवं (ऊ० ४. २. १) विलम्बसौपर्णं ( ऊ० ४. २. ६ ) चाभि सोमास आयव (सा० 10 ८५६-८ ) इति द्विहिंकारं च ( ऊ० ४. २. ७ ) गायत्रपार्श्वं ( ऊ० ४. २. ८ ) च पौरुहन्मनं ( ऊ० ४. २. ६ ) च हारायणं ( ऊ० ४. २. ११ ) चाच्छिद्रं (ऊ० ४. २. १२)। उ हु वा इ शिशुन् ( सा० ११७५-७ ) इति वासिष्ठम् ( ऊ० १७. १. ७ ) अन्त्यम् ॥ ३ ॥ 15

अच्छिद्रमध्यास्यायाम् ॥ ३ ॥

स्वानि पृष्ठानि ॥ ४ ॥

आष्टमिकानि ॥

पवस्व देव आयुषग् ( सा० १२३५-७ ) इति गायत्रं तिसृषु । स्वाशिरामर्कं एकस्याम् ( र० १. ३. २ )। काक्षीवतमेकस्याम् 20 (ऊ० ४. २. १६)। भासमेकस्याम् ( ऊ० २. ३. ६ )। स्वे उष्णवककुभौ (ऊ० ५. १. १-२) ॥ 22

20. KMy. Om. कक्षीवतमेकस्याम्; BT. कावम् for काक्षीवतम्

आष्टमिक्यौ ॥

अभी नो वाजसातमम् ( सा० १२३८-४० ) इति गौरीवितं (ऊ० ५. १. ३) चैडं च कौत्सम् ( ऊ० ५. १. ४ ) औदलं ( ऊ० ५. १. ८ ) च रयिष्ठं (ऊ० ५. १. ७) च स्वासु धर्म (सा० १२४१-३ ; ५. १. ६)। द्वा उ धर्त्ते (ऊ० १२२८-३०) स्यैडं शार्ङ्गम् (ऊ० १७. १. २०) अन्त्यम् ॥ ५ ॥

[ इत्यार्भवः पवमानः ॥ ]

गौरीवितमेकस्याम् ॥ ६ ॥

यज्ञायज्ञीयम् (ऊ० १. १. १४) अग्निष्टोमसाम ॥

स्वान्युक्थानि ॥ ६ ॥

आष्टमिकानि । सर्वमष्टाविंशम् ॥ ६ ॥

इति अष्टमः खण्डः ॥ ८ ॥

---

नवमः खण्डः

नवमस्याह्नः—

उपो षु जातमप्तुरम् (सा० १३३५-७) एष देवो अमर्त्यः (सा० १२५६-६५) स सुतः पीतये वृषा ( सा० १२६२-७ ) अया पवस्व धारया ( सा० १२१६-८ ) पवमानस्य ते कवे (सा० ६५७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

उप त्वा रण्वसंदृशम् ( सा० १७०५-७ ) इति होतुराज्यम् । स्वान्युत्तराणि ॥ २ ॥

[ इत्याज्यानि ॥ ]

---

2. KMy. गौषूक्तं for गौरीवितं

नावमिकानि ॥ २ ॥

पवमानस्य जिघ्नत (सा० १३१०-२) इति गायत्रं चादारसृच्चे-( ऊ० ४. १. १४ )डानां च संश्वारः ( ऊ० ५. १. १६ ) ऋषभश्च पावमानः (ऊ० ५. १. २०)। परीतो षिञ्चता सुतम् (सा० १३१३-५ ) इति देवरथानं ( र० १. ३. ३ ) च संकृति (र० १. ३. ४) च दैर्घश्रवसं ( ऊ० ५. २. ४ ) च दीर्घतमसश्चार्को (र० १. ३. ७) हा उ हु वा अक्रान् (सा० १२५३-५) इति वासिष्ठम् (ऊ० १७. १. १) अन्त्यम् ॥ ३ ॥

दीर्घतमसोऽर्कोऽध्यास्यायाम् ॥ ३ ॥

स्वानि पृष्ठानि ॥ ४ ॥  10

नावमिकानि ॥ ४ ॥

त्वं सोमासि धारयुर् (सा० १३२३-५) इति गायत्रं तिसृष्वाश्व-सूक्तमेकस्याम् (ऊ० ५. २. ११)। प्रतीचीनेडं काशीतमेकस्याम् (ऊ० ५. २. १४)। ह्वाविष्कृतमेकस्याम् (ऊ० ५. २. १५)। स्वे उष्णिक्ककुभौ (ऊ० ५. २. १६-१७) ॥  15

नावमिक्यौ ॥

परि त्यं हर्यतं हरिम् (सा० १३२९-३१) इति गौरीवितं (ऊ० ५. २. १८) च वाङ्निधनं च क्रौञ्चं (ऊ० २०. २. ४) साध्रं ( ऊ० ६. १. २ ) स्वासु विधर्म ( सा० १३३२-४; ऊ० ६. १. ४ )। असावि सोमो अरुषो वृषा हरिर् (सा० १३१६-१८) इति ऐडं यामम् (ऊ० १७.२.४) अन्त्यम् ॥ ५ ॥  20

[ इत्यार्भवः पवमानः ॥ ]

गौरीवितमेकस्याम् ॥ ५ ॥

यज्ञायज्ञीयम् (ऊ० १. १. १४)अग्निष्टोमसाम ॥

स्वान्युक्थानि ॥ ६ ॥  25

नावमिकानि। सर्वं पञ्चदशम् ॥ ६ ॥  26

---

26. S. °विषम् for °वशम्

दशमस्याह्नः—

अथ यदेव छन्दोमवतो दशरात्रस्य नवममहस्तदत्र दशमम्। तस्य पर्यू षु (सा० १३६४-६) इति गौरीवितमेकस्याम् (ऊ० २०. २. ५)। औष्णिहमोकोनिधनमेकस्याम् (ऊ० २०.२.६) श्यावाश्वमेकस्याम् (ऊ० ६. १. १८)। आन्धीगवं तिसृषु (ऊ० ६. १. १६) ॥ ७ ॥

समानमितरम् ॥ ८ ॥

इति। असृक्षत प्र वाजिनः (सा० १०३४-६) पवमानस्य विश्ववित् (सा० ६५८-६०) पवमानो अजीजनद् (सा० ८८६-६१) एते असृग्रमिन्दवः (सा० ८३०-२) पवस्वेन्दो वृषा सुतः (सा० ७७८-८०) अस्य प्रत्नामनु द्युतम् (सा० ७५५-७) इति बहिष्पवमानम् ॥

सुषमिद्धो न आ वह (सा० १३४७-५०) यदद्य सूर उदिते (सा० १३५१-३) उ त्वा मन्दन्तु सोमा (सा० १३५४-६) इन्द्राग्नी आ गतं सुतम् (सा० ६६६-७१) इत्याज्यानि। सुषमिच्चतुर्ऋचे। यथागोत्रमुद्धारः ॥

उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं चामहीयवं (ऊ० १. १. १) चाजिगं (ऊ० ६. १. ६) चाभीकं (ऊ० ६. १. १०) च। पुनानः सोम धारये-(सा० ६७५-६)ति उत्सेधश्च (ऊ० ६. १. ११) मैधातिथं (ऊ० १३. १. ७) च निषेधश्च (ऊ० ६. १. १३)श्चाजागृवि-(सा० १३५७-६)रित्यौशनम् (ऊ० १७. १. ५) अन्त्यम् ॥

रथन्तरं (र० १. १. १) च वामदेव्यं (ऊ० १. १. ५) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) चेति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-(सा० ६८६-६१)ति गायत्रसंहिते (ऊ० १. १. ८)। पवस्वेन्द्रमच्छे-(सा० ६६२-६)ति सफ-(ऊ० १.१.६) रोहितकूलीये (ऊ० ६. १. १७)। पर्यूषु प्र-(सा० १३६४-६)ति

गौरीवितम् (ऊ० २०. २. ५) अध्यास्यायाम्। औष्णिहमौक्षो निधनं (ऊ० २०. २. ६) द्वितीयायाम्। श्यावाश्वं (ऊ० ६. १. १८) तृतीयायाम्। आन्धीगवं (ऊ० ६. १. १९) तिसृषु। परि प्र धन्वे-(सा० १३६७-९)ति वाजजित् (ऊ० १७. १. ६) सूर्यवतीषु (ऊ० १३७०-२) काव-(ऊ० ९. २. ११)मन्त्यम्॥ 5

यज्ञायज्ञीयम्-(ऊ० १.१.१४) अग्निष्टोमसाम। दशधर्मं मानसं च द्वादशाहवत्। सर्वाणि स्तोत्राणि चतुर्विंशानि। अत्र केवलमृक्सामान्येव दशमादतिदिश्यन्ते। न स्तोमोऽपि। तेन अग्निष्टोममानसे अपि चतुर्विंशे एवेति सूत्रे निर्णयः॥

महाव्रतं चातिरात्रश्च। महाव्रतं चातिरात्रश्च॥ 10

इति सांवत्सरिकं मतम्। अतिरात्रः प्राकृतः॥

इति नवमः खण्डः॥

आदित्यानामयनं समाप्तम्॥

इति श्रीवामनार्यसुनवरदराजविरचितायाम् आर्षेयकल्पव्याख्यायां सत्रेषु द्वितीयोऽध्यायः आदितो दशमः॥ १०॥ 15

8. KMy. स्तोमे for स्तोमो

11. BKMyT. प्रकृतः for प्राकृतः; T. अतिरात्रं प्रकृतं, B अतिरात्राः प्राकृताः for अतिरात्रः प्राकृतः

### एकादशोऽध्यायः

# पुरस्तात्पृष्ठ्यम्

### अङ्गिरसामयनापराख्यम्

### प्रथमः खण्डः

अतिरात्रश्चतुर्विंशं प्रायणीयमहः पृष्ठ्यः षडहश्चत्वारस्त्रिवृतोऽभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयस्त्रिवृतोऽभिप्लवाः षडहाः पृष्ठ्यः षडहस्त्रिवृद् बृहस्पतिस्तोमस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भण एकस्त्रिवृदभिप्लवः षडहो द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च बलभिच्च द्वे अहनी चत्वारस्त्रिवृतोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थो द्वौ त्रिवृताभिप्लवौ षडहौ पृष्ठ्यः षडहः आयुश्च गौश्च द्वे अहनी छन्दोमदशाहश्चतुर्विंशं प्रथममहर्द्वे अष्टाविंशे त्रिंशं द्वात्रिंशं षट्त्रिंशं चत्वारिंशं चतुश्चत्वारिंशमष्टाचत्वारिंशं चतुर्विंशं महाव्रतं चातिरात्रश्चाङ्गिरसां पुरस्तात् पृष्ठ्यम् ( तां० ब्रा० २५. २. १ ) इत्यनुवाकेनाङ्गिरसामयनमुक्तम् । तदेव पुरस्तात् पृष्ठ्यमित्युच्यते ॥

पुरस्तात्पृष्ठ्यस्य क्लृप्तोऽतिरात्रः । क्लृप्तं चतुर्विंशमहः । क्लृप्तः पृष्ठ्यः क्लृप्तं प्रथममहरभिप्लवस्य यथा मध्येपृष्ठ्ये ॥ १ ॥

**अतिरात्रः प्रकृतिवत् । चतुर्विंशं पृष्ठ्यश्च संवत्सरवत् । अभिप्लवस्य प्रथममहर्मध्येद्विपृष्ठवत् ॥ १ ॥**

द्वितीयस्याह्नः स्तोत्रीयानुरूपौ पर्यासः। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति बृहती। समानमितरम्। त्रिवृत् ॥ २ ॥

इति। परीतो षिञ्चता सुत-(सा० १३१३-५)मिति माधुच्छन्दसं (ऊ० ७. १. ३) भर्गः (र० १. ३. ५) ऐडमायास्य-(ऊ० ७.१.४)मिति सामतृचः। त्रिणिधन-(ऊ० ७.१.५)मध्यास्यायाम्। बृहती। अन्यत्समं सांवत्सरिकस्याभिप्लवस्य द्वितीयेनाह्ना। सर्वं त्रिवृत् ॥ २ ॥ 5

क्लृप्तं तृतीयमहर्यथा मध्येपृष्ठ्ये। चतुर्थस्याह्नः स्तोत्रीयानुरूपौ पर्यासः। परीतो षिञ्चता सुतम् (सा० १३१३-५) इति बृहती। समानमितरम्। त्रिवृत् ॥ ३ ॥ 10

इति। पवमानो अजीजनत् (सा० ८८९-९१) पुनानो अक्रमीदभि (सा० ९२४-६) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। उत्तरयोः पवमानयोरन्त्यवर्जमेकर्चाः। परीतो षिञ्चता सुत-(सा० १३१३-५)मिति पृश्न्या-(ऊ० १५. १. ६)थर्वण-(र० २. १. ३) माभीशव-(ऊ० ५. २. ६)मिति सामतृचः। यौधाजय-(ऊ० १.१.३) मध्यास्यायामिति बृहत्याः क्लृप्तिः। इतरत् सर्वं सांवत्सरिकस्याभिप्लवस्य चतुर्थेनाह्ना समम्। सर्वं त्रिवृत् ॥ ३ ॥ 15

क्लृप्तं पञ्चममहर्यथा मध्येपृष्ठ्ये। षष्ठस्याह्नः स्तोत्रीयानुरूपौ पर्यासः। इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्रमेकस्याम्। आश्वसूक्तमेकस्याम् (ऊ० १८. १. ४) वाजदावर्यं एकस्याम् (ऊ० ३. १. २१)। मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)त्यैडमौक्षणोरन्ध्रमेकस्याम् (ऊ० ३. २. २)। वरुणसामैकस्याम् (ऊ० ३. २. ४)। त्रिणिधनमायास्यमेकस्याम् (ऊ० ८. १. ६)। समानमितरम्। त्रिवृत् ॥ ४ ॥ 20 24

---

1. KMyBST. Om. परीतो ··· त्रिवृत् । इति (L. 3)
5. TKMyB. °तृचं for °तृचः

इति। असृक्षत प्र वाजिनः (सा० १०३४-६) एतमु त्यं दश क्षिपः (सा० १०८१-३) पवमानस्य ते कवे (सा० ६५७-९) इति बहिष्पवमानम्। माध्यंदिने गायत्रीबृहत्योः यथोक्तौ सामतृचौ। उत्तरयोः पवमानयोरन्त्यमेव तृचे। समानमन्यत् सांवत्सरिकस्याभि-
5 प्लवस्य षष्ठेनाह्ना ॥ ४ ॥

क्लृप्तमावृत्तेभ्योऽभिप्लवेभ्यः। आवृत्तानामभिप्लवानां प्रथमस्याभिप्लवस्य प्रथमस्याह्नः इन्द्रायेन्दो मरुत्वत (सा० १०७६-८) इति गायत्र-मेकस्याम्। तस्यामेवाश्वसूक्तम् (ऊ० ८. १. ४)। मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)त्यैडमौक्ष्णोरन्ध्रमेकस्याम् (ऊ० २. ३)।
10 तस्यामेव कण्वरथन्तरम् (ऊ० २०. २. ७)। वरुणसामैकस्याम् (ऊ० ३. २. ४)। त्रिणिधनमायास्यमेकस्याम् (ऊ० ८. १. ६)॥ समानमितरम् ॥ ५ ॥

इति। मध्येपृष्ठवदजामित्वार्थमत्र बृहत्यां कण्वरथन्तरं (ऊ० २०. २. ७) कल्पितम्। तद्वशाच्च स्तोमोपपत्त्यर्थं गायत्र्यां
15 वाजदावर्य उद्धृताः ॥ ५ ॥

उद्धरत्युत्तरेभ्यः कण्वरथन्तरम् (ऊ० २०. २. ७)। पुनर्वाजदावर्यः (ऊ० ३. २. १) स्वं लोकमायन्ति ॥ ६ ॥

उक्तमभिप्लवेषु जाम्यभावत्तेभ्यः कण्वरथन्तर-(ऊ० २०. २. ७) मुद्धार्यम्। ततश्च पूर्वस्मिन् पक्षसि वाजदावर्यः (ऊ० ३.२.१)
20 स्वस्थानमेवागच्छन्ति। गायत्रमेकस्याम्। आश्वसूक्त-(ऊ० ८.१.४) मेकस्याम्। वाजदावर्य (ऊ० ३. २ १) एकस्यामिति ॥ ६ ॥

सांवत्सरिके गोआयुषी अविक्लृप्ते ॥ ७ ॥

23 इति। अत्र हि संवत्सरवदायुर्गौरिति क्रमः। ततश्चाजाम्यर्थं

---

3. बृहतीगायत्र्योः for गायत्रीबृहत्योः

19. K. पक्षे for पक्षसि

सांवत्सरिके एव गोआयुषी । न तु मध्येपृष्ठ्यवंदनयोरैकाहिके बृहत्याविदर्थः ॥ ७ ॥

इति प्रथमः खण्डः ॥ २ ॥

---

द्वितीयः खण्डः

छन्दोमदशाहस्य प्रथममहराह—

अस्य प्रत्नामनुद्युतम् (सा० ७५५-६३) एते सोमा अभि प्रियम् (सा० ११७८-८६) अग्न आयूंषि पवसे (सा० १५१८-२०) पवमानस्य ते कवे (सा० ६५७-६) ॥ १ ॥

इति बहिष्पवमानम् ॥

अग्न आयाहि वीतये (सा० ६६०-७१) इत्याज्यानि ॥ २ ॥

प्र सोमासो विपश्चित ( सा० ७६४-६ ) इति गायत्रं चाश्वं (ऊ० ६. २. १२) च सोमसाम (ऊ० १४. १. १३) चाशु-भार्गवम् ( ऊ० ११. २. ११ )। प्र सोम देववीतय (सा० ७६७-८) इति पञ्चं ( ऊ० ६. २. १३ ) गौङ्गवं (ऊ० ६. २. १६) यौधाजयम् ( ऊ० १. २. १३ ) औशनम् (ऊ० १. १. ४) अन्त्यम् ॥ ३ ॥

[ इति माध्यंदिनः पवमानः ॥ ]

रथन्तरं (र० १. १. १) च वामदेव्यं ( ऊ० १. १. ५ ) च नौधसं (ऊ० १. १. ६) च कालेयं (ऊ० १. १. ७) च ॥ ४ ॥

इति पृष्ठानि ॥

स्वादिष्ठया मदिष्ठये-( सा० ६८६-६१ )ति गायत्र-संहिते (ऊ० १. १. ६)। पवस्वेन्द्रमच्छे-( सा० ६९२-६ )ति सफा-(ऊ० १. १. ६)क्षुरे ( ऊ० १४. १. १७ )। प्र सुन्वानायान्धस (सा०

